# शौनकीया अथर्ववेद-संहिता

•

## अभिनव-सायणभाष्य-भूषिता

•

अष्टमकाण्डे अन्त्य-सूक्त-चतुष्टयम्

**नवम-दशम काण्डे**

•

—भाष्यकारः—
वेद-दर्शनाचार्यो महामण्डलेश्वरः
**श्री स्वामी गङ्गेश्वरानन्द उदासीनः**

•

—प्रकाशकः—
सद्गुरु गङ्गेश्वर इण्टरनेशनल वेदमिशन न्यासः
बम्बई : ४०००, २०

गुरु-गङ्गेश्वर-ग्रन्थमालायाः ३१, ३२, ३३ तमः पुष्पगुच्छकः

# शौनकीया अथर्ववेद-संहिता

•

## अभिनव-सायणभाष्य-भूषिता

•

अष्टमकाण्डे अन्त्य-सूक्त-चतुष्टयम्

## नवम-दशम काण्डे

•

—भाष्यकारः—
वेद-दर्शनाचार्यो महामण्डलेश्वरः
**श्री स्वामी गङ्गेश्वरानन्द उदासीनः**

•

—सम्पादकौ—
**वेदान्ताचार्यः श्री स्वामी गोविन्दानन्दः**
**श्री गोविन्द नरहरि वैजापुरकरः**
एम०ए० न्याय-वेदान्त-साहित्याचार्यः
राष्ट्रपति-पुरस्कृतश्च

•

—प्रकाशकः—
**सद्गुरु गङ्गेश्वर इण्टरनेशनल वेदमिशन न्यासः**
**बम्बई : ४०००, २०**

प्रकाशक :
सद्गुरु गङ्गेश्वर इण्टरनेशनल
वेद-मिशन
तुलसी-निवास, ३/३१, डी रोड,
चर्च गेट, बम्बई ४०००,२०



प्रथम संस्करण :
१००० प्रतियाँ
१०४ वीं जन्मजयन्ती
पौष शुक्ल सप्तमी, २०४० वै०



मूल्य :
चालीस रुपये



मुद्रक :
भार्गव भूषण प्रेस
वाराणसी

# प्रस्तावना

'अभिनव-सायणभाष्य'–समलङ्कृतायाः शौनकीयाथर्ववेदसंहितायाः कतिपयकाण्डानां पुष्पगुच्छकोऽयं वेदार्णवोन्मज्जनावदातान्तःकरणानां सुधीवराणां करपाथोजयोः उपहारीकुर्वतामस्माकं मानसममन्दानन्दकल्लोलपटलैः परिपूर्यते ।

वेदत्रयी किल मुख्यतः प्रजाभ्यो जगति इष्टकामदुघायमानं तदीयसहोदरकल्पं यज्ञनारायणमेव साङ्गं समग्रविग्रहात्मकं प्रस्तोतुं प्रक्रमते । परतमस्य परब्रह्मणः प्रस्तुतिस्तत्र क्वाचित्की एव परिदृश्यते । एकतो यजुर्वेदः किल सविस्तरमाध्वर्यवं समुपदिशन् स्वर्गसुखं भूतले समानेतुम् अम्बरतोऽमरान् अवतारयन् सदसि समुपस्थापयति चेत् अपरत ऋग्वेदस्तान् शंसन् सामवेदश्च स्तुवन् प्रसादयति अभीष्टफलदानाय । एवम् वेदत्रयी मुख्यतोऽत्रैव कृतकृत्यतां भजते, इति अकामेनापि वक्तव्यं भवति । मन्ये, अवधार्य रहस्यमिदं स्थिरगतिप्रज्ञेन मन्त्रद्रष्ट्रा अथर्वणा अध्यात्मविद्यापरिपोषकान् विपुलान् मन्त्रान् ऋतम्भराप्रज्ञया दृष्ट्वा सङ्कलय्य, यज्ञादिषु न्यूनातिरेकपूर्तये तज्जन्यदोषशमनाय च गृहीतावतारः अथर्ववेदोऽयं वेदरसिकेभ्य उपायनीकृतः स्यात् । यतो हि वेदेऽस्मिन् यावती अध्यात्मविद्या समुपलभ्यते, नूनं तावती न सा वेदत्रय्याताम् । यद्यप्यत्र रोगनिवारणाय मणिमन्त्रौषधीनां निरूपणम्, शत्रोर्विजयोपायाः, आधिभौतिकसर्पादिबाधाहराः कृत्याद्याधिदैविकपरितापनिवारकाः शान्तिपुष्टिकराश्च नैके उपायाः प्रकाराश्च चर्चिताः, पितृमेध-यज्ञादयोऽपि कर्ममार्गाः समनुसृताः; तथापि अध्यात्म-

विद्यानिरूपणतुलनायां संख्यया महत्त्वेनापि अपरिगणनीया एव ते । कदाचित् कटुकौषधं पाययितुं बालेभ्यो मोदकदानायितमेव तदेतत् स्यात् । निर्गलितार्थस्त्वयं यदथर्ववेदोऽयम् अध्यात्मविद्याप्रस्तुतौ शिष्टान् सर्वानपि वेदान्नूनमतिशेते । आस्तां तावत्, प्रकृतमनुसरामः ।

इत्थं महामहिमशालिनोऽपि अथर्ववेदस्य नैकेषु काण्डेषु सायणाचार्यकृतं भाष्यं सम्प्रति नोपलभ्यते बहोः कालात् । तेन वेदनारायणस्यास्य हार्दमस्फुटीभवत् तस्य वास्तवरसास्वादनेन वेदरसिका वञ्चिताः सन्तोऽकिञ्चना इव संवृत्ताः । विशालतमं वेदचतुष्टयं स्वीयव्याख्यानेन समलङ्कुर्वता सविशेषधिषणाधारिणा सायणाचार्येण एतेषां काण्डानां व्याख्यानमेव न कृतं स्यात्, तत्र काचन अक्षमता वा समनुभूता स्यादिति कथनं न पुनर्युक्तिसहम् । कृतमपि तद्व्याख्यानं महाकालस्य महत्युदरे विलीनमित्येव पक्षो ज्यायान् । इमामेव हार्दिकीं रुजं समनुभूयमानैः सद्गुरुदेववर्यैः पूज्यपादैः श्रीस्वामिगङ्गेश्वरानन्दमहाभागैर्बहोः कालात् वेदार्थविचारणाधिकृता नैके विद्वत्तल्लजाः समनुरुद्धाः खण्डितकाण्डेषु सायणीयसरणिमाश्रित्य भाष्यप्रणयनाय । किन्तु अद्ययावत् तेषां मनोरथोऽयं न सफलीबभूव । अतोऽनन्यगतिकैः सद्गुरुपादैश्चरमतमे वयसि सुबहु कष्टं सोढ्वाऽपि काण्डेष्वेतेषु अभिभव-सायणभाष्यं विरच्य एकत्र खण्डितमथर्ववेदीयं सायणभाष्यं परिपूरितम्, अपरत्र च वेदार्थज्ञानभेषजाः श्रेयःप्रेयोऽर्थिनश्च समनुगृहीताः ।

अनुपलब्धसायणभाष्याः अथर्ववेदसंहिताभागाश्चेमे—समग्राणि पञ्चम-नवम-दशमकाण्डानि, द्वादशादि-षोडशान्तानि काण्डानि, अष्टमे काण्डे चरमं सूक्तचतुष्टयम्, विंशे च काण्डे षडधिकसूक्तशतकञ्च । सर्वेष्वेतेषु सद्गुरुदेवपादैः सर्वत्र न केवलं सायणभाष्यसरणिरेव समाश्रिता । प्रत्युत एतेष्वपि भागेषु ये मन्त्राः अन्यत्र वेदेषु, विशेषतः ऋग्वेदे यथास्थिताः समुपलभ्यन्ते, सामान्यतः पर्यायवाचिशब्दकृतपाठभेदेन वा प्राप्यन्ते, यथा वा अथर्ववेदस्यैव अन्येषु काण्डेषु उक्तपूर्वाः सायणभाष्यभूषिताश्च आसाद्यन्ते, तेषां सर्वेषां मन्त्राणां समुपलब्धसायणभाष्यमपि तत्रतत्र मन्त्रे श्रीचरणैः स्वीयेऽस्मिन् भाष्ये सङ्कलितम्, स्वोपज्ञं भाष्यञ्चापि तेनैव सह समायोजितमस्ति ।

ज्ञातव्यमेतत् यत् नवमकाण्डस्य नवम-दशमसूक्ते ऋग्वेदस्य ( १.१६४ ) सुप्रसिद्धस्य 'अस्य वामीय'सूक्तस्य कतिपयान् मन्त्रान् समादाय कतिपयांश्च अन्यान् नवान् मन्त्रान् सङ्गृह्य सङ्कलिते वर्तेते । अर्थात् द्वाविंशत्यर्चं नवमं सूक्तम्, दशमञ्च अष्टाविंशत्यर्चं वर्तते । दशमे सूक्ते अन्यतो गृहीतेषु चतुर्षु मन्त्रेषु

नवमो मन्त्रः ऋग्वेदस्य दशममण्डलीय-पञ्चपञ्चाशत्तमसूक्तस्य पञ्चमो मन्त्रः त्रयोविंशो मन्त्रश्च प्रथममण्डलस्य द्विपञ्चाशदुत्तरशततमसूक्तस्य तृतीयो मन्त्रो विद्यते। सूक्तस्यास्य शिष्टौ द्वौ मन्त्रौ एकोनविंशतितमः; चतुर्विंशतितमश्च अथर्ववेदस्य स्वोपज्ञौ मन्त्रौ। द्वावेतौ महर्षिणा स्वयं दृष्टौ मन्त्रौ। चतुरानेतान् मन्त्रान् स्वोपज्ञभाष्येण संभूष्य शिष्टानां नवम-दशमसूक्तगतानां सर्वेषां मन्त्राणां भाष्यं तत्र तत्र समुपलब्धसायणभाष्येणैव परिपूरितमस्ति। एतेन सद्गुरुपादानां चेतसि चतुर्वेदभाष्यकर्तरि आचार्यसायणे कियात् श्रद्धातिशय इति करतलामलकायितम्।

गुरुदेवानां महति प्रयासेऽस्मिन् वेदस्यास्य द्वादशकाण्डीयम्, त्रयोदशकाण्डीयञ्च अभिनवं सायणभाष्यं प्रकाशपदवीं समुपागतम्। अष्टमकाण्डीय-चरम-सूक्तचतुष्टयस्य अष्टोत्तरशतमन्त्राणाम् अभिनव-सायणभाष्य-भूषितं प्रथमं खण्डम्, ग्रन्थमालाया अस्या एकत्रिंशत्तमं पुष्पम्, नवमकाण्डीयानां त्रिनवत्युत्तरशत-त्रयाणां मन्त्राणाम् अभिनव-भाष्यभूषितानां द्वितीयं खण्डम् ग्रन्थमालायाः द्वात्रिंशत्तमं पुष्पम्, दशमकाण्डीयानाञ्च पञ्चाशदुत्तरशतत्रयमन्त्राणाम् अभिनव-सायणभाष्य-समलङ्कृतानां तृतीयं खण्डं ग्रन्थमालायाः त्रयस्त्रिंशत्तमं पुष्पम्, सर्वेषामेतेषां पुष्पाणां परिगुम्फितः पुष्पगुच्छकः सुमुद्रितो विज्ञानां वेदविशारदानां पाठकानां शयसुषमां वर्धयन्नास्ते।

प्रथमखण्डेऽस्मिन् अष्टमकाण्डस्य सप्तमं सूक्तं किल ओषधिविषयकम्, अष्टमञ्च शत्रुपराजयोपायपरम्। नवम-दशमसूक्तयोः पुनर्विराजो वर्णनम्। तत्रापि नवमं सूक्तं प्रश्नोपनिषदः छान्दोग्योपनिषदश्च विराण्णिरूपणस्य स्रोतः-कल्पमिति कथने नातिशयोक्तिलेशोऽपि। वस्तुतः सूक्तेऽस्मिन् विवेचितानां विषयाणां विवरणमेव उपर्युक्तयोः उपनिषदोः स भागः। वेददर्शनाचार्याणां समाराध्यचरणानां गुरुदेवानां प्रज्ञाऽपि सूक्तस्यास्य भाष्ये सविशेषं चकास्ते। वेदनारायणस्य आदिमस्य मन्त्रभागस्य चरमस्य च उपनिषद्भागस्य तुलनात्मकं गवेषणमिदं सुदुर्लभमन्यत्र। यथैकेन सवित्रा समुदीय सकलं जगत् भास्यते, तथैव नवमसूक्तीयं भाष्यमिदं समग्रमेतत्पुष्पगुच्छकमेव स्वभासा प्रोज्ज्वल-यतीत्यत्र विज्ञाः पाठका एव प्रमाणम्।

द्वितीयखण्डात्मके द्वात्रिंशत्तमे पुष्पे नवमं काण्डं सूक्तदशकैः सङ्कलित-मस्ति। प्रथमसूक्तं मधुविद्यायाः, द्वितीयं सङ्कल्पापरपर्यायकामविषयकम्, तृतीयं सूक्तं यज्ञशालावर्णनपरम्, तुरीयम् ऋषभसूक्तम्, पञ्चमं पञ्चौदनमज-मधिकृत्य, षष्ठम् अतिथिसत्कारपरम्, सप्तमं गोविराड्रूपप्रदर्शकम्, अष्टमं

यक्ष्मनिवारणसम्बद्धम्, नवम-दशमसूक्ते च आत्मविषयके। इत्थं सूक्तदशकैर्द्वितीयं खण्ड परिपूर्यते।

तृतीयखण्डात्मके त्रयस्त्रिंशत्तमे पुष्पे दशमकाण्डमपि सूक्तदशकैः समलङ्कृतमस्ति, येषां वर्ण्या विषयाः क्रमश इमे—१. कृत्यादूषणम्, २. ब्रह्मप्रकाशनम्, ३. सपत्नक्षयणो वरणमणिः ४. सर्पविषदूरीकरणम् ५. विजयप्राप्तिः, ६. मणिबन्धनम्, ७. सर्वाधारवर्णनम्, ८. ज्येष्ठब्रह्मवर्णनम्, ९. शतौदना गौः, १०. वशा गौश्च। नवमे 'पञ्चौदनः अजः' इति दशमे च 'शतौदना गौः, वशा गौः' चेति विषयत्रयं तत्र तत्र सद्गुरुदेवैः सर्वविधशङ्काऽऽक्षेपादिनिरसनपूर्वकं व्याख्यातं तत एवावसेयम्। विस्तरभयान्नेह प्रतन्यते। पूततमस्य प्रशस्ततमस्यास्य सद्गुरुदेवप्रयासस्य सङ्कलन-सम्पादनसौभाग्यमासादयन्नयं जनोऽप्यात्मानं धन्यं मनुते।

अहोरात्रं सद्गुरुदेवोपासनपरायणानां तदीयसर्वविधकार्यसम्पादनविधौ अनन्यसाधारणसहयोगदानाय परिगृहीताजन्मव्रतानां तेषां श्रेष्ठशिष्यवर्याणां वेदान्ताचार्य-गोविन्दानन्दस्वामिपादानां कार्येऽत्र समनोयोगः बहुलः सहयोगोऽपि सर्वथाऽविस्मणीय एव।

ग्रन्थस्यास्य प्रकाशनभरः सद्गुरुदेवानां प्रेरणयैव कार्यरतेन 'सद्गुरु गङ्गेश्वर इण्टरनेशनल वेदमिशना'ख्येन न्यासेन सभक्ति ऊह्यते। अतस्तदधिकारिणो नूनमभिनन्दनीयाः। न्यासोऽयं सद्गुरुदेवानां वैदिकवाङ्मयीन-ग्रन्थानां प्रकाशनाय, तादृशग्रन्थानां निर्माणाय, तत्र तत्र वेदविद्यालयानां सञ्चालनाय वैदिकश्छात्राणां परिपोषणाय चानारतं प्रयतते इति पुनर्विशेषतोऽभिनन्द्योऽसौ न्यासः। ग्रन्थास्यास्य मुद्रणकार्ये भार्गव-भूषण-यन्त्रालयाधिपतिभिः श्रीनरेन्द्रकुमार भार्गव महोदयैः यत्साहाय्यं समाचरितम्, सस्वरवेदप्रकाशनस्य च यत् अन्यत्र सुदुर्लभं सौविध्यं समाचरितं तदर्थं ते नितरां साधुवादार्हाः। अत्र सविशेषं दत्तावधानेऽपि याः काश्चन त्रुटयः संभूताः स्युस्ता यदि गुणैकपक्षपातिभिः संसूच्येरंस्तदा अग्रिमे संस्करणे नूनं संशोधिताः भवेयुः। अन्ते चाशास्महे यद्विज्ञाः सपरितोषममुं स्वीकरिष्यन्तीति।

विदुषामाश्रवः
**—गोविन्द नरहरि वैजापुरकरः**

वाराणसी
सद्गुरुगङ्गेश्वर-चतुरुत्तर-
शततम-जन्मजयन्ती
पौषशुक्ला सप्तमी २०४० वै०
१०-१-१९८४ ई०

गुरु-गङ्गेश्वर-ग्रन्थमालायाः ३१ तमं पुष्पम्

# शौनकीया अथर्ववेद-संहिता

●

## अभिनव-सायणभाष्य-भूषिता

●

## अष्टमकाण्डे अन्त्यसूक्तचतुष्टयम्

●

—भाष्यकारः—
वेद-दर्शनाचार्यो महामण्डलेश्वरः
**श्री स्वामी गङ्गेश्वरानन्द उदासीनः**

●

—सम्पादकौ—
**वेदान्ताचार्यः श्री स्वामी गोविन्दानन्दः**
**श्री गोविन्द नरहरि वैजापुरकरः**
एम०ए० न्याय-वेदान्त-साहित्याचार्यः
राष्ट्रपति-पुरस्कृतश्च

●

—प्रकाशकः—
**सद्गुरु गङ्गेश्वर इण्टरनेशनल वेदमिशन न्यासः**
**बम्बई : ४०००, २०**

# मङ्गलाचरणम्

१

विश्ववन्द्यपदो वन्दे विबुधान् वेदविश्रुतान् ।
पञ्च हेरम्ब-वैकुण्ठ-शक्ति-शङ्कर-भास्करान् ।।

२

श्रौतवंश-समुद्भूतः श्रौतमार्ग-प्रवर्तकः ।
भक्ति-विक्ति-समुच्चेत्ता श्रीचन्द्रः पातु सद्गुरुः ।।

३

स्वान्त-ध्वान्तमपाकुर्वन् वेदविज्ञान-भानुना ।
सर्वं समीहितं देयाद् रामानन्दो दिवाकरः ।।

४

अभिनवमिदं भाष्यं सायण-कृतिसन्निभम् ।
अनुपलब्ध-तद्भाष्य-स्थाने निर्मीयते मया ।।

स्वामी गङ्गेश्वरानन्द उदासीनः

अभिनव-सायणभाष्य-भूपिता

# शौनकीया अथर्ववेद-संहिता

# अष्टमकाण्डे

## सप्तमं सूक्तम् : ओषधयः

(१–२८) ऋषिः--अथर्वा । देवता--भैषज्यम्, आयुष्यम्, ओषधयश्च । छन्दः--१, ७, ८, ११, १३, १५–२४, २७ अनुष्टुप्, २ उपरिष्टाद्-भूरिग्बृहती, ३ पुरउष्णिक्, ४ पञ्चपदा परानुष्टुबतिजगती, ५, ६, १०, २५ पथ्यापङ्क्तिः, ६ विराट्गर्भा भूरिक्, ९ द्विपदार्चीभूरिगनुष्टुप्, १२ पञ्चपदा विराडतिशक्वरी, १४ उपरिष्टान्निचृद्-बृहती, २६ निचृत्, २८ भूरिक् ।

या । बभ्रवो याश्च शुक्रा रोहिणीरुत पृश्नयः ।
असिक्नीः कृष्णा ओषधीः सर्वा अच्छावदामसि ॥ १ ॥

याः । बभ्रवः । याः । च । शुक्राः । रोहिणीः ।
उत । पृश्नयः असिक्नीः । कृष्णाः । ओषधीः ।
सर्वाः । अच्छऽआवदामसि ॥ १ ॥

**याः** इति यच्छब्ददर्शनेन 'ताः' इत्यध्याह्रियते, यत्तदोर्नित्यसम्बन्धात् ।' ताः **सर्वाः ओषधीः** सकलाः, कृत्स्नम् ओषधीवर्गम् । अच्छ अभि, आभिमुख्येन वैशिष्ट्येन **आवदामसि** रोगनाशनाय प्रार्थयामहे, लोकेभ्यः उपदिशामो वा । ताः काः ? इत्याकाङ्क्षायामाह—**याः बभ्रवः** । या ओषधयः बभ्रुवर्णाः पोषिकाः वा । **शुक्राः** शुक्लवर्णाः वीर्यवर्धिका वा । **रोहिणीः** रक्तवर्णाः, क्षतपूरिका वा । **उत** अपि **पृश्नयः** चित्रवर्णाः विविधवर्णोपेताः । **असिक्नीः** श्यामाः मेघसदृशवर्णाः **कृष्णाः** दग्धकाष्ठसमवर्णाः ॥ १ ॥

त्रायन्तामिमं पुरुषं यक्ष्माद् देवेषितादधि ।
यासां द्यौष्पिता पृथिवी माता समुद्रो मूलं वीरुधां बभूव ॥ २ ॥

त्रायन्ताम् । इमम् । पुरुषम् । यक्ष्मात् । देव-ऽईषितात् । अधि । यासाम् । द्यौः । पिता । पृथिवी । माता । समुद्रः । मूलम् । वीरुधाम् । बभूव ॥ २ ॥

प्रार्थनाप्रकारं प्रकटयति—त्रायन्तामिति । **यासां वीरुधां** लतानां लतोपलक्षितोषधिवनस्पत्यादीनाम् ओषधिविशेषानामिति यावत् । **द्यौः** सूर्यः **पिता** पालकः तद्धर्मणा तासां पाकदर्शनात् । **पृथिवी माता** ततो रसग्रहणात् । **समुद्रः** समुद्गो मेघः **मूलम्** आदिकारणम्, वर्षासु ओषधीनां विशेषोत्पत्तेः । **ताः** तादृश्यः भो ओषधयः ! यासामिति दर्शनेन ताः इत्यध्याहारः । **इमम् पुरुषम्** पुरोवर्तमानं रोगिणं नरं **त्रायन्तां** रक्षन्तु । कस्मात् ? **यक्ष्मादधि** यक्ष्मादधि यक्ष्मरोगस्य सकाशात् । कीदृशात् ? **देवेषितात्** देवो देवनं क्रीडनं विषयभोगादिकं ततः **इषितात्** प्रेषितात् प्राप्तात् । **अधि** आधिक्येन, विशेषत इत्यर्थः । **प्रार्थनापक्ष**—ओषधयः इति सम्बोधनम् । **उपदेशपक्षे**—भो लोकाः ओषधीभिः प्रमादप्राप्ता रुक् चिकित्सनीया, ओषधीभिः निरसनीया इति हृदयम् ॥ २ ॥

आपो अग्रं दिव्या ओषधयः ।
तास्ते यक्ष्ममेनस्य१मङ्गादङ्गादनीनशन् ॥ ३ ॥

आपः । अग्रम् । दिव्याः । ओषधयः । ताः । ते । यक्ष्मम् । एनस्यम् । अङ्गात्ऽअङ्गात् । अनीनशन् ॥ ३ ॥

हे रुग्णपुरुष ! **अग्रम्** प्रथमाः श्रेष्ठाः **आपः** जलानि **ओषधयः** रोगप्रतीकारहेत्वोषधिरूपाः । **दिव्याः** अद्भुताः लोकोत्तराः अलौकिक्यः । **ताः** तादृश्यः **ते** तव **अङ्गात् अङ्गात्** सर्वेभ्यः अङ्गेभ्यः । **एनस्यम्** पापजन्यं रोगम् । **अनीनशन्** नाशितवन्तः । अनेन जलचिकित्सा दर्शिता, नशेर्ण्यन्तात् लुङि बहुवचनम् ॥ ३ ॥

प्रस्तृणती स्तम्बिनीरेकशुङ्गाः प्रतन्वतीरोषधीरा वदामि ।
अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते वीरुधो
वैश्वदेवीरुग्राः पुरुषजीवनीः ॥ ४ ॥

प्रऽस्तृणतीः । स्तम्बिनीः । एकऽशुङ्गाः । प्रऽतन्वतीः ।
ओषधीः । आ वदामि । अंशुऽमतीः । काण्डिनीः । याः ।
विऽशाखाः । ह्वयामि । ते । वीरुधः । वैश्वऽदेवीः ।
उग्राः । पुरुषऽजीवनीः ॥ ४ ॥

परमेश्वरो ब्रूते—हे पुरुष ! **प्रस्तृणतीः** अतिशयेनाच्छादिका, 'स्तृञ् आच्छादने' (१४८५ क्र्या०) शतृप्रत्ययः, ततो ङीप्। अतिप्रसार-युक्ताः। **स्तम्बिनीः** बहुगुच्छाः। **एकशुङ्गाः** एकतीक्ष्णाग्रयुक्ताः। **प्रतन्वतीः** अतिशयेन विस्तारवतीः, 'तनु विस्तारे' (१४६४ तना०)। अन्यत् पूर्ववत्। **ओषधीः** रोगप्रतीकारकारणभूताः **ते** तुभ्यम् **आवदामि** आ समन्तात् उपदिशामि। अथवा—आह्वयामि, त्वदर्थं समानयामि, तासां समानयनं कारयामि, धातूनामनेकार्थत्वात्। 'वदीः' अत्र समानयन-कर्म। तथाभूता ओषधीराह—**याः अंशुमतीः** कोमलपल्लवयुक्ताः। **काण्डिनीः** स्कन्धयुक्ताः। **विशाखाः** विविधशाखोपेताः। अथवा—पूर्वं सशाखा उक्ताः, 'विशाखा' इत्यनेन शाखारहिताः गृह्यन्ते। **वीरुधः** लता-वनस्पत्यादिलक्षणाः **ते** त्वदर्थं **ह्वयामि** समानयनं कारयामि। ता विशिनष्टि—**वैश्वदेवीः** सर्वदिव्यगुणोपेताः, तन्नामिका लता वा। **उग्राः** प्रचण्डाः प्रभाववत्यः। **पुरुषजीवनीः** पुरुषायुष्यवर्धिकाः संजीवनी-त्यर्थः। अमृतत्वदायिन्यः सन्ति, ताः ह्वयामि इति सम्बन्धः ॥ ४ ॥

यद् वः सहः सहमाना वीर्यं१ यच्च वो बलम् ।
तेनेममस्माद्यक्ष्मात् पुरुषं मुञ्चतौषधीरथो कृणोमि भेषजम् ॥ ५ ॥

यत् । वः । सहः । सहमानाः । वीर्यम् । यत् । च ।
वः । बलम् । तेन । इमम् । अस्मात् । यक्ष्मात् । पुरुषम् ।
मुञ्चतु । ओषधीः । अथो इति । कृणोमि । भेषजम् ॥ ५ ॥

**ओषधीः** हे ओषधयः ! रुजं **सहमानाः** रोगाभिभवकारिण्यः सन्ति, अतः **वः** युष्माकं **सहः** रोगापयनसामर्थ्यं **वीर्यं** पोषको रसः। **यच्च वः बलं** रोगनिर्हरणाद्भुतशक्तिविशेषः, **तेन इमम्** पुरोवर्तिनं पुरुषं रोगग्रस्तम् **अस्मात् यक्ष्मात्** राजयक्ष्माख्यव्याधिविशेषात्। **मुञ्चत** मुक्तं कुरुत। **अथो** अनन्तरं **भेषजं** चिकित्सां रुजानिवारणरूपं कार्यम्। **कृणोमि** करोमि ॥ ५ ॥

जीवलां नघारिषां जीवन्तीमोषधीमहम् ।
अरुन्धतीमुन्नयन्तीं पुष्पां मधुमतीमिह हुवेऽस्मा
अरिष्टतातये ॥ ६ ॥

जीवलाम् । नघऽरिषाम् । जीवन्तीम् । ओषधीम् ।
अहम् । अरुन्धतीम् । उत्ऽनयन्तीम् । पुष्पाम् ।
मधुऽमतीम् । इह । हुवे । अस्मै । अरिष्टऽतातये ॥ ६ ॥

**जीवलाम्** जीवनवर्धिकां दीर्घायुष्यप्रदायिकाम्। **नघारिषाम्** न घ रिषां अहानिकारिकाम्। घ इति निपातः पादपूरणः, न रिषाम् अहिंसकानाम्। 'रिष् हिंसायाम्' ( ६९४ भ्वा० पर०, १२३२ दिवा० पर० )। **जीवन्तीम्** जीवन्तीनामधेयाम्। **उन्नयन्तीं** समुन्नतिकारिणीं रोगिणम् उत्तमां दशां नयन्तीम्। **अरुन्धतीं** तन्नामकोषधिविशेषम्। अरुन्धतीम् अवारयन्तीं रोगनिवृत्तौ प्रतिबन्धमकुर्वाणाम्, सहकारिणी-मित्यपि कश्चित्। **पुष्पां** पुष्पवतीं तन्नामधेयां वा। कीदृशीम् ? **मधुमतीं** माधुर्योपेताम्। पूर्वोक्तमोषधिजातम् इह अस्मिन् रुग्णसन्निधौ **अस्मै** अस्य पुरुषस्य स्वास्थ्यलाभाय **अरिष्टतातये** अविनाशाय मृत्युविजयाय, अमरत्वाय **हुवे** ह्वयामि समानयनं कारयामि, उपदिशामि वा ॥ ६ ॥

इहा यन्तु प्रचेतसो मेदिनीर्वचसो मम ।
यथेमं पारयामसि पुरुषं दुरितादधि ॥ ७ ॥

इह । आ यन्तु । प्रऽचेतसः । मेदिनीः । वचसः । मम ।
यथा । इमम् । पारयामसि । पुरुषम् । दुःऽइतात् । अधि ॥ ७ ॥

इह आरोग्यभवने चिकित्सासमये वा । **मम** मम वैद्यस्य **वचसः** वाण्याः, उक्तेः **मेदिनीः** पोषिकाः **प्रचेतसः** प्रकृष्टप्रकाशदायिकाः ओषधयः तथा **आयन्तु** आगच्छन्तु उपस्थिता भवन्तु **यथा** इमं **पुरुषम्** रुग्णं प्राणिनं **दुरितात्** कष्टात् रोगजनितात् **अधि** उपरि आधिक्येन वा **पारयामसि** पारयामः, उद्धरामः । यथा-शब्दो 'यतः' इत्यर्थको वा । याभिरोषधीभिरित्यर्थः । तेन अत्र पक्षे तथेति शब्दाध्याहारो न विधेयः ॥ ७ ॥

**अ॒ग्नेर्घा॒सो अ॒पां गर्भो॒ या रोह॑न्ति॒ पुन॑र्णवाः ।**
**ध्रु॒वाः स॒हस्र॑नाम्नीर्भेष॒जीः स॒न्त्वाभृ॑ताः ॥ ८ ॥**

**अ॒ग्नेः । घा॒सः । अ॒पाम् । गर्भः॑ । याः । रोह॑न्ति । पुन॒ःऽनवाः ।**
**ध्रु॒वाः । स॒हस्र॑ऽनाम्नीः । भे॒ष॒जीः । स॒न्तु । आऽभृ॑ताः ॥ ८ ॥**

अग्नेः वह्नेः घासः भक्षिका । 'घस्लृ अदने' (७१५ भ्वा०) बाहुलकात् कर्तरि घञ् । अग्निगुणधारिका उष्णवीर्या इत्यर्थः । **अपां** जलानां **गर्भः** आधारः । 'ग्रह उपादाने' कर्तरि अच्, 'हृग्रहोर्भश्छन्दसि (पा० वा० ३.१.८४) इति हकारस्य भकारः । जलगुणसंयुक्ताः, शीतवीर्या इत्यर्थः । **याः** ओषधयः **पुनर्णवाः** पुनः पुनः णवाः = नवाः नवीनाः सत्यः, पुनर्नवानामिकाः वा । **रोहन्ति** समुत्पद्यन्ते, प्रादुर्भवन्ति । यच्छब्दानुरोधेन ता इत्यध्याह्रियते । ताः सहस्रनाम्नीः असंख्यातनामधेयाः **भेषजीः** रोगप्रतीकारकर्त्र्यः मृत्युभयजेत्र्यो वा ओषधयः, **आभृताः** आहृताः, आनीताः **ध्रुवाः** स्थिराः **सन्तु** । अस्मिन् आरोग्यभवने चिकित्सायै तथाविधानामोषधीनां नित्यमवस्थानं भवतु, येन चिकित्सासमये तासां गवेषणे समानयने वा विलम्बो न भवेत् ॥ ८ ॥

**अ॒व॒कोल्वा उ॒दका॑त्मान॒ ओष॑धयः ।**
**व्यृ॑षन्तु दु॒रि॒तं ती॒क्ष्णशृ॒ङ्ग्यः॑ ॥ ९ ॥**

**अ॒व॒का॑ऽउल्वाः । उ॒दक॑ऽआत्मानः । ओष॑धयः ।**
**वि । ऋ॒ष॒न्तु॒ । दुः॒ऽइ॒तम् । ती॒क्ष्ण॑ऽशृ॒ङ्ग्यः॑ ॥ ९ ॥**

**अवका** 'अव रक्षणादिषु' (६०० भ्वा० पर०) अत्र हिंसावचनः ।

हिंसिकाः स्नातुः पादस्खलनबन्धनादिना दुःखदाः, जलनीली-शैवाला-परपर्यायाः । **उल्ब** गर्भवेष्टनचर्म, लक्षणया तत्तुल्या तत्सदृशी आच्छादिका यासां तथाभूता शैवालावृतजलोत्पन्नाः । **उदकात्मानः** उदकजीवनाः तन्मय्यो वा । **ओषधयः** रोगनिवारकवनस्पति-विशेषाः । कीदृश्यः ? **तीक्ष्णशृङ्ग्यः** तीक्ष्णशृङ्गसदृशकण्टकवत्यः । **दुरितं** पापं, पापजातं रोगम् । **वि** विशेषेण बहिर्वा । **ऋषन्तु,** अन्तर्भावितण्यर्थः, गच्छन्तु गमयन्तु दूरीकुर्वन्तु । 'ऋषी गतौ' (१२८८ तुदा० पर०) ॥ ९ ॥

**उन्मुञ्चन्तीर्विवरुणा उग्रा या विषदूषणीः ।**
**अथो बलासनाशनीः कृत्यादूषणीश्च यास्ता**
**इहा यन्त्वोषधीः ॥ १० ॥**

**उत्ऽमुञ्चन्तीः । विऽवरुणाः । उग्राः । याः । विषऽदूषणीः । अथो इति । बलासऽनाशनीः । कृत्याऽदूषणीः । च । याः । ताः । इह । आ । यन्तु । ओषधीः ॥ १० ॥**

**याः** ओषधयः **उन्मुञ्चन्तीः** रोगात् मोचयन्त्यः रोगमुक्तिदायिन्यः, **विवरुणाः** 'वरुण'पदेन वरुणाधिष्ठितं जलं लक्ष्यते, तद्रहिताः शुष्काः । अपिवा—वरुणशब्देन वरुणसम्बद्धो जलोदरादिरोगो लक्ष्यते, तन्नि-वारिकाः । विशेषेण वरणीया वा । **उग्राः** प्रचण्डाः, प्रबलप्रभाव-शालिन्यः । **विषदूषणीः** विषदोषहर्त्र्यः । **अथो** अपि **बलासनाशनीः** बलमस्यन्ति क्षिपन्ति निरस्यन्ति इति बलासः=कफादिदोषाः, तेषां नाशिनीः विनाशिकाः । **याः च** पुनः **कृत्यादूषणीः** दुर्जनप्रयुक्ताभि-चाराख्यः कृत्याप्रयोगः, तद्दूषणीः तन्निवारिकाः, **ओषधीः** ओषधयः । **ताः** सर्वाः **इह** अस्मिन् आरोग्यभवने **आयन्तु** आगच्छन्तु, उपस्थिता भवन्तु । चिकित्सालये शीघ्रं चिकित्सां कर्तुं सर्वाः ओषधयः पुरस्तादेव संग्राह्या इति हृदयम् ॥ १० ॥

**अपक्रीताः सहीयसीर्वीरुधो या अभिष्टुताः ।**
**त्रायन्तामस्मिन् ग्रामे गामश्वं पुरुषं पशुम् ॥ ११ ॥**

अपऽक्रीताः । सहीयसीः । वीरुधः । याः । अभिऽस्तुताः । त्रायन्ताम् । अस्मिन् । ग्रामे । गाम् । अश्वम् । पुरुषम् । पशुम् ।। ११ ।।

**अपक्रीताः** अपेत्य देशान्तरं गत्वा क्रीताः, यथाविधिमूल्येन कृतक्रयाः, लब्धाः, दूरात् समानीताः । **सहीयसीः** अतिशयेन सोढचः, बलवत्यः । **वीरुधः** लताः तदुपलक्षितोषधिविशेषाः । **अभिस्तुताः** अतिशयेन प्रशंसिताः **याः** वर्तन्ते, **ताः अस्मिन् ग्रामे गाम् अश्वं पुरुषं पशुम्** स्पष्टम् । गोः पृथक् ग्रहणात् गोव्यतिरिक्तं महिष्यादिकं पशुम्, **त्रायन्ताम्** रक्षन्तु ।। ११ ।।

मधुमन्मूलं मधुमदग्रमासां मधुमन्मध्यं वीरुधां बभूव ।
मधुमत् पर्णं मधुमत् पुष्पमासां मधोः संभक्ता अमृतस्य
भक्षो घृतमन्नं दुह्रतां गोपुरोगवम् ।। १२ ।।

मधुऽमत् । मूलम् । मधुऽमत् । अग्रम् । आसाम् । मधुऽमत् । मध्यम् । वीरुधाम् । बभूव । मधुऽमत् । पर्णम् । मधुऽमत् । पुष्पम् । आसाम् । मधोः । सम्ऽभक्ताः । अमृतस्य । भक्षः । घृतम् । अन्नम् । दुह्रताम् । गोऽपुरोगवम् ।। १२ ।।

**आसाम् वीरुधाम्** ओषधीनाम्, **मूलं मधुमत्** माधुर्योपेतम् । **अग्रम्** उपरिभागः **मधुमत्** मधुरम् । **आसाम् मध्यं** मध्यभागः **मधुमत्** मधुरं **बभूव** वर्तते । किं बहुना, सर्वमवयवजातं मधुर-रसभृतं रुचिरमस्तीत्यर्थः । किञ्च **पर्णं** पत्रं **पुष्पं** कुसुमादिकं **मधुमत्** उक्तार्थम् । एता ओषधयः **मधोः सम्भक्ताः** मधुना समवेताः मधुररसयुक्ताः । **अमृतस्य भक्षः** आसाम् भक्षणम् अमृतभक्षणतुल्यम् । ताः ओषधयः **घृतम्** सर्पिः, **अन्नम्** पायसादिकम् । **गोपुरोगवम्** पुरो गच्छति इति पुरोगवः, गौः पुरगवो यस्य तत्, गवादिकम् धनमिति शेषः । विनापि चकारं समुच्चयः, गवादिधनञ्च **दुह्रताम्** परिपूरयन्तु । 'दुह प्रपूरणे' (१०१४ अदा० उभ०) दुहेः लोटि बहुवचने झस्य अदादेशो 'बहुलं छन्दसि'(पा० ७.१.८) इति वैकल्पिको रुडागमः । आसामोषधीनां प्रसादात् घृतम् अन्नं गवादि-

धनञ्च वयं लभामहे इति निष्कर्षः । अपि वा गोपुरोगवम् इति घृतादे-र्विशेषणम् । गां पुरस्कृत्य प्राप्यं गवं गव्यं घृतं गव्यं गोक्षीरं तन्निमित्तं पायसादिकं अन्नञ्च अस्माभिः एतासामोषधीनां प्रसादात् प्राप्तव्य-मिति रहस्यम् । गीतादिषु गोक्षीरस्य श्रेष्ठान्नत्वेन ग्रहणादिति ।। १२ ।।

यावतीः कियतीश्चेमाः पृथिव्यामध्योषधीः ।
ता मा सहस्रपर्ण्यो मृत्योर्मुञ्चन्त्वंहसः ।। १३ ।।

यावतीः । कियतीः । च । इमाः । पृथिव्याम् ।
अधि । ओषधीः । ताः । मा । सहस्रऽपर्ण्यः । 
मृत्योः । मुञ्चन्तु । अंहसः ।। १३ ।।

**यावतीः** यावत्यः यत्परिमाणाः 'यत्तदेतेभ्यः परिमाणे वतुप्' (पा० ५.२.३९) इति सूत्रेण वतुप् 'आसर्वनाम्न' इत्यावत्यम् (पा० ६.३.९१) । **कियतीः** कियत्यः, किं परिमाणाश्च 'किमिदंभ्यां वो घः (पा० ५.२.४०) इति सूत्रेण किंशब्दात् वतुप् । **च** पुनः **इमाः** ओषधीः याः इमा ओषधयः वर्तन्ते **पृथिव्याम्** भूमौ अधि उपरि **ताः** तथोक्ताः सर्वाः ओषधयः **सहस्रपर्ण्यः** असंख्यातपत्रोपेताः । **मा** मां **मृत्योः** मरणात् **अंहसः** रोगनिदानभूतात् पापात्, कष्टात् **मुञ्चन्तु** मुक्तं कुर्वन्तु ।। १३ ।।

वैयाघ्रो मणिर्वीरुधां त्रायमाणोऽभिशस्तिपाः ।
अमीवाः सर्वा रक्षांस्यप हन्त्वधि दूरमस्मत् ।। १४ ।।

वैयाघ्रः । मणिः । वीरुधाम् । त्रायमाणः ।
अभिशस्तिऽपाः । अमीवाः । सर्वाः रक्षांसि ।
अप । हन्तु । अधि । दूरम् । अस्मत् ।। १४ ।।

**वीरुधाम्** वीरुद्भिर्निर्मितः । **वैयाघ्रः** व्याघ्रतुल्यो रोगभक्षकः, सद्यः प्रभावकारी । **मणिः** वनस्पतिनिर्मितः शरीरावयवकण्ठहस्तादौ बन्ध-नार्हो वस्तुविशेषः । **त्रायमाणः** रक्षकः । **अभिशस्तिपाः** अभिशापात् पाति रक्षति इति अभिशस्तिपाः रक्षको वर्तते । असौ **अमीवाः** रोगान् । **सर्वाः** सर्वाणि **रक्षांसि** । **दूरम् अधि** आधिक्येन दूरे नीत्वा । **अस्मत्** अस्माकं सकाशात् **अपहन्तु** नाशयतु ।। १४ ।।

सिंहस्येव स्तनथोः सं विजन्तेऽग्नेरिव विजन्त आभृताभ्यः ।
गवां यक्ष्मः पुरुषाणां वीरुद्भिरतिनुत्तो
नाव्या एतु स्रोत्याः ॥ १५ ॥

सिंहस्यऽइव । स्तनथोः । सम् । विजन्ते । अग्नेःऽइव ।
विजन्ते । आऽभृताभ्यः । गवाम् । यक्ष्मः । पुरुषाणाम् ।
वीरुत्ऽभिः । अतिऽनुत्तः । नाव्याः । एतु । स्रोत्याः ॥ १५ ॥

आभृताभ्यः आहृताभ्यः पोषिताभ्यो वा लतौषधादिभ्यः । **सिंहस्य** हिंस्रजन्तुविशेषस्य **स्तनथोः** गर्जनात् **इव** यथा **प्राणिनः संविजन्ते** चलन्ति, वेपन्ते, पलायन्ते वा । **अग्नेः** पावकात् **इव** यथा **विजन्ते** बिभ्यति तथा रोगास्त्रस्यन्ति । तदेव दर्शयति **गवां** गवोपलक्षितपशूनाम् । **पुरुषाणाम्** मनुष्याणाम् **यक्ष्मः** विनाशकारी क्षयरोगः । **वीरुद्भिः** ओषधि-विशेषैः **अतिनुत्तः** अतिशयेन प्रेरितः, पलायनं कारितः । **नाव्याः** नौभिस्तरितुं योग्यायाः पारे गन्तुं शक्यायाः । **स्रोत्याः** नद्यः **एतु** गच्छतु, पारमिति शेषः । अनेन सद्यः रोगस्य प्रत्यावर्तनमशक्यमिति सूचितम् ॥ १५ ॥

मुमुचाना ओषधयोऽग्नेर्वैश्वानरादधि ।
भूमिं संतन्वतीरित यासां राजा वनस्पतिः ॥ १६ ॥

मुमुचानाः । ओषधयः । अग्नेः । वैश्वानरात् ।
अधि । भूमिम् । समऽतन्वतीः । इत ।
यासाम् । राजा । वनस्पतिः ॥ १६ ॥

हे **ओषधयः** ! **यासाम्** भवतीनां **राजा** मुख्यः वनस्पतिः सोमः स्वर्गात् श्येनरूपमास्थाय भुवि सोमयागानुष्ठानाय गायत्र्या समानीतः सोमाख्यवनस्पतिविशेषः । अपि वा—राज्ञा वनरक्षणार्थं नियुक्तो वनपालः राजपुरुषविशेषः, वर्तत इति शेषः । ताः यूयं वैश्वानरात् अग्नेः विश्वनरहितात् वह्नेः । **मुमुचानाः** अतिशयेन मुक्ताः, सुर-क्षिताः । **भूमिं** पृथिवीं **संतन्वतीः** आच्छादयन्त्यः, प्रसरन्तु इति शेषः ।

अपि वा—वैश्वानरादग्नेः सूर्याख्यमग्निमधिश्रित्य तत्प्रसादात् वृष्टिद्वारा भूमिं सन्तन्वत्य आच्छादयन्त्यः तिष्ठन्तु । इत् पादपूरणः, एवार्थो वा ॥ १६ ॥

या रोहन्त्याङ्गिरसीः पर्वतेषु समेषु च ।
ता नःपयस्वतीः शिवा ओषधीः सन्तु शं हृदे ॥ १७ ॥

याः । रोहन्ति । आङ्गिरसीः । पर्वतेषु ।
समेषु । च । ताः । नः । पयस्वतीः । शिवाः ।
ओषधीः । सन्तु । शम् । हृदे ॥ १७ ॥

**याः** ओषधयः **पर्वतेषु** दुर्गमशैलप्रदेशेषु **समेषु** अनिम्नोन्नतेषु सुगमेषु भूप्रदेशेषु च **रोहन्ति** समुत्पद्यन्ते **ताः** तथाविधा ओषधयः । **पयस्वतीः** रसवत्यः पोषकरससम्पन्नाः । **आङ्गिरसीः** अङ्गिरोग्रहणं ऋष्यन्तराणामप्युपलक्षणम्, अङ्गिराप्रभृतिभिर्महर्षिभिः पूर्वमवगताः, प्रचारिताः । **नः** अस्माकम् **शिवाः** कल्याणकारिण्यः सन्तु वर्तन्ताम् । अपि च—**हृदे** हृदयाय **शं** शान्तिकारिकाः हृदयस्य सुखदायिन्यो भवन्तु ॥ १७ ॥

याश्चाहं वेद वीरुधो याश्च पश्यामि चक्षुषा ।
अज्ञाता जानीमश्च या यासु विद्म च संभृतम् ॥ १८ ॥

याः । च । अहम् । वेद । वीरुधः । याः । च ।
पश्यामि । चक्षुषा । अज्ञाताः । जानीमः । च ।
याः । यासु । विद्म । च । सम्ऽभृतम् ॥ १८ ॥

सर्वाः समग्राः ओषधीर्बोधन्तु वचसो मम ।
यथेमं पारयामसि पुरुषं दुरितादधि ॥ १९ ॥

सर्वाः । सम्ऽअग्राः । ओषधीः । बोधन्तु । वचसः । मम ।
यथा । इमम् । पारयामसि । पुरुषम् । दुःऽइतात् अधि ॥१९॥

**याः च वीरुधः** ओषधीः **अहम्** वैद्यः **वेद** प्रमाणान्तरेण प्रतिपद्ये। **याः च** याः पुनः **पश्यामि** अवलोकयामि **चक्षुषा** लोचनेन। **याः च अज्ञाताः** अपरीक्षिताः अद्यावधि अज्ञातगुणप्रभावाः ताः **जानीमः** अवगच्छेम यासु च पुनः **संभृतं** धृतं सामर्थ्यं **विद्म** जानीयाम। **सर्वाः** सकलाः **समग्राः** समस्ताः **ओषधीः** ताः ओषधयः **मम वचसः** मम वैद्यस्य वचनस्य, रहस्यमिति शेषः। अथवा—द्वितीयार्थे षष्ठी, वचनं **बोधन्तु** बुद्धयन्ताम्। 'बुध अवगमने' (८५८ भ्वा० पर०, ११७२ दिवा० आ०)। **यथा** येन वयम् **इमं** रुग्णं पुरुषं **दुरितात्** रोगनिदानभूतात् पापात्, कष्टात् **पारयामसि** पारं नयेमः॥ १८-१९॥

**अश्वत्थो दर्भो वीरुधां सोमो राजामृतं हविः।**
**व्रीहिर्यवश्च भेषजौ दिवस्पुत्रावमर्त्यौ॥ २०॥**

**अश्वत्थः। दर्भः। वीरुधाम्। सोमः। राजा।**
**अमृतम्। हविः। व्रीहिः। यवः। च।**
**भेषजौ। दिवः। पुत्रौ अमर्त्यौ॥ २०॥**

भेषजौ इति पदं वचनव्यत्ययेन सर्वान्वयि। **अश्वत्थः** पिप्पलाख्यो वृक्षविशेषः **भेषजः** रोगनिवर्तकः। **दर्भः** कुशाख्यतृणविशेषः **भेषजः**। **वीरुधां** लतानां **राजा** मुख्यः **सोमः** सोमाख्यलताविशेषः **भेषजः**। **अमृतं हविः** अमृतोपमम् हविः अग्नौ प्रक्षेपणीयं द्रव्यमाज्यादि **भेषजम्**। **व्रीहिर्यवश्च** व्रीहियवाख्यधान्यविशेषौ **भेषजौ**। **दिवः** 'दिवु परिकूजने' (१७०७ चुरा०), परिकूजनस्य उन्मादस्य **पुत्रौ** संशोधकौ। किञ्च **अमर्त्यौ** अलौकिकौ। पदद्वयं भेषजपदवत् सर्वान्वयि वचनव्यत्ययेन। अपि वा—**दिवः** द्युलोकस्य तदधिष्ठातृसूर्यस्य वा वृष्टिद्वारा **पुत्रौ** उत्पन्नौ। 'अग्नौ प्रास्ताहुतिः सम्यक् आदित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥' (३.७६) इति मनुवचनात्। अश्वत्थादयो वृक्षविशेषाः रोगनिवर्तकाः उन्मादादिसंशोधकाः लोकोत्तराश्च वर्तन्ते इति भावः॥ २०॥

**उज्जिहीध्वे स्तनयत्यभिक्रन्दत्योषधीः।**
**यदा वः पृश्निमातरः पर्जन्यो रेतसावति॥ २१॥**

उत् । जिहीध्वे । स्तनयति । अभिऽक्रन्दति । ओषधीः ।
यदा । वः । पृश्निऽमातरः । पर्जन्यः । रेतसा । अवति ॥ २१ ॥

**पृश्निमातरः** पृश्निः पृथिवीः 'स्पृश संस्पर्शने' (१४२३ तुदा० पर०) उणादिको निप्रत्ययः, धातोः सकारलोपश्च । यद्वा विविधवर्णोपेता सा माता उत्पादिका यासां तथाविधाः । **ओषधीः** हे ओषधयः ! यदा **पर्जन्यः** मेघः **स्तनयति** गर्जति, अभिक्रन्दति घोरं ध्वनिं करोति तदा यूयं **उज्जिहीध्वे** उद्गता भवथ । तदा **वः** युष्मान् पर्जन्यः **रेतसा** जलेन **अवति** तर्पयति ॥ २१ ॥

तस्यामृतस्येमं बलं पुरुषं पाययामसि ।
अथो कृणोमि भेषजं यथाऽसच्छतहायनः ॥ २२ ॥

तस्य । अमृतस्य । इमम् । बलम् । पुरुषम् ।
पाययामसि । अथो इति । कृणोमि । भेषजम् ।
यथा । असत् । शतऽहायनः ॥ २२ ॥

**तस्य** उक्तपूर्वस्य **अमृतस्य** अमृतोपमस्य, औषधस्य, **इमं बलम्** सारम् आरोग्योत्पादकरसम् । **पुरुषं पाययामसि** पाययामः पानाय प्रेरयामः, पुष्टयर्थं तत्पानं कारयामः । यद्वा—तस्य अमृतस्य पर्जन्यस्य पर्जन्यसम्बन्धिवृष्टिद्वारा तदुत्पन्नम् **अथो** अपि **भेषजम्** औषधं **कृणोमि** करोमि । अस्मै रोगिणे पुरुषाय रोगप्रतीकारार्थम् इदम् औषधं दातव्यमिति निश्चिनोमि, निश्चित्य ब्रुवे वा । **यथा** यतः **शतहायनः** शतवर्षजीवी दीर्घायुः **असत्** अस्तु, भवतु, अयं रुग्ण इति शेषः ॥ २२ ॥

वराहो वेद वीरुधं नकुलो वेद भेषजीम् ।
सर्पा गन्धर्वा या विदुस्ता अस्मा अवसे हुवे ॥ २३ ॥

वराहः । वेद । वीरुधम् । नकुलः । वेद । भेषजीम् । सर्पाः ।
गन्धर्वाः । याः । विदुः । ताः । अस्मै । अवसे । हुवे ॥ २३ ॥

**वराहः** शूकरः वर-आङ् पूर्वात् हनतेः, 'हृञ् हरणे' (८९९ भ्वा०

उभ०) इत्यस्मात् वा सप्तम्यां 'जनेर्डः' (पा० ३. २. १०१) इति डः। वराय अभीष्टलाभाय भूमिमाहन्ति खनति, अथवा वरमभीष्टं मुस्तादिकमाहरति। अत्र निरुक्तम्—'वराहो मेघो भवति', 'वराहारः, वरमाहारमाहर्षीरि'ति च ब्राह्मणम्। अयमपीतरो वराहः। एतस्मादेव बृहतिमूलानि, वरं वरं मूलं बृहतीति वा। 'वराहमिन्द्र एमुषम्'[1] (ऋ० ८. ७७. १०) इत्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते (निरु० ५. १. २१)। **वीरुधम्** ओषधीं **वेद** जानाति। **नकुलः** सर्पविरोधी जन्तुविशेषः **भेषजीम्** चिकित्सार्थं यामौषधीं[2] **वेद** जानाति। **सर्पाः** दंशकाः विषधराः **गन्धर्वाः** देवयोनिविशेषाः आविश्य पिशाच-भूतादिवत् पीडकाः **याः** ओषधीः **विदुः** जानन्ति, **ताः** सर्वाः ओषधीः **अस्मा** अस्मै पुरुषाय, अस्य पुरुषस्य **अवसे** रक्षणाय **हुवे** ह्वयामि, आह्वयामि द्रुतचिकित्सनाय ॥ २३ ॥

याः सुपर्णा आङ्गिरसीर्दिव्या या रघटो विदुः ।
वयांसि हंसा या विदुर्याश्च सर्वे पतत्रिणः ।
मृगा या विदुरोषधीस्ता अस्मा अवसे हुवे ॥ २४ ॥

याः । सुऽपर्णाः । आङ्गिरसीः । दिव्याः । याः ।
रघटः । विदुः । वयांसि । हंसाः । याः । विदुः ।
याः । च । सर्वे । पतत्रिणः । मृगाः । याः ।
विदुः । ओषधीः । ताः । अस्मै । अवसे । हुवे ॥ २४ ॥

षट्चरणेन पद्येन सार्धश्लोकात्मकेन वा मन्त्रेण आह—**आङ्गिरसीः**। आङ्गिरसीः अङ्गिरसा महर्षिणा निर्दिष्टाः **याः** ओषधीः **सुपर्णाः** सुपतनाः गरुडादयः **विदुः** अवगच्छन्ति। **दिव्याः** अलौकिकशक्ति-सम्पन्नाः **याः** ओषधीः **रघटः** पक्षिविशेषाः **विदुः** प्रतिपद्यन्ते। 'रघि-गतौ' नुम् पचाद्यच्, अधिकरणे तल्लोपश्छान्दसः। रघन्ति गच्छन्ति

१. हे इन्द्र! वराहम्=सूकररूपेणावस्थितम् असुरम् एमुषम् मोहस्थानीयम्। आङोऽत्र छान्दसः एकारः।

२. सर्पेण युद्धयमानो नकुलः तद्दंशविषाञ्चितविग्रहः काञ्चित् सन्निकटवर्तिनीम् ओषधीं आघ्राय विषप्रभावात् मुक्तो भवति, इत्येषा लोककथाऽत्र सूचिता।

उत्पतन्ति यत्र आकाशे तत् रघाख्यमाकाशस्तस्मिन् अटन्ति उत्पतन्ति, 'अट गतौ' क्विप्, अटन्ति गच्छन्ति उत्पतन्ति। आकाशे उत्पतन्तः पक्षिविशेषाः **विदुः** बुद्धयन्ते। **वयांसि हंसाः** हंसनामकपक्षिविशेषाः **याः विदुः**। किं बहुना, **सर्वे पतत्रिणः याः च विदुः। याः ओषधीः मृगाः** आरण्यपशुविशेषाः **विदुः** जानन्ति, **ताः** सर्वाः **ओषधीः**। शिष्टं समानम् ॥ २४ ॥

**यावतीनामोषधीनां गावः प्राश्नन्त्यघ्न्या यावती नामजावयः।**
**तावती स्तुभ्यमोषधीः शर्म यच्छन्त्वाभृताः ॥ २५ ॥**

**यावतीनाम्। ओषधीनाम्। गावः। प्रऽअश्नन्ति।**
**अघ्न्याः। यावतीनाम्। अजऽअवयः। तावतीः।**
**तुभ्यम्। ओषधीः। शर्म। यच्छन्तु। आऽभृताः ॥ २५ ॥**

**यावतीनाम्** ओषधीनाम्। द्वितीयार्थे षष्ठी, यावतीः ओषधीः यत्-परिमाणाः। यच्छब्दात् वतुप्, 'आ सर्वनाम्न' इति आत्वम्, 'उगितश्च' इति ङीप्। **अघ्न्याः** अहिंसनीयाः मनसा वाचा कर्मणा च रक्षणीयाः **गावः** धेनवः। किञ्च **यावतीनाम्** ओषधीनां **यावतीः** ओषधीः **अजावयः** अजा छागयः, अवयो मेष्यश्च **प्राश्नन्ति** भक्षयन्ति **आभृताः** आहृताः आनाय्य संगृहीताः **तावतीः** तावत्यः **ओषधीः** ओषधयः, प्रथमार्थे द्वितीया। **तुभ्यम्** रोगिणे **शर्म** कल्याणं **यच्छन्तु** ददतु ॥ २५ ॥

**यावतीषु मनुष्या भेषजं भिषजो विदुः।**
**तावतीर्विश्वभेषजीरा भरामि त्वामभि ॥ २६ ॥**

**यावतीषु। मनुष्याः। भेषजम्। भिषजः। विदुः।**
**तावतीः। विश्वऽभेषजीः। आ। भरामि। त्वाम्। अभि ॥ २६ ॥**

**भिषजः** वैद्याः **मनुष्याः** नराः **यावतीषु** ओषधीषु **भेषजम्** रोग-प्रतीकारसामर्थ्यं **विदुः** जानन्ति, **तावतीः विश्वभेषजीः** सर्वरोग-निराकर्त्रीः ओषधीः **त्वामभि** त्वाम् प्रति, तव कृते **आभरामि** आहरामि। त्वच्चिकित्सार्थम् ओषधीजातमाहृत्य संगृह्णामि ॥ २६ ॥

पुष्पवतीः प्रसूमतीः फलिनीरफला उत ।
सं मातर इव दुह्रामस्मा अरिष्टतातये ॥ २७ ॥

पुष्पऽवतीः । प्रसूऽमतीः । फलिनीः । अफलाः । उत ।
संमातरःऽइव । दुह्राम् । अस्मै । अरिष्टऽतातये ॥ २७ ॥

**पुष्पवतीः** पुष्पाणि विद्यन्ते यासां ताः पुष्पवत्यः प्रशस्तपुष्पोपेताः । **प्रसूमतीः** प्रसूमत्यः कोमलपल्लवयुक्ताः । **फलिनीः** फलयुक्ताः । **उत** अपि **अफलाः** फलरहिताः ओषधयः, प्रथमार्थे द्वितीया । **सम्** सम्भूय **मातरः** जनन्यः **इव अस्मा** अस्मै अस्य पुरुषस्य **अरिष्टतातये** अनिष्टनिराकरणाय । 'अरिष्ट'शब्दात् स्वार्थे छन्दसि 'तातिल्'-प्रत्ययः । **दुह्राम्** दुह्रताम् दुहन्तु । दुहेर्लोटि झस्य अदादेशे टेरेत्वे आमादेशे रुटि अकार-तकारलोपश्छान्दसः, दुहताम् इति प्राप्ते । यथा मातरः स्वशिशवे स्तन्यं दुग्धं प्रयच्छन्ति तथा इमा ओषधयः स्वकीयरसात्मकं दुग्धम् अस्य पुरुषस्य शिशुकल्पस्य रोगनिवृत्तये प्रददतु इति निष्कर्षः ॥ २७ ॥

उत् त्वाहार्षं पञ्चशलादथो दशशलादुत ।
अथो यमस्य पड्वीशाद् विश्वस्माद् देवकिल्बिषात् ॥ २८ ॥

उत् । त्वा । अहार्षम् । पञ्चऽशलात् । अथो इति ।
दशऽशलात् । उत । अथो इति । यमस्य ।
पड्वीशात् । विश्वस्मात् । देवऽकिल्बिषात् ॥ २८ ॥

हे रोगार्त पुरुष ! **उत** ऊर्ध्वं **पञ्चशलात्** पञ्चशरात् कामस्य पञ्चविधशरजनितकष्टात् । रलयोरैक्यम् । 'शृ हिंसायाम्' (१४८९ क्र्या० पर०) । **अथो** अपि **दशशलात्** दशेन्द्रियलक्षणशल्यात् बाण-समूहात् । **उत** अपि **त्वा** त्वाम् **अहार्षम्** आहृतवान् सम्यक् रक्षित्वा समानीतवान् । 'हृञ् हरणे'(८८९ भ्वा० उभय०),'णिञ् प्रापणे'(९०१ भ्वा० उभ०) । अपि वा—पञ्चशलात् दशशलात् इति च 'ल्यब्लोपे कर्मणि' इति वार्तिकेन पञ्चमी । पञ्चसु प्राणापानादिषु **शलात्** व्यापकात् **दशशलात्** दशसु दिक्षु व्याप्तात् परमेश्वरात् । तथावधिं

परमेश्वरमाश्रित्य परमेश्वरकरुणया इति यावत्। **अथो** अपि **यमस्य** कृतान्तस्य **पड्वीशात्** शृङ्खलालक्षणबन्धनात्। पदनशीलाः पदवः पादास्तेषां संहतिः पडवी, तस्याः ईशः नियामकः पड्वीशः शृङ्खला-लक्षणपादबन्धस्तस्मात्। पड्वीश इति वर्णविकारश्छान्दसः। **विश्व-स्मात्** सर्वस्मात् **देवकिल्बिषाद्** देवापराधाच्च, विना अपि चकारं क्वचित् समुच्चयात्, **अहार्षम्** इति पूर्वेण सम्बन्धः॥ २८॥

## अष्टमं सूक्तम् : शत्रु-पराजयः

(१-२४) ऋषिः—भृग्वङ्गिरा। देवता—इन्द्रः, वनस्पतिः, परसेनाहननञ्च। छन्दः—१,५,१३, १८ अनुष्टुप्; २,८,१९,२३ उपरिष्टाद् बृहती; ३ विराड् बृहती; ४ बृहती पुरस्तात् प्रस्तारपङ्क्तिः; ६ आस्तार-पङ्क्तिः; ७ विपरीतपादलक्ष्मा चतुष्पदाऽतिजगती; ११ पथ्या-बृहती; १२ भूरिक्; १९ पुरस्ताद् विराड् बृहती; २० पुरस्ता-न्निचृद्बृहती २१ त्रिष्टुप्; २२ चतुष्पदा शक्वरी; २४ त्र्यवसाना त्रिष्टुबुष्णिग्गर्भा पराशक्वरी पञ्चपदा जगती।

**इन्द्रो॑ मन्थतु॒ मन्थि॑ता श॒क्रः शूर॑ः पुरं॒द॒रः।**
**यथा॒ हना॑म॒ सेना॑ अ॒मित्रा॑णां सहस्र॒शः॥ १॥**

**इन्द्रः। म॒न्थ॒तु॒। मन्थि॑ता। श॒क्रः। शूर॑ः। पु॒र॒म्ऽद॒रः।**
**यथा॑। हना॑म। सेना॑ः। अ॒मित्रा॑णाम्। स॒ह॒स्र॒शः॥ १॥**

**मन्थिता** विलोडकः शत्रुघातकः **इन्द्रः** ऐश्वर्यवान् **शक्रः** शक्तिमान् **शूरः** प्रबलयोद्धा **पुरन्दरः** पुरां शत्रुदुर्गाणां विदारकः, देवराजः **मन्थतु** विलोडयतु, शत्रून् विनाशयतु। 'मन्थ विलोडने' (भ्वा० पर० ४२)। **यथा** यतः **अमित्राणाम्** शत्रूणां **सहस्रशः** सहस्रसंख्याका अपरिमिता **सेनाः हनाम** वयं व्यापादयामः॥ १॥

**पू॒ति॒रज्जुरु॑प॒ध्मानी॒ पूतिं॒ सेना॑ कृणोत्व॒मूम्।**
**धू॒मम॒ग्निं प॑रा॒दृश्या॒ऽमित्रा॑ हृ॒त्स्वा द॑धतां भ॒यम्॥ २॥**

**पू॒ति॒ऽर॒ज्जुः। उ॒प॒ऽध्मानी॑। पूति॑म्। सेना॑म्।**

कृणोतु । अमूम् । धूमम् । अग्निम् । पराऽदृश्य ।
अमित्राः । हृत्ऽसु । आ । दधताम् । भयम् ॥ २ ॥

**उपध्मानी** सशब्दं प्रज्वलन्ती । 'ध्मा शब्दाग्निसंयोगयोः' (९२८ भ्वा० पर०) ल्युट् ङीप् । **पूतिः** दुर्गन्धयुक्ता **रज्जुः** शणादि-तन्तुनिर्मित-रज्जुतुल्या, दीर्घाकृती, प्रक्षिप्ता । अद्यत्वे वैज्ञानिकाविष्कृत-विस्फोटक-द्रव्य-धूमाग्निसंयुक्ता 'बमा'दिसदृशी वर्तिका **अमूम्** सेनां **पूतिम्** व्यापादनेन दुर्गन्धयुक्तां जीर्णशीर्णां **कृणोतु** करोतु । तस्या **धूमम् अग्निं** **परादृश्य** दूरतो अवलोक्य **अमित्राः** शत्रवः **हृत्सु** हृदयेषु **भयम्** भीतिम् **आदधताम्** समन्तात् धारयन्तु ॥ २ ॥

अमूनश्वत्थ निः शृणीहि खादामून् खदिराजिरम् ।
ताजद्भङ्ग इव भज्यन्तां हन्त्वेनान् वधको वधैः ॥ ३ ॥

अमून् । अश्वत्थ । निः । शृणीहि । खाद ।
अमून् । खदिर । अजिरम् । ताजद्भङ्गःऽइव ।
भज्यन्ताम् । हन्तु । एनान् । वधकः । वधैः ॥ ३ ॥

**अश्वत्थ** हे पिप्पलवृक्ष ! स्वदिव्यशक्त्या **अमून्** शत्रून् **निःशृणीहि** निरन्तरं घातय । 'शॄ हिंसायाम्' (१४८९ क्र्या० पर०) । यद्वा—अश्वे तिष्ठतीति अश्वत्थस्तत्सम्बुद्धौ । अश्वपूर्वात् तिष्ठतेः कः । अश्वारूढ सेनापते ! **खदिर** हे खदिरवृक्ष ! अथवा स्थिरप्रकृते ! शत्रुहिंसक सेनापते ! 'खद स्थैर्य-हिंसायां च' (५० भ्वा० पर०)। **अजिरम्** (निघ० २.१५.१३) अविलम्बम्, शीघ्रम् **अमून्** शत्रून् **खाद** भक्षय, व्यापादय । 'खादृ भक्षणे' (४९ भ्वा० पर०) । किञ्च शत्रवः **ताजद्** आशु (निघ० २.१५.२४) । **भङ्गः** भग्नः अनायासं भिद्यमानः, रम्भा-स्तम्भेरण्डादिवृक्ष इव अमी शत्रवः **भज्यन्ताम्** भग्नाः भवन्तु । **वधकः** हिंसकः, तन्नामा सेनापतिविशेषः **एनान्** शत्रून् **वधैः** हिंसासाधनैः शस्त्रविशेषैः, **हन्तु** यमसदनातिथीन् विदधातु ॥ ३ ॥

परुषानमून् परुषाह्वः कृणोतु हन्त्वेनान् वधको वधैः ।
क्षिप्रं शर इव भज्यन्तां बृहज्जालेन संदिताः ॥ ४ ॥

परुषान् । अमून् । परुषऽआह्वः । कृणोतु । हन्तु ।
एनान् । वधकः । वधैः । क्षिप्रम् । शरःऽइव ।
भज्यन्ताम् । बृहतऽजालेन । सम्ऽदिताः ॥ ४ ॥

**परुषाह्वः** तन्नामधेयो वीरसेनापतिः **अमून् परुषान्** कठोरान् शत्रून् **कृणोतु** हिनस्तु । यद्वा—**परुषाह्वः** परुषान् कठोरान् शत्रून् योद्धुमाह्वयति सस्तथा, प्रबलशत्रसैनिकसङ्घर्षकः । 'ह्वेञ् स्पर्धायां शब्दे च' (१००८ भ्वा०) । अपि वा—**परुषाह्वः** अस्मत्सेनापतिः स्वसैनिकान् आत्मवत् **परुषान्** कठोरान् प्रबलयोद्धृन्, **कृणोतु** करोतु विशेषशिक्षणेन । 'कृवि हिंसाकरणयोश्च' (५९८ भ्वा० पर०) । **हन्तु एनान् वधकः वधैः** उक्तार्थः । **बृहज्जालेन** महाजालेन **संदिताः** सम् सम्यक् दिताः बद्धाः । 'दो अवखण्डने' (११४८ दिवा० पर०), अत्र धातूनामनेकार्थत्वात् बन्धनार्थकः । **क्षिप्रं** शीघ्रं शरदर्भप्रतिनिधितृणविशेष इव दर्भाणां प्रसङ्गे शरैः प्रस्तरितव्यमिति हि शास्त्रविदां वचः । **भज्यन्ताम्** भिद्यन्ताम्, शत्रव इति शेषः ॥ ४ ॥

अन्तरिक्षं जालमासीज्जालदण्डा दिशो महीः ।
तेनाभिधाय दस्यूनां शक्रः सेनामपावपत् ॥ ५ ॥

अन्तरिक्षम् । जालम् । आसीत् । जालऽदण्डाः ।
दिशः । महीः । तेन । अभिऽधाय । दस्यूनाम् ।
शक्रः । सेनाम् । अप । अवपत् ॥ ५ ॥

**अन्तरिक्षम्** द्यावापृथिव्योर्मध्यवर्ती प्रदेशः, अवकाशो वा । **जालम्** 'जल घातने' (८३३ भ्वा० पर०), 'जल अपवारणे' १५४४ चुरा० उभ०) घञ् प्रत्ययः । शत्रूणां बन्धनसाधनं घातकमपवारकं वा **आसीत्** बभूव । **महीः** महत्यः विशालाः **दिशः** प्राच्यादयः **जालदण्डाः** बभूवुः । **तेन** जालेन **दस्यूनाम्** लुण्ठकानां चौरादीनां **सेनाम् अभिधाय** आच्छाद्य, आवृत्य **शक्रः** इन्द्रः सेनापतिर्वा **अपावपत्** इतस्ततः प्रक्षिप्तवान्, छिन्नवान् वा । 'डुवप् बीजसन्ताने' (१००३ भ्वा० उभ०), अयं छेदनेऽपि इति सिद्धान्तकौमुदीवचनात् ॥ ५ ॥

बृहद्धि जालं बृहतः शक्रस्य वाजिनीवतः ।
तेन शत्रूनभि सर्वान् न्युब्ज यथा न मुच्यातै
कतमश्चन नैषाम् ॥ ६ ॥

बृहत् । हि । जालम् । बृहतः । शक्रस्य । वाजिनीऽवतः ।
तेन । शत्रून् । अभि । सर्वान् । नि । उब्ज । यथा ।
न । मुच्यातै । कतमः । चन । एषाम् ॥ ६ ॥

वीरसेनापते ! हि यस्मात् बृहत् विशालं जालम्, कस्य ? **शक्रस्य** इन्द्रस्य राज्ञो वा । शक्रं विशिनष्टि—**बृहतः** विशालस्य वाजः बलम् (निघ० २.९.२), सः विद्यते यस्याः सा **वाजिनी** बलवती क्रिया, तद्वतः । अपि वा—**वाजिनी** अश्वारूढसेना, तद्वतः । **तेन** जालेन **सर्वान् शत्रून् अभि न्युब्ज** धाव, वेगेन गच्छ, विनाशय वा । 'उब्ज आर्जवे' (१३०४ तुदा० पर०) । उब्जोऽत्र धावनवचनः विनाशन-वचनो वा । अपि वा—उब्ज अन्तर्भावितण्यर्थः, उब्जय, आर्जवं नय, ऋजून् कुरु, सरलान् विधेहि, आक्रमणादिदुःसङ्कल्पशून्यान् कुरु । विजिता हि शत्रवः पुनर्न योद्धुमिच्छन्ति, सरला भवन्ति, विजेतारं प्रति कौटिल्यं नाचरन्ति । यथा **एषाम्** शत्रूणां मध्ये **कतमश्चन** कोऽपि **न मुच्यातै** मुच्येत न मुक्तो भवेत् तथा शत्रूणामुपरि सद्य आक्राम इत्यर्थः । 'मुच्लृ मोक्षणे' (१४३१ तुदा० उभ०) कर्मणि लेटि यकि 'लेटोऽडाटौ' (पा० ३.४.९४) इति आडागमे मुच्याते, ततः 'वैतोऽन्यत्र' (पा० ३.४.९६) इति एकारस्य ऐकारः ॥ ६ ॥

बृहत् ते जालं बृहत इन्द्र शूर सहस्रार्घस्य शतवीर्यस्य ।
तेन शतं सहस्रमयुतं न्यर्बुदं जघान शक्रो
दस्यूनामभिधाय सेनया ॥ ७ ॥

बृहत् । ते । जालम् । बृहतः । इन्द्र । शूर ।
सहस्रऽअर्घस्य । शतऽवीर्यस्य । तेन ।
शतम् । सहस्रम् । अयुतम् । निऽअर्बुदम् ।
जघान । शक्रः । दस्यूनाम् । अभिऽधाय । सेनया ॥ ७ ॥

इन्द्र ! सर्वैश्वर्यसम्पन्न शूरवीरशिरोमणे । **बृहतः महतः ते** तव जालम् **बृहत्** विस्तृतं वर्तते। कीदृशस्य ? **सहस्रार्घस्य** सहस्रैः कृतपूजनस्य 'अर्ह पूजायाम्' (७४० भ्वा० प०) घञ् कुत्वम्, अर्घः पूजेति यावत् । अपि वा—सहस्रेषु अर्घः प्रतिष्ठा यस्य सस्तथा तस्य, एकाकिनः सहस्रैः समं योद्धुं शक्तस्य । **शतवीर्यस्य** असंख्यातपराक्रमोपेतस्य । अतः तेन जालेन दस्यूनाम् अपराधीनां लुण्ठकानाम् **शतम् सहस्रम् अयुतम्** दशसहस्रम् **अर्बुदम्** कोटिदशकं **सेनया** स्वसेनासाहाय्येन **अभिधाय** आच्छाद्य, आवृत्य **शक्रः** इन्द्रः सेनापतिर्वा । **नि जघान** नितरां हतवान् ।। ७ ।।

अयं लोको जालमासीच्छक्रस्य महतो महान् ।
तेनाहमिन्द्रजालेनामूंस्तमसाभि दधामि सर्वान् ।। ८ ।।

अयम् । लोकः । जालम् । आसीत् । शक्रस्य । महतः ।
महान् । तेन । अहम् । इन्द्रऽजालेन । अमून् । तमसा ।
अभि । दधामि । सर्वान् ।। ८ ।।

**महान्** विस्तृतः **अयं लोकः** संसारः प्रपञ्चः, पृथिवीलोको वा । **जालम् आसीत्** जनानां बन्धनसाधनं बभूव । कस्य ? **महतः शक्रस्य** सर्वशक्त्युपेतस्य इन्द्रस्य । ऐन्द्रजालिको ब्रूते—**अहम्** ऐन्द्रजालिकः **तेन इन्द्रजालेन अमून् सर्वान्** शत्रुसैनिकान् **तमसा** अन्धकारेण, अचेतनया मूर्च्छया वा, **अभिदधामि** आच्छादयामि । अनेन ऐन्द्रजालिको मायावी स्वेन्द्रजालप्रभावात् अन्यैः कर्तुमशक्यानि विविधानि विचित्राणि कार्याणि कर्तुं शक्नोतीति विस्पष्टमुक्तम् ।। ८ ।।

सेदिरुग्रा व्यृद्धिरार्तिश्चानपवाचना ।
श्रमस्तन्द्रीश्च मोहश्च तैरमूनभि दधामि सर्वान् ।। ९ ।।

सेदिः । उग्रा । विऽऋद्धिः । आर्तिः । च ।
अनपऽवाचना । श्रमः । तन्द्रीः । च । मोहः ।
च । तैः । अमून् । दधामि । सर्वान् ।। ९ ।।

ऐन्द्रजालिकः पुनर्ब्रूते—**तैः** पूर्वोक्तैः **अमून् सर्वान्** शत्रून् **अभिदधामि**

आच्छादयामि, आत्मसात्करोमि । तैः कैः ? इत्याकाङ्क्षायां नामानि निर्दिशति—सेदिः महाविषादः, उग्राः प्रचण्डा व्यृद्धिः निर्धनता विपत्तिर्वा च पुनः आर्तिः पीडा अनपवाचना अवर्णनीया, अपूर्वात् वचेः स्वार्थिकण्यन्तात् युच्, श्रमः परिश्रमः तन्द्रीः आलस्यम् मोहः अचेतना मूर्छा वा । अनेन इन्द्रजालस्य बहुविधानि रूपाणि दर्शितानि ॥ ९ ॥

मृत्यवेऽमून् प्र यच्छामि मृत्युपाशैरमी सिताः ।
मृत्योर्ये अघला दूतास्तेभ्य एनान् प्रति नयामि बद्ध्वा ॥ १० ॥

मृत्यवे । अमून् । प्र । यच्छामि । मृत्युऽपाशैः ।
अमी इति । सिताः । मृत्योः । ये । अघलाः ।
दूताः । तेभ्यः । एनान् । प्रति । नयामि । बद्ध्वा ॥ १० ॥

तस्यैव पुनर्वचनम्—मृत्यवे मरणाय, कालाय अमून् शत्रून् प्रयच्छामि ददामि । ते के ? इत्याकाङ्क्षायामाह—अमी ते मृत्युपाशैः बन्धनैः सिताः बद्धाः । तदेव स्पष्टयति—मृत्योः यमस्य ये अघलाः अघं पापं तेन तद्वन्तो लक्ष्यन्ते, अघान् पापिनो लान्ति गृह्णन्ति ते, 'ला आदाने', पापीजनबन्धकाः । दूताः अनुचराः ये जीवात्मानं बद्ध्वा नेतुं प्रेष्यन्ते । तेभ्यः एनान् शत्रून् बद्ध्वा प्रति प्रातिकूल्येन नयामि प्रापयामि, तद्वशीभूतान् कुर्वे ॥ १० ॥

नयतामून् मृत्युदूता यमदूता अपोम्भत ।
परःसहस्रा हन्यन्तां तृणेढ्वेनान् मत्यं भवस्य ॥ ११ ॥

नयत । अमून् । मृत्युदूताः । यमऽदूताः ।
अप । उम्भत । परःऽसहस्राः । हन्यन्ताम् ।
तृणेढु । एनान् । मत्यम् । भवस्य ॥ ११ ॥

हे मृत्युदूताः ! एनान् शत्रून् नयत स्वलोकं यमधाम प्रापयत । तत्रत्यान् यमानुचरान् सम्बोद्ध्य आह—यमदूताः यमानुचराः यमलोके यमसन्निकटवर्तिनः यमाज्ञाकारिणः अपोम्भत अप उम्भत 'उम्भ पूरणे' ( १३२१ तुदा० पर० ), धातूनामनेकार्थत्वात् अत्र प्रतिरोधवाची ।

चिरमेतेषामवरोधं कुरुत । अत्र जीवात्मानं परलोकं नेतुं प्रहिता यमानुचराः 'मृत्युदूत'पदेन यमसन्निकटवर्तिनः यमपुरुषाश्च यमदूतपदेन उक्ता इति विशेषः । **परःसहस्राः** सहस्राधिकाः अपरिमिताः शत्रूणां सनिकाः । **हन्यन्ताम्** हिंस्यन्ताम्, व्यापाद्यन्ताम् । **भवस्य** रुद्रस्य **मत्यम्**[1] शब्दकल्पद्रुम-कोषानुसारेण मुष्टिः, तदुपलक्षिता चपेटका, शस्त्रादिर्वा । **एनान्** शत्रुसैनिकान् **तृणेढु** हिनस्तु, 'तृह हिंसायाम्' ( १४५६ रुधा० पर० ) ॥ ११ ॥

साध्या एकं जालदण्डमुद्यत्य यन्त्योजसा ।
रुद्रा एकं वसव एकमादित्यैरेक उद्यतः ॥ १२ ॥

साध्याः । एकम् । जालऽदण्डम् । उत्ऽयत्य ।
यन्ति । ओजसा । रुद्राः । एकम् । वसवः ।
एकम् । आदित्यैः । एकः । उत्ऽयतः ॥ १२ ॥

जाले दण्डचतुष्टयं प्रकल्प्य पृथक्-पृथक् तद्धारकान् देवान् निर्दिशति—**साध्याः** देवाः **एकम्** कञ्चित् प्रथमं दण्डं **उद्यत्य** ऊर्ध्वं नीत्वा उत्थाप्य उद्धृत्य, आत्मसात्कृत्य 'यम उपरमे' (९८४ भ्वा० पर०), ततः क्त्वो ल्यप्, अनुनासिकलोपः, तुक् । **ओजसा** बलेन **यन्ति** यन्तु गच्छेयुः । **रुद्राः** एकादश रुद्राः **एकम्** कञ्चिदपरं द्वितीयं दण्डम्, **वसवः** अष्टौ वसवः **एकम्** कञ्चिदपरं तृतीयं दण्डम्, उद्यत्य आदाय यन्तु इति सम्बन्धः । **एकः** कश्चित् चतुर्थो दण्डः **आदित्यैः** द्वादशादित्यैः **उद्यतः** उत्थापितः । उद्-पूर्वात् यमेः क्तः, अनुनासिकलोपश्च, गृहीत्वा ऊर्ध्वोन्नीतः स्वायत्तीकृतः ॥ १२ ॥

विश्वे देवा उपरिष्टादुब्जन्तो यन्त्वोजसा ।
मध्येन घ्नन्तो यन्तु सेनामङ्गिरसो महीम् ॥ १३ ॥

---

१. 'मत'शब्दो ज्ञानवाची । ततः करणार्थे 'मतजनहलात् करणकर्षजल्पकर्षेषु' ( पा० ४.४.९७ ) इति सूत्रेण यत्-प्रत्ययः । उच्छृङ्खलोऽपि मुष्टिचपेटकादिताडितः कुमार्गं परित्यज्य सन्मार्गे समायाति, अयं सन्मार्गो गन्तव्यः, कुमार्गो त्याज्य इति विवेकं च प्रतिपद्यते ।

**विश्वे । देवाः । उपरिष्टात् । उब्जन्तः । यन्तु । ओजसा । मध्येन । घ्नन्त । यन्तु । सेनाम् । अङ्गिरसः । महीम् ॥ १३ ॥**

**विश्वेदेवाः** तदाख्यदेवविशेषाः, अपि वा **विश्वे** सर्वे देवाः इन्द्रादयः । **ओजसा** बलेन **उब्जन्तः** उब्जयन्तः शत्रून् ऋजून् नम्रान् कुर्वाणः, नमयन्तः, **उपरिष्टात्** उपरि भागे **यन्तु** गच्छन्तु । **अङ्गिरसः** देहातिरिक्तात्मवादिनो विद्वांसः विपश्चिदपश्चिमाः अङ्गं हस्तपादादिकं तद् विद्यते यस्य तदङ्गि शरीरं देहापरपर्यायम् । तत्र आत्मबुद्धिम् अविद्यां रहन्ति त्यजन्ति देहातिरिक्तात्मनिष्ठः अङ्गिरसः । 'अङ्गि'शब्दपूर्वात् 'रह त्यागे'(७३१ भ्वा० पर०)धातोः औणादिकोऽसुन् । **मध्येन** मध्यप्रदेशेन **महीम्** सेनाम् **घ्नन्तः** नाशयन्तः, यन्तु इति सम्बन्धः ॥ १३ ॥

**वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ।**
**द्विपाच्चतुष्पादिष्णामि यथा सेनाममूं हनन् ॥ १४ ॥**

**वनस्पतीन् । वानस्पत्यान् । ओषधीः । उत ।**
**वीरुधः । द्विऽपात् । चतुःऽपात् । इष्णामि ।**
**यथा । सेनाम् । अमूम् । हनन् ॥ १४ ॥**

**वनस्पतीन्** अश्वत्थादि-वृक्षविशेषान् **वानस्पत्यान्** वनस्पतिविकारान् वनस्पतिसमुत्पन्नान् पदार्थविशेषान् **ओषधीः**[1] गोधूमचणकादिरूपाः **उत** अपि **वीरुधः** लतादीन् **द्विपात्** द्विपादं मनुष्यम्, अमः सुरादेशः । **चतुष्पाद्** चतुष्पादं गवादिकं पशुं **इष्णामि** प्रेरयामि प्रोत्साहयामि, **यथा** येन प्रकारेण **अमूम् सेनां** शत्रु सम्बन्धिनीं सेनां **हनन्**, लेटि रूपम्, हन्युरित्यर्थः ॥ १४ ॥

**गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् ।**
**दृष्टानदृष्टानिष्णामि यथा सेनाममूं हनन् ॥ १५ ॥**

---

१. 'ओषध्यः फलपाकान्ताः' इत्यमरः (२.४.६) । अर्थात् फलपाकपर्यन्तमवस्थायिन्यः ओषधयः । फलपाकानन्तरमपि अवतिष्ठमानो वृक्षादिर्वनस्पतिरिति तयोर्भेदः ।

गन्धर्वऽअप्सरसः । सर्पान् । देवान् । पुण्यऽजनान् ।
पितृन् । दृष्टान् । अदृष्टान् । इष्णामि । यथा ।
सेनाम् । अमूम् । हनन् ॥ १५ ॥

**गन्धर्वाप्सरसः** गन्धर्वान् देवयोनिविशेषान् अप्सरसः गन्धर्वपत्नीः देवाङ्गना वा **सर्पान्** विषधरान् नागान् **देवान्** इन्द्रादीन् **पुण्यजनान्** शास्त्रीयपथगामिनः श्रेष्ठान् जनान् **पितॄन्** श्राद्धदेवान् **दृष्टान्** अवलोकितान् **अदृष्टान्** अनवलोकितान् ज्ञाताज्ञातान् इत्यर्थः, **इष्णामि यथा सेनाम् अमूम् हनन्** इति व्याख्यातपूर्वम् ॥ १५ ॥

इम उप्ता मृत्युपाशा यानाक्रम्य न मुच्यसे ।
अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः ॥ १६ ॥

इमे । उप्ताः । मृत्युऽपाशाः । यान् । आऽक्रम्य । न । मुच्यसे ।
अमुष्याः । हन्तु । सेनायाः । इदम् । कूटम् । सहस्रऽशः ॥ १६ ॥

**इमे** पुरोवर्तिनः **मृत्युपाशाः** मरणबन्धाः **उप्ताः** निक्षिप्ताः, क्षेत्रे गोधूमादिवीजवत् प्रसारिताः 'डुवप् बीजसन्ताने' (१००३ भ्वा०)। शत्रो ! त्वमपि **यान् आक्रम्य** उल्लङ्घ्य **न मुच्यसे** न मुक्तो भवसि, आत्मानं त्रातुं न क्षमसे । **अमुष्याः** तस्याः त्वदधिष्ठितायाः **सेनायाः सहस्रशः** पुरुषसहस्रम् **इदं कूटं** गुप्तभावेन पृथिव्यां निक्षिप्तम् अज्ञातं विस्फोटकद्रव्यं **हन्तु** हन्यात् ॥ १६ ॥

घर्मः समिद्धो अग्निनायं होमः सहस्रहः ।
भवश्च पृश्निबाहुश्च शर्व सेनाममूं हतम् ॥ १७ ॥

घर्मः । सम्ऽइद्धः । अग्निना । अयम् ।
होमः । सहस्रऽहः । भवः । च । पृश्निऽबाहुः ।
च । शर्व । सेनाम् । अमूम् । हतम् ॥ १७ ॥

**अग्निना** वह्निना **समिद्धः** दीप्तः प्रज्वलितः **घर्मः** प्रवर्ग्याहुतिसाधन-हविर्विशेषः, महावीरपात्रपक्व-अजापयस्सम्मिलितघनीभूतो

गोदुग्धपरिणामविशेषः। अपि वा—घर्मः तापः तद्वत् अयं होमः धर्म-साध्यः प्रवर्ग्याख्यः **सहस्रहः** सहस्रक्लेशनाशकः छिन्नयज्ञशिरःसंयोजकत्वात् निखिलयज्ञप्रत्यूहनिवारकत्वाच्च। **भवः** हे सर्वसंहारक, रुद्र! 'शॄ हिंसायाम्' (१४८९ क्र्या० पर०) औणादिको वन्, शृणाति हिनस्ति सर्वं लोकम्, सर्वसंहारक! त्वं **पृश्निबाहुः** विचित्रभुजसंयुक्तः **पृश्निः** पृथिवी बाहौ यस्य तथाभूतश्च। पुनः **भवः** भवति विश्वं यस्मात् जगदुत्पादकः उभौ युवाम् **अमूं सेनाम्** शत्रुसेनां **हतम्** व्यापादयतम्। हन्तेर्लोटि मध्यमपुरुषद्विवचनम्॥ १७॥

**मृत्योराषमा पद्यन्तां क्षुधं सेदिं वधं भयम्।**
**इन्द्रश्चाक्षुजालाभ्यां शर्व सेनाममूं हतम्॥ १८॥**

**मृत्योः। आषम्। आ। पद्यन्ताम्। क्षुधम्। सेदिम्।**
**वधम्। भयम्। इन्द्रः। च। अक्षुऽजालाभ्याम्।**
**शर्व। सेनाम्। अमूम्। हतम्॥ १८॥**

**मृत्योः** यमस्य **आषम्** ग्रहणम् आदानं बन्धनं 'अस गतिदीप्त्यादानेषु' (८८६ भ्वा० उभ०) **क्षुधम्** बुभुक्षाम् **सेदिम्** शरीरशैथिल्यम्, **वधम्** हिंसाम् **भयम्** भीतिम् **आपद्यन्ताम्** लभन्तां शत्रुसैनिकाः। **शर्व**! त्वं **च** पुनः **इन्द्रः** युवाम् **अक्षुजालाभ्याम्** बन्धनविशेष-जालाभ्यां 'अक्ष व्याप्तौ' (६५४ भ्वा० पर०) अक्षति व्याप्नोति निगडति शरीरस्यावयवमिति अक्षः हस्तपादादिनिगडनहेतुः लौहशृङ्खला, ताभ्याम **सेनाम् अमूम् हतम्** इति व्याख्यातपूर्वम्॥ १८॥

**पराजिताः प्र त्रसतामित्रा नुत्ता धावत ब्रह्मणा।**
**बृहस्पतिप्रणुत्तानां मामीषां मोचि कश्चन॥ १९॥**

**पराऽजिताः। प्र। त्रसत। अमित्राः। नुत्ताः।**
**धावत। ब्रह्मणा। बृहस्पतिऽप्रनुत्तानाम्।**
**मा। अमीषाम्। मोचि। कः। चन॥ १९॥**

**अमित्राः** शत्रवः, अस्मद्द्वेष्टारः **पराजिताः** पराभूताः सन्तः **प्रत्रसत** प्रकर्षेण त्रस्त, विभीत। **ब्रह्मणा** मन्त्रसामर्थ्येन, चतुर्वेदपारगेण विदुषा

वा, **नुत्ताः** प्रेरिताः **धावत** इतस्ततः पलायनं कुरुत। **बृहस्पति-प्रणुत्तानाम्** बृहस्पतिना देवगुरुणा तद्दर्शितानीतिमार्गेण प्रकर्षेण नुत्तानां पलायनं कारितानाम्। **अमीषाम्** शत्रूणां मध्ये **कश्चन** कश्चिदपि **मा मोचि** मुक्तो मा भूत् ॥ १९ ॥

अवं पद्यन्तामेषामायुंधानि मा शंकन् प्रतिधामिषुंम् ।
अथैषां बहु बिभ्यंतामिषंवो घ्नन्तु मर्माणि ॥ २० ॥

अवं । पद्यन्ताम् । एषाम् । आयुंधानि । मा ।
शकन् । प्रतिऽधाम् । इषुंम् । अर्थ । एषाम् ।
बहु । बिभ्यंताम् । इषंवः । घ्नन्तु । मर्माणि ॥ २० ॥

**एषाम्** शत्रूणाम् आयुधानि शस्त्राणि **अवपद्यन्ताम्** नीचैः पृथिव्यां पतन्तु। **इषुम्** बाणं **प्रतिधाम्** प्रतिपूर्वात् धा-धातोः शकि 'णमुल-कमुलौ' (पा० ३.४.१२) इति सूत्रेण शकियोगे तुमर्थे णमुल्। धनुषि संधातुं **मा शकन्** शक्ता न भवन्तु, अमी शत्रवः अमीषां हस्तपादादयो वा। **अथ** अपि च **बहु बिभ्यताम्** अतित्रस्तानाम् एषां **मर्मणि** कर्णमूलादि-मर्मस्थाने **इषवः** बाणाः **घ्नन्तु** हिंसन्तु ॥ २० ॥

सं क्रौंशतामेनान् द्यावांपृथिवी समन्तरिक्षे सह देवताभिः ।
मा ज्ञातारं मा प्रतिष्ठां विंदन्त मिथो विंघ्नाना उपं
यन्तु मृत्युम् ॥ २१ ॥

सम् । क्रोशताम् । एनान् । द्यावांपृथिवी इतिं ।
सम् । अन्तरिंक्षम् । सह । देवताभिः । मा ।
ज्ञातारम् । मा प्रतिऽस्थाम् । विदन्त । मिथः ।
विऽघ्नानाः । उप । यन्तु । मृत्युम् ॥ २१ ॥

**द्यावापृथिवी** द्युलोक-पृथिवीलोकौ **एनान्** सपत्नान् **संक्रोशताम्** आक्रोशताम्, अभिशप्ताम्। 'क्रुश आह्वाने रोदने च' (८५६ भ्वा०) समुपसर्गोऽत्र आङोऽर्थे, एतेषां विरुद्धानुध्यानं कुरुताम्। अपि वा—अधमाः ! किमर्थमत्र आया इति तिरस्कारपूर्वकम् उच्चैः आभणताम्।

**देवताभिः** इन्द्रादिभिः **सह** साकं **अन्तरिक्षम्** द्यावापृथिव्योर्मध्यवर्ती प्रदेशः **सम् क्रोशताम्** संक्रोशतु। एते शत्रवः **मा न ज्ञातारं** परिचायकं विद्वांसम् उपचारेण वा रक्षक **प्रतिष्ठाम्** आश्रयं गौरवं वा **मा विदन्त** न लभन्ताम्। **मिथः** परस्परं **विघ्नानाः** विरुन्धानाः, हिंसन्तः **मृत्युं** मरणम् **उपयन्तु** उपगच्छन्तु॥ २१॥

दिशश्चतस्रोऽश्वतर्यो देवरथस्य पुरोडाशाः शफा अन्तरिक्षमुद्धिः।
द्यावापृथिवी पक्षसी ऋतवोऽभीशवोऽन्तर्देशाः किंकरा वाक् परिरथ्यम्॥ २२॥

दिशः। चतस्रः। अश्वतर्यः। देवऽरथस्य। पुरोडाशाः। शफाः। अन्तरिक्षम्। उद्धिः। द्यावापृथिवी इति। पक्षसी इति। ऋतवः। अभीशवः। अन्तःऽदेशाः। किम्ऽकराः। वाक्। परिऽरथ्यम्॥ २२॥

देवरथरूपकेणाह—चतस्र इति। **दिशः** प्राच्याद्याः **चतस्रः** चतुःसंख्याकाः **देवरथस्य** देवानां रमणसाधनस्य वाहनविशेषस्य **अश्वतर्यः** खच्चर्यः। **पुरोडाशाः** पक्वान्नहविर्विशेषाः। **शफाः** खुराः। **अन्तरिक्षम्** द्यावापृथिवीमध्यवर्ती प्रदेशः, सावकाशत्वसाम्येन **उद्धिः** उपवेशनस्थानम्। उत् ऊर्ध्वम् उपरि वा धीयते धार्यते स्थाप्यते सोपकरणो रथो यत्र स उद्धिः। उत्-पूर्वात् दधातेः अधिकरणे उपसर्गः 'घो किः' 'कर्मण्यधिकरणे चे'ति किप्रत्ययोऽकारलोपश्च। **द्यावापृथिवी** द्युलोको पृथिवीलोकश्च **पक्षसीः** रथस्य पार्श्वौ **ऋतवः** वसन्तादयः षट् **अभिशवः** अश्वरश्मयः। **अन्तर्देशाः** अवान्तरदिशः अन्तर्वर्तिनः प्रदेशाः वा **किंकरा** दासाः सेवकाः। रथस्येदं **रथ्यम्** रथात् यत् **परि** परिवेष्टनं **वाक्** वाणी आतपवर्षादिभ्यस्त्राणार्थमाच्छादकं वस्त्रादिनिर्मितं 'छदिर'नामधेयम्॥ २२॥

संवत्सरो रथः परिवत्सरो रथोपस्थो विराडीषाग्नी रथमुखम्।
इन्द्रः सव्यष्ठाश्चन्द्रमाः सारथिः॥ २३॥

संवत्सरः । रथः । परिऽवत्सरः । रथऽउपस्थः ।
विऽराट् । ईषा । अग्निः । रथऽमुखम् । इन्द्रः ।
सव्यऽस्थाः । चन्द्रमाः । सारथिः ॥ २३ ॥

किञ्चित् परिवर्तनेन तमेवार्थमाह—**संवत्सरः** द्वादशमासपरिमितः कालविशेषो **रथः**, देवानामिति शेषः । **परिवत्सरः परि** परिवर्तमानो **वत्सरः** वर्षविशेषः यस्मिन् वर्षे द्वादशमासेभ्योऽधिकः पुरुषोत्तमनामधेयोऽधिमासो जायते स पुरुषोत्तमाख्यत्रयोदशाधिमासयुक्तो वर्षविशेषः। **रथोपस्थः** रथस्योपवेशनस्थानम् । तदत्र निगमो भवति—'वेदमासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ॥' (ऋ० १.२५.८) । अस्यार्थः—(धृतव्रतः) गृहीतव्रतः वरुणः (प्रजावतः) प्रजायुक्तान् द्वादशमासान् ( वेद ) जानाति (यः) पुरुषोत्तमाख्यः त्रयोदशो मासः (उपजायते) तृतीये वर्षे द्वादशमासानां समीपे जायते, उत्पद्यते तमपि ( वेद ) जानाति इति । **विराड्** विविधं राजते इति विराट्, स्थावरजङ्गमलक्षणा विविधाः सृष्टिः **ईषा** रथयुगदण्डः, **अग्निः** वह्निः **रथमुखम्** रथाग्रम् । अग्निशब्दात् सौ सस्य रुत्वे रोरि इति रलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । **इन्द्रः** इन्द्रो देवः **सव्यष्ठाः** वामपार्श्वस्थः **सारथिः** सहकारी **चन्द्रमाः** शशधरः सारथिः, सञ्चालकः ॥ २३ ॥

इतो जयेतो वि जय सं जय जय स्वाहा ।
इमे जयन्तु परामी जयन्तां स्वाहैभ्यो दुराहाऽमीभ्यः ।
नीललोहितेनामूनभ्यवतनोमि ॥ २४ ॥

इतः । जय । इतः । वि । जय । सम् । जय । जय ।
स्वाहा । इमे । जयन्तु । परा । अमी इति । जयन्ताम् ।
स्वाहा । एभ्यः । दुराहा । अमीभ्यः । नीलऽलोहितेन ।
अमून् । अभिऽअवतनोमि ॥ २४ ॥

"इत" इति पदद्वयमावृत्त्या चतुष्टयं सत् एकैकं प्रतिवाक्यं सम्बद्धचते । इदंशब्दः बुद्धिस्थवाचितया चतुरो दिशः आचष्टे ।

तथा हि आशीर्वचनप्रयोक्ता पुरोहितः राजानं स्वयजमानं ब्रूते— (१) **इतः जय** । अस्यां प्रतीच्यां दिशि जयं प्राप्नुहि । (२) **इतः विजयः** अस्यां प्राच्यां दिशि विजयं लभस्व । शत्रोः विद्रावणमात्रं जयः, तन्निगृह्य तत्-सम्पत्त्यधिकारो विजयः । (३) **इतः संजयः** अस्यामुदीच्यां दिशि सम्यक् जयः उत्कर्षं लभस्व । (४) **इतः जयः** अस्यां दक्षिणस्यां दिशि जयः । एतेन वाक्यचतुष्टयेन सर्वासु दिक्षु यजमानस्य जयः पुरोहितेन आशास्यते[1] शत्रोः पुनराक्रमणाक्षमतासम्पादनं संजयः । निगृह्य आत्मसात्करणमत्र जयः । **स्वाहा** सु आहा इति छेदः । आङ्पूर्वात् जुहोतेर्डा, आहा आहुतिः । विजिगीषया दत्ताहुतिः सुशोभना कल्याणकरी सफला भवतु । **इमे** मम वीराः **जयन्तु** शत्रूनभिभवन्तु । **अमी** शत्रवः **पराजयन्ताम्** पराजिताः सन्तु । **स्वाहा** सुवाणी सुकीर्तिः **एभ्यः** अस्मदीयेभ्य वीरेभ्यः, अस्माकं वीराः प्रचुरसुकीर्तिधनाः विद्यन्ताम् । **दुराहा अमीभ्यः** शत्रुभ्यः **दुर् आहा** दुर्-वाणी दुष्कीर्तिः, शत्रवो निन्दनीया भवन्तु । **नीललोहितेन** लक्षणया नीललोहितरुद्रकृपया **अमून् शत्रून् अभि** आभिमुख्येन विशेषतः **अवतनोमि** अधो विस्तारयामि, भूमौ पातयामि । अपि वा—नीललोहितेन नीलमणि-लोहितमणिलक्षण-बहुधनलाभेन, अथवा नीललोहितेन नीलवसन-लोहितवसनधारिणा सैन्येन तद्बलेनेत्यर्थः ॥ २४ ॥

---

१. 'आङ् शासु इच्छायाम्' ( १०२२ अदा० आ० ) ।

## नवमं सूक्तम् : विराट्

(१–२६) ऋषिः—अथर्वा। देवता—कश्यपः, सर्वे ऋषयः छन्दांसि च, विराट्। छन्दः—१, ६, ७, १०, १३, १५–२१, २४ त्रिष्टुप्; २ पङ्क्तिः; ३ आस्तारपङ्क्तिः; ४-५, २३, २५, २६ अनुष्टुप्, ८, ११-१२, २२ जगती; ९ भुरिक्; १४ चतुष्पदातिजगती।

[अष्टमे काण्डे पञ्चमानुवाके प्रथमकाण्डतो नमम्, इदं सूक्तं सृष्टिप्रतिपादकं षड्विंशति-ऋचात्मकम्।]

कुतस्तौ जातौ कतमः सो अर्धः कस्माल्लोकात्
कतमस्याः पृथिव्याः।
वत्सौ विराजः सलिलादुदैतां तौ त्वा
पृच्छामि कतरेण दुग्धा ॥ १ ॥

कुतः। तौ। जातौ। कतमः। सः। अर्धः। कस्मात्। लोकात्। कतमस्याः। पृथिव्याः। वत्सौ। विऽराजः। सलिलात्। उत्। ऐताम्। तौ। त्वा। पृच्छामि। कतरेण। दुग्धा ॥ १ ॥

अस्मिन् मन्त्रे 'तौ जातौ कतमः सो अर्धः' इति निर्देशात् सप्तमे मन्त्रे 'षट् त्वा पृच्छाम ऋषयः कश्यपेमे' इति चोक्तेः सूक्तमिदं कृत्स्नायाः प्रश्नोपनिषदः, बृहदारण्यकोपनिषदश्च प्रथमाध्याय-चतुर्थब्राह्मणस्य मूलमिति प्रतीयते। तस्मात् तदनुसारमेव व्याख्यातव्यमिदम्। तत्रैष प्रथमो मन्त्रः—कुतस्ताविति।

**कुतः** कस्मात् **तौ** रयि-प्राणौ, 'स मिथुनमुत्पादयते रयिं च प्राणं च' (प्रश्नोप० ३. १. ४) इति श्रुतेः। स्त्री-पुरुषौ वा, 'स वै नैव रेमे तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स हैतावानास स्त्रीपुंमाँ सौ संपरिष्वक्तौ। स इममेवाऽऽत्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवताम्। तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यः। तस्मादयमाकाशः स्त्रिया पूर्यत एव। ताँ समभवत्ततो मनुष्या अजायन्त।' (बृह० उ० १.४.३)।

अपि वा–सांख्यनये **तौ** प्रकृतिपुरुषौ **जातौ** उत्पन्नौ प्रादुर्भूतौ वा।

किम्-शब्दः प्रश्नवाची, वाक्पथातीतालौकिकवस्तुवचनश्च। तथा-सति 'कुतः' इति शब्दः श्लेषेण प्रश्नं तत्समाधानञ्च सूचयति। **कुतः** कस्मात् कारणात् इति प्रश्नः, वक्तुमशक्यात् महामहिमशालिनो लोकोत्तरप्रजापतेः तयोरुत्पत्तिरिति च तत्समाधानम्।

प्रकृति-पुरुषपक्षे अनादित्वात्तयोरुत्पत्त्यसंभवात् फलोन्मुखादृष्ट-वशात् पुरुषसन्निधानेन प्रकृतेः सृष्ट्याकारविपरिणामरूपः प्रादुर्भावः, अयस्कान्तमणिसम्पर्काद् अयःखण्डे चलनमिव स्वसन्निधान-मात्रेण प्रकृतौ सचेष्टत्वापादनं च पुरुषप्रादुर्भाव इति ध्येयम्। पति-पत्न्योः मिथः संयोगेन एकं शरीरम्। तत्र अर्धः पत्न्यः अंशः, अर्धश्च पुरुषस्य अंशः।

**कतमः** कः इति प्रश्नः। कतर इति वक्तव्ये व्यक्तिभेदेन भूतमभि-प्रेत्य कतम इति निर्देशः। अर्धशब्दोऽपि श्लिष्टः खण्डवचनः श्रेष्ठ-वचनश्च। तथा सति अर्धः श्रेष्ठः दक्षिणांशः पुरुष इति एकेनैव अर्ध-शब्देन प्रश्नः समाधानञ्च सूच्यते। तदुक्तं देवीभागवते—

'स कृष्णः सर्वसृष्ट्यादौ सिसृक्षन्नेक एव च।
सृष्ट्युन्मुखस्तदंशेन कालेन प्रेरितः प्रभुः॥
स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह।
स्त्रीरूपो वामभागांशो दक्षिणांशः पुमान् स्मृतः॥' इति।

अत्र कृष्णो न वासुदेवः कंसादिसंहर्ता। किं तर्हि? सृष्टिरचयिता परमात्मा। वासुदेवः कृष्णस्तु तदवतारः। अथवा—**अर्धः** अर्धभागः जगल्लक्षणः, तद् असंस्पृष्ट-परब्रह्मलक्षणश्च। **कतमः** कः इत्यत्रापि कतमोक्तिः सांसारिक-वस्तुबहुत्वाभिप्रायेण। 'वेदो वेदेनैव व्याख्यातव्यः' इति विद्वन्मतानुसारेण पुरुषसूक्तं (ऋ० १०. ९०) समाश्रित्य तत्र 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' (ऋ० १०. ९०. ३) 'त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः' (ऋ० १०.९०. ४) इति च मन्त्रः।

अत्र सायणः—**अस्य** पुरुषस्य **विश्वा** सर्वाणि भूतानि कालत्रय-वर्तीनि प्राणिजातानि **पादः** चतुर्थांशः। **अस्य** पुरुषस्य अवशिष्टं **त्रिपात्** स्वरूपम् **अमृतं** विनाशरहितं सत् **दिवि** द्योतनात्मके स्वप्रकाश-स्वरूपे, व्यवतिष्ठत इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० आ० ८. १, तै० उ० ३. २. १) इत्याम्नातस्य परब्रह्मण इयत्ता-

भावात् पादचतुष्टयं निरूपयितुमशक्यम्; तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाऽल्पमिति विवक्षितत्वात् पादत्वोपन्यासः। योऽयं **त्रिपात्** पुरुषः संसाररहितो ब्रह्मस्वरूपः, सोऽयम् **ऊर्ध्व उदैत्** अस्मादज्ञानकार्यात् संसाराद्बहिर्भूतोऽत्रत्यैः गुणदोषैरसंपृष्ट उत्कर्षेण स्थितवान्। तस्य **अस्य** सोऽयं **पादः** लेशः सोऽयम् इह मायायां **पुनः अभवत्**। सृष्टि-संहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताऽप्युक्तम्—

'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।'

( भ०गी० १०.४२ ) इति।

इत्थं तद्व्याख्यातवर्त्मना **अर्धः** खण्डः **कतमः** बहूनां मध्ये कः। अर्धद्वित्वेऽपि पादचतुष्टयाभिप्रायेण कतम इति निर्देशः। अत्र अर्धशब्दो न समांशार्धभागवाची, अपितु खण्डपर्यायः। अर्धः खण्डः। **कतमः** किं स्वरूपः। अत्रापि कतमः कशब्दो प्रजापति-वाची। अतिशयेन कः कतमः सर्वोत्कृष्टः प्रजापतिः पुरुषलक्षणः **अर्धः** त्रिपात्स्थानीयः अर्धभाग इति श्लेषमहिम्ना पूर्ववदेव प्रश्नः समाहितः।

**कस्मात् लोकात्**। लोकशब्दोऽत्र पुरुषवचनः। **कतमस्याः पृथिव्याः** पृथिवीशब्दोऽत्र प्रकृतिवचनः। तथा च पुरुषं प्रकृतिं च अपेक्ष्य संसारलक्षणः तदसम्बद्ध-ब्रह्मलक्षणश्च अर्धः खण्ड इति पर्यवस्यति। अहो भगवतो वेदस्य वर्णनपद्धति-महिमा श्लेष-प्रचुरः ! यतः एकेनैव वाक्येन प्रश्नः, तत्-समाधिश्च लोकैरवगम्यते। कस्या इति वक्तव्ये कतमस्या इति छान्दसः प्रयोगः। **विराजः** प्रकृतेः मायाऽपरनामधेयायाः **वत्सौ** शिशू, तनयौ जीवेश्वरलक्षणौ। तदुक्तं पञ्चदश्याम्—

'मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ।
यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि॥'

(पञ्च० चित्र० श्लो० २३६)

**सलिलात्** प्रलयावस्थायां स्वाधारेषु अन्तःकरणेषु जीवोपाधिभूतेषु मायायां विलीनेषु तत्स्थं फलदानोन्मुखं पुण्यपापाख्यकर्मजातं स्वाधारेण सह मायायां विलीनत्वात् यथा विलीना हिमशिला जलभावमापद्यते, विलीनत्वसाम्येन तादृशं सलिलसदृशं कारण-वार्यपरनामकं धर्माधर्मजातं भाविजन्मस्वफलोपभोगाय भावि-सृष्टि-कारण सलिलशब्देन प्रोच्यते। तस्मात् सलिलात् फलोन्मुख-भाविसृष्टिहेतु-

कर्मसन्दोहात् **उदैताम्** 'उद् गतौ', प्रादुर्भूतौ, प्राकट्यं लब्धवन्तौ। उद्-पूर्वाद् 'इण गतौ' इत्यस्मात् लङि प्रथमपुरुष-द्विवचने तसि तामादेशे आडागमे वृद्धौ रूपम्।

अथवा—सृष्टिवेलायां सर्वतः पूर्वावस्था सलिलावस्था आसीत्, जले शयानस्य नारायणस्य ब्रह्माण्डाद्युत्पत्तिक्रमेण नाभि-कमलात् ब्रह्मोत्पद्यते इति शास्त्रवित्समयः।

'अम्भः किमासीद्गहनं गभीरम्।' (ऋ० १०.१२९.२)

**गहनं** दुष्प्रवेशं **गभीरम्** अत्यगाधम् अम्भः सलिलम् **आसीत्**। किं तदपि नासीदित्यर्थः। प्रलयावस्थायां सलिलप्रतिक्षेपमुखेन सृष्टिदशायां सर्वस्मात् प्राक् सलिलावस्था बभूवेति व्यज्यते। 'सलिलं सर्वमा इदम्।' (ऋ० १०.१२९.३)। **इदम्** दृश्यमानं जगत् **सर्वं सलिलम्** आः आसीत्। सलिलावस्थमभवत्। अस्तेर्लङि तिपि 'बहुलं छन्दसि' (पा० सू० ७.३.५७) इतीडभावे 'हलङ्याब्भ्यः' इति तिलोपे 'तिप्यनस्तेः' (पा० सू० ८.२.७३) इति पर्युदासाद् दकाराभावे रूपसिद्धिः। अत्र स्फुटमेव सृष्टिसमये सर्वतः प्रागवस्था सलिलावस्थैव वर्णिता।

तौ जीवेशौ **त्वा** त्वां त्वत्तः **पृच्छामि** अहं जिज्ञासे। **कतरेण** तयोर्मध्ये केन प्रकृतिर्गौः **दुग्धा** कृतदोहा। दुग्ध्वा तदीयं पयः केन स्वयं पीतम्, अन्यञ्च पायितमिति प्रश्नः। कतरेण इति श्लिष्ट-शब्देन अतिशयेन कः इति कतरः, तेन सर्वोत्कृष्टप्रजापतिना दुग्धेति समाधानम्। परमेश्वराज्ञया तमःप्रधान-प्रकृतेः जीवकृत-कर्मफलभोगाय वियदादिप्रपञ्चाकारपरिणतिरेव दोहनम्। तदुक्तम्—

'तमः प्रधाना प्रकृतिस्तद्भोगायेश्वराज्ञया।
वियत्पवनतेजोम्बुभुवो भूतानि जज्ञिरे॥
(पञ्च० तत्त्व० प्रश्न १ श्लो० १८)

ईश्वरो दोग्धा, द्वैतं पयः, तच्च ईश्वरः स्वयं पीतवान्, जीवञ्च पायितवान् इति निष्कर्षः। 'यथेच्छं पिबतां द्वैतम्' इति चोक्तपूर्वम्।

'कतमः' किंशब्दात् 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा० सू० ५.३.९३) इति सूत्रेण डतमच् प्रत्ययः। 'कतरेण' किं-शब्दात् 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' (पा० सू० ५.३.९२) इति सूत्रेण डतरच् प्रत्ययः। 'दुग्धा' गौः, प्रकृतिरूपिणी इति शेषः। 'दुः प्रपूरणे'

३

( १०१४ अदा० ) । गौणे कर्मणि क्तः, 'गौणे कर्मणि दुह्यादेरि'त्युक्तेः गोपयोलक्षणद्विकर्मकस्य दुहेः गोर्गौणकर्मत्वात् । स्फुटं हि 'गां दोग्धि पयः' इत्यत्र पयसो मुख्यकर्मत्वेन गोः 'अकथितञ्चेति' कर्मसंज्ञायां गौणकर्मत्वम् ॥ १ ॥

यो अक्रन्दयत् सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयानः ।
वत्सः कामदुघो विराजः स गुहा चक्रे तन्वः पराचैः ॥ २ ॥

यः । अक्रन्दयत् । सलिलम् । महिऽत्वा । योनिम् ।
कृत्वा । त्रिऽभुजम् । शयानः । वत्सः । कामऽदुघः ।
विऽराजः । सः । गुहा । चक्रे । तन्वः । पराचैः ॥ २ ॥

**यः** परमात्मा **त्रिभुजम्** निम्नोन्नतं मध्यलक्षणत्रिभूमिकं पृथिव्यन्तरिक्षद्युरूपलोकत्रयोपेतं **योनिम्** गृहम् **कृत्वा** विधाय **शयानः** सुप्तः स्थितः **सलिलम्** सृष्टिहेतुभूतं स्वाधारान्तःकरणैः सह मायायां विलीनं प्राणीकृत-धर्माधर्माख्यादृष्टजातं कारण-वारिशब्दाभिधेय **महित्वा** महिम्ना महत्त्वेन, स्वशक्त्या **अक्रन्दयत्** आह्वयत्, सचेष्टमकरोत् । आहूतो हि चेष्टते, तस्मात् आह्वानमत्र सचेष्टीकरणम् । स्वकार्यकरणे प्रवर्तयामास, स्वफलदानोन्मुखं चकारेति यावत् । **विराजः** प्रकृतेः **वत्सः** शिशुस्थानीयः **सः** परमेश्वरः **कामदुघः** स्वभक्तसमीहितसाधकः **पराचैः** पराग्भिः, अदन्तत्वाभावेऽपि भिस्विभक्तेरैसादेशः, विभक्ति-वचन-व्यत्ययश्च छान्दसः । प्राच्यां सुदूरवर्तिन्यां **गुहा** गुहायां हृदि, 'सुपां सु०' इति विभक्तेर्लुक् । **तन्वः** विस्तारान् **चक्रे** कृतवान्, सृष्टि-विस्तारम् इयेषेत्यर्थः । श्रुतिरपि—'सोऽकामयत बहु स्याम् प्रजायेयेति' । 'योनिरिति गृहनाम' (निघ० ३.४.१४) । 'युः मिश्रणामिश्रणयोः' (१०३३ अदा०), औणादिको नि-प्रत्ययः, गुणः । 'मिश्रतेऽनेन सुखं, पृथग् भूयन्तेऽनेनानिष्टा इति परिवीतो वा प्राकारादिना' इति देवराजः । 'कामदुघः' दुह प्रपूरणे (१०१४) 'दुहः कब्घश्चेति (पा० सू० ३.२.७०) कप्' इति । 'त्रिभुजम्' भुजशब्दोऽत्र न बाहुवचनः । किं तर्हि ? भोगस्थानवाचकः । भुज्यते भोग्यजातम् उपविश्य यत्रेति व्युत्पत्तेः ॥ २ ॥

यानि त्रीणि बृहन्ति येषां चतुर्थं वियुनक्ति वाचम् ।
ब्रह्मैनद् विद्यात् तपसा विपश्चिद् यस्मिन्नेकं युज्यते
यस्मिन्नेकम् ॥ ३ ॥

यानि । त्रीणि । बृहन्ति । येषाम् । चतुर्थम् । विऽयुनक्ति ।
वाचम् । ब्रह्म । एनत् । विद्यात् । तपसा । विपःऽचित् ।
यस्मिन् । एकम् । युज्यते । यस्मिन् । एकम् ॥ ३ ॥

अस्य मन्त्रस्य विवरणं माण्डूक्योपनिषदि—'सर्वं ह्येतद् ब्रह्म अयमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्' इति ( माण्डू० उ० क० २ ), 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' (मा०डू० उ० क० ७) इति च दृश्यते। अतो अस्मिन् मन्त्रे **यानि त्रीणि** चतुष्पादमात्मानमुपक्रम्य क्रमेण तृतीय-चतुर्थ-पञ्चमकण्डिकासु 'स्थूलभुक् वैश्वानरः प्रथमः पादः', 'प्रविविक्तभुक् तैजसो द्वितीयः पादः', 'आनन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः' इत्येवं वर्णितानि प्रथमादिपादस्वरूपाणि **बृहन्ति** महान्ति सन्ति। वैश्वानरः विश्वश्च, तैजसः हिरण्यगर्भश्च, प्राज्ञः ईश्वरश्च अन्तर्यामिण उपलक्षकः। तथा च व्यष्टिसमष्टिभेदेन त्रयः पादा आत्मनस्त्वंपदार्थस्य जीवस्य विश्व-तैजस्-प्राज्ञाख्याः, ब्रह्मणश्च विराडपरपर्यायस्य-१. वैश्वानर-२. हिरण्यगर्भ-३. अन्तर्याम्याख्याः वर्तन्ते। **चतुर्थः** पादः त्वंपदलक्ष्य-प्रत्यगात्म-तुरीयाभिधानः ब्रह्मनामधेयश्च। इत्थं जीव-ब्रह्मणोः पादचतुष्टयं पर्यवस्यति। समष्टि-स्थूलशरीरसृष्टचभिमानी विराट् वैश्वानरः, व्यष्टि-स्थूलसृष्टचभिमानी विश्वनामधेयो जीवः, समष्टि-सूक्ष्मशरीर-सृष्टचभिमानी हिरण्यगर्भः सूत्रापरनामा। अविद्याख्यः व्यष्टि-कारणशरीराभिमानी प्राज्ञः, समष्टिकारणशरीराभिमानी चिदन्तर्यामी ईश्वरापरसंज्ञः व्यष्टयुपाधिवर्जितः सः प्रत्यगात्मा तुरीयः, समष्टचुपाधि-विनिर्मुक्तं विशुद्धम् आत्मतत्त्वं ब्रह्म। तथा सति पादत्रयं विश्व-विराडादिलक्षणं विशालं विस्तीर्णं वाङ्मनसाऽगम्यं **चतुर्थं** ब्रह्मस्वरूपं तुरीयं **वाचम्** वाणीम्, उपलक्षणं चैतत् मनसः, वागिन्द्रियं **वियुनक्ति** स्वस्मात् पृथक् करोति वाक्-पथातीतम्। त्रयः पादाः विश्वादिलक्षणा यद्यपि वक्तुं शक्याः,

तथापि चतुर्थं तुरीयं प्रत्यगात्मानं ब्रह्मस्वरूपं वक्तुं न कश्चित् प्रभवति, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुतेः ।

ननु तर्हि 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतेः ब्रह्मज्ञानस्य मोक्षहेतुत्वाभिधानात् प्रत्यगात्मनः अमोक्षप्रसङ्गः, वाङ् मनश्च बोधसाधनम्, ब्रह्मणश्च वाङ्मनसोः अगोचरत्वात् कुतो बोधः, कुतस्तरां वा मोक्ष इत्याशङ्क्याह—**ब्रह्मा** चतुर्वेदपारगः **विपश्चित्** मेधावी **तपसा** तपश्चरणादिसाधनेन संस्कृतमना **एनत्** एतत् ब्रह्मतत्त्वं **विद्यात्** विजानीयात् । 'विपश्चित्' इति मेधाविनाम (निघ० ३.१५.१६) । विपः वाचश्चेतयिता, 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्यलुक् । एतदुक्तं भवति—वाचो द्वे वृत्ती शक्तिः लक्षणा च । तयोः शक्त्या वृत्त्या ब्रह्मणः अबोध्यत्वेऽपि लक्षणया तद् बोद्धुं शक्यम् । अन्यथा 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुत्युक्तं ब्रह्मणः औपनिषदत्वं उपनिषद्वोध्यत्वं न सङ्गच्छेत । 'मनसैवेदमाप्तव्यम् (कठो० २.१.११) इति च श्रुतिः ब्रह्मणः संस्कृतमनोवेद्यत्वमाचष्टे । 'यन्मनसा न मनुते येन आहुर्मनो मतम् (केन० १.५) इति श्रुतिस्तु असंस्कृतमनोवेद्यत्वनिषेधिका । विशिनष्टि—**यस्मिन्** ब्रह्मणि **एकम्** केवलं शुद्धम् अनेकजन्मार्जित-पापपुञ्जलक्षण-कालुष्यवर्जितं मनः **युज्यते** ज्ञातुमुपयुज्यते । शुद्धेन मनसा ब्रह्म ज्ञातुं प्रभवति साधक इति निष्कर्षः । **यस्मिन्नेकम्** इति द्विरुक्तिरादरार्था, पूर्वोक्तार्थदृढीकरणार्था वा ।

यद्वा—**त्रीणि बृहन्ति** सत्त्वरजस्तमांसि, अपि वा त्रीणि स्थानानि पृथिव्यन्तरिक्षद्युनामधेयानि **येषाम्** पूर्वोक्तानां त्रयाणामपेक्षया **चतुर्थम्** चतुर्थी **वाचम्** वाक् । लिङ्ग-विभक्ति-व्यत्ययश्छान्दसः, चतुर्थी वाक् इत्यर्थः । **वियुनक्ति** तानि त्रीणि प्रकटयति । एतदुक्तं भवति—द्विविधं जगत् शब्दात्मकमभिधानात्मकं प्रथमम्, द्वितीयम् अर्थात्मकमभिधेयात्मकम् । तत्र अभिधानमन्त्रा अभिधेयमन्तरा मनःपथं न अवतरन्ति । अन्तरेणाभिधानम् असत्कल्पमिव अभिधेयं जायते । अतो अभिधेयस्य सार्थक्याय, अर्थक्रियाकारित्वलक्षणसाफल्याय **महति** वाचः अपेक्षेति निष्कर्षः । तदेव उपपादयति—**ब्रह्मा** वेदवित् **एनत्** एतत् ब्रह्मतत्त्वं **तपसा** ब्रह्मचर्यादिव्रतेन वेदमधीयानः वाचा 'तत्त्वमसीत्यादि'-महावाक्यलक्षणया **विद्यात्** विजानीयात् । विशिनष्टि—**यस्मिन्** ब्रह्मणि दुर्विज्ञेये **एकम्** मनः, संस्कृतं विशुद्धमन्तःकरणं **युज्यते** उपयुज्यते

संस्कृतमना साधकः महावाक्य-लक्षणया वेदवाचा ब्रह्मतत्त्वं प्रतिपत्तुं प्रभवतीति भावः ।

अथवा छान्दोग्योपनिषदि आम्नायते—'मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् । अथाधिदैवतमाकाशो ब्रह्मेति उभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ।' (छान्दो० ५.१८.१) 'तदेतच्चतुष्पाद् ब्रह्म— वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं च पाद इत्यध्यात्मम् । अथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति उभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ।' (छान्दो० १८.२)। तत्र वर्णिते चतुष्पाद्ब्रह्मणः आध्यात्मिके पादचतुष्टये **यानि त्रीणि बृहन्ति** ये त्रयो बृहन्तो विशालाः प्राणचक्षुःश्रोत्रलक्षणाः पादाः, सन्ति इति शेषः । **येषाम्** तेषामपेक्षयेत्यर्थः, 'यत्तदोर्नित्यसम्बन्धः' इति हि विदुषां सिद्धान्तः । **चतुर्थं** चतुर्थपादं **वाचम्** वाग्-रूपं **वि** विविच्य **युनक्ति** सम्बध्नाति, योजयति, तदुपासने समावेशयति । **ब्रह्मा** ब्रह्मोपासकः **विपश्चित्** मेधावी साधकः, ततः **एनत्** चतुष्पाद् ब्रह्मतत्त्वं **तपसा** चेतस ऐकाग्र्येण **विद्यात्** उपासीत, 'मनसश्चेन्द्रियाणामपि ऐकाग्र्यं परमं तपः' इति हि तपोलक्षणम् । **यस्मिन्** चतुष्पाद्ब्रह्मोपासने **एकं** प्रथममध्यात्मं मनोब्रह्मोपासनं **युज्यते** सम्बद्ध्यते । **एकम्** अपरम् आधिदैवत-ब्रह्मोपासनं **यस्मिन्** चतुष्पाद्-ब्रह्मोपासने, **युज्यते** इत्यनुवर्तते । आध्यात्मिकं मनसि ब्रह्मोपासनं वागादिपादचतुष्टयोपेतम्, आधिदैविकं च अग्न्यादिपादचतुष्टयोपेतम् । तदुभयं साधकः समाहितमना स्वसमीहितचतुष्पाद्-ब्रह्मण आप्तये कुर्वीतेति भावः ।

किञ्च छान्दोग्योपनिषद्येव चतुर्थाऽध्याये चतुर्थखण्डमारभ्य नवमखण्डपर्यन्तं सत्यकामस्य जाबालस्य आख्यानमुपन्यस्तम् । तत्र क्रमेण पञ्चमे षष्ठे सप्तमे अष्टमे च ऋषभाविष्टो वायुरग्निः सूर्यो जलौकापरपर्याय-मद्गुप्रविष्टः प्राणाख्य-घ्राणदेवश्च षोडशकलस्य ब्रह्मणः चतुरः पादान् प्रत्येकं चतुष्कलान् उपदिष्टवान् । नवमे खण्डे सङ्कलय्य पादचतुष्टयोपेतं षोडशकलं ब्रह्मतत्त्वं हारीतद्रुमतो गौतमः सत्यकामाय गुरुराचार्य उवाच । तत्र **यानि त्रीणि** ये त्रयः चतुष्कलाः चतुष्कला पादाः प्राच्यादिदिक्-चतुष्टयलक्षणः प्रकाशवन्नामकः प्रथमः पादः, समुद्रसहितत्रिलोकलक्षणः अनन्तवन्नामकः द्वितीयः पादः, अग्निसूर्यचन्द्रविद्युद्रूपस्तृतीयः पादः ज्योतिष्मन्नामकश्च, सम्भूय

त्रय: पादा:, **बृहन्ति** महान्तो वर्तन्ते । **येषां** तेषामपेक्षया तै: सहितं **चतुर्थम्** आयतनवन्नामकं **चतुर्थः** तुरीयं प्राणचक्षु:श्रोत्रमनोलक्षणं **वि** विबोधयितुं **वाचं युनक्ति,** वाचा मुखाम्भोजं संयोजयति । किं बहुना, सर्वान् पादान् देवै: पृथगुपदिष्टान् संकलय्य षोडशकलं ब्रह्मतत्त्वं स्वशिष्याय सत्यकामाय वदतीत्यर्थ: । क: ? **ब्रह्मा** वेदवित् **विपश्चित्** मेधावी सत्यकामस्य जाबालस्य गुरुराचार्यो हारीतद्रुमोतो गौतम:, **एतत्** चतुष्कल-पादचतुष्टयोपेतं षोडशकलं ब्रह्म गुरुमुखात् श्रुत्वा **तपसा** ब्रह्मचर्यादिव्रतेन सम्पन्न: सत्यकाम-जाबालवत् इदानीन्तनोऽपि शिष्य: **विद्यात्** विजानीयात् **यस्मिन्** षोडशकलब्रह्मोपासने **एकं** प्रथमम् अन्यत् **एकम्** अपरं द्वितीयं तृतीयं चतुर्थं वा **युज्यते** सम्बद्धयते । कृत्स्नपाद-बोधनाय द्विरुक्ति: । 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे सङ्ख्यायाञ्च प्रयुज्यते' इति हि विदुषां वचनम् ।। ३ ।।

**बृहतः परि सामानि षष्ठात् पञ्चाधि निर्मिता ।**
**बृहद् बृहत्या निर्मितं कुतोऽधि बृहती मिता ॥ ४ ॥**

**बृहतः । परि । सामानि । षष्ठात् । पञ्च । अधि ।**
**निःऽमिता । बृहत् । बृहत्याः । निःऽमितम् ।**
**कुतः । अधि । बृहती । मिता ॥ ४ ॥**

**बृहत:** महत: ब्रह्मण: **षष्ठात्** भतपञ्चकमपेक्ष्य षष्ठत्वात् **परि** उपभोग-हेतुभोग्यजात-भोगायतनादिरचनायां पर्याप्तानि **सामानि** तत्त्वोत्पत्तिसमापकानि अन्तिमानि तत्त्वानि, यत: तत्त्वान्तरं किमपि नोत्पद्यते । कामं भवतु भौतिको घटपटादि-प्रपञ्च: । अथवा **सामानि** सान्त्वनाकारकाणि मन:-सन्तोष-हेतुभूतानि सुखसाधनानि । **पञ्च** पञ्चसंख्याकानि पृथिव्यादि-भूतानि **अधि** ऊर्ध्वं साधिकारं वा **निर्मिता** निर्मितानि । 'शेश्छन्दसि बहुलम्' इति शीलोपे नलोप:, ता ता-पिण्डानाम् इतिवत् । **बृहद्** विशालं जगदिदम् **बृहत्या** विराज: भगवच्छक्त: **निर्मितम्** रचितं सा **बृहती** विराट् **कुतः** कस्मात् **अधि** ऊर्ध्वं **मिता** रचिता । पूर्ववत् किंशब्दस्य श्लेषेन वक्तुम् अशक्यवचनत्वात् । कुत: वक्तुमशक्यात्, अद्भुतात् वाक्पथातीतात् ब्रह्मण: **मिता** जाता,

प्रादुर्भूता । अपि वा—शक्तिशक्तिमतोरभेदात् ब्रह्मवत् तच्छक्तेरपि अनादित्वात् नास्त्युत्पत्तिप्रश्नावकाशः । 'सामानि' षोऽन्तकर्मणि' (दिवादिः), मनिन्, स्यन्ति समाप्नुवन्ति आरब्धं तत्त्वोत्पत्तिकार्यम् । यद्वा—साम 'सान्त्व प्रयोगे' (चुरा० १८८०), ततः पचाद्यच् ॥ ४ ॥

बृहती परि मात्राया मातुर्मात्राधि निर्मिता ।
माया ह जज्ञे मायाया मायाया मातली परि ॥ ५ ॥

बृहती । परि । मात्रायाः । मातुः । मात्रा । अधि । निःऽमिता ।
माया । ह । जज्ञे । मायायाः । मायायाः । मातली । परि ॥ ५ ॥

**बृहती** स्थूलभूतसृष्टिः **मात्रायाः** तन्मात्राख्यायाः सूक्ष्मसृष्टेः, स्थूलभूतानि सूक्ष्मभूतेभ्यः समुत्पन्नानि । [1] **मात्रा** तन्मात्राख्या सूक्ष्मसृष्टिः **मातुः** निर्मातुः जगतः अभिन्न-निमित्तोपादानकारणात् ईश्वरात् **अधि** ऊर्ध्वं **निर्मिता** रचिता । अपि वा—तदाज्ञया **मातुः** तमःप्रधानप्रकृतेः सूक्ष्मभूतपञ्चकम् उत्पन्नमिति यावत् । तदुक्तं पञ्चदश्याम्—

'तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ।
वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे ॥ (१.१८)

**माया** स्रष्टव्यालोचनलक्षणेक्षणाख्या सर्जनकारणीभूता मायावृत्तिरूपा प्रज्ञा । 'मायेति प्रज्ञानाम' (निघ० ३.९.९) । 'माया' माङ् माने (१०८८ जुहो०) । माछाससिभ्यो यः (उ० ४.१०६) इति यप्रत्ययः । 'मीयन्ते परिच्छिद्यन्तेऽनया पदार्था' इति देवराजः । **मायायाः** तदुपादानभूताया ईश्वरशक्तेः शुद्धसत्त्व-प्रधानायाः **ह** एव **जज्ञे** समुत्पेदे सर्जनार्थम्, ईश्वरशक्तेर्मायातः सृष्टेः पूर्वं स्रष्टव्यालोचनलक्षणम् ईक्षणं समुत्पन्नमित्यर्थः । **मायाया** मीयते जगन्निर्मीयते अनया इति व्युत्पत्त्या जगदुत्पादिकायाः जगदम्बायाः' **मातली** मातलिः, इन्द्रसारथिः, लक्षणया तत्तुल्यो नियन्तेत्यर्थः । **परि** परिपूर्णः मायापतिः, वर्तत इति शेषः ।

---

१. 'जगतो यदुपादानं मायामादाय तामसीम् ।
निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा ॥' (पञ्च. १.४९.)

वैश्वानरस्य प्रतिमोपरि द्यौर्यावद् रोदसी विबबाधे अग्निः ।
ततः षष्ठादामुतो यन्ति स्तोमा उदितो यन्त्यभि षष्ठमह्नः ॥ ६ ॥

वैश्वानरस्य । प्रतिऽमा । उपरि । द्यौः । यावत् । रोदसी इति ।
विऽबबाधे । अग्निः । ततः । षष्ठात् । आ । अमुतः । यन्ति ।
स्तोमाः । उत् । इतः । यन्ति । अभि । षष्ठम् । अह्नः ॥ ६ ॥

'उपरि'शब्दः उभयान्वयि । **उपरि** सर्वोपरि वर्तमानस्य **वैश्वानरस्य** विराजः **प्रतिमा** प्रतिमानम् उपमानं दृष्टान्तः **द्यौः** उपरि वर्तमानो द्युलोकः 'न तस्य प्रतिमा अस्ति' (शु० यजुः० मा० ३२.३) इत्यत्र 'प्रतिमा'शब्दस्य प्रतिमानापरपर्यायोपमानवाचित्वं महीधरेण व्याख्यातम् । उव्वटोऽपि इममेव अर्थमनुमन्यते । वैश्वानरः सर्वात्मत्व-नित्यत्व-निर्लेपत्वादिसाधर्म्यादाकाशतुल्य इत्यर्थः । श्रूयते—'आकाशवत् सर्वगतश्च नित्यः', 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'' (मुण्ड० १.६) इति च । आह च गीतायां भगवान् कृष्णः--

'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ इति (१३.३२)

**अग्निः** वैश्वानरः परमेश्वरः **रोदसी यावत्** यावच्छब्दोऽत्र कृत्स्न-वचनः, 'यावत्तावदेतौ मानावधिसाकल्यावधारणेषु' इति वचनात् । कृत्स्नां दिवं पृथिवीं च **वि** विविच्य 'पृथक्कृत्य **बबाधे** प्रतिजग्राह लोडितवान्, तथा रुद्धवान् यथा ते मिथः सङ्गते सम्मिलिते निरवकाशे न स्याताम् । तथा सति अवकाशाभावात् प्राणभृतो जाताजाताविरोधेन महत् कृच्छ्रमापतेत् ।

अपि वा—धातूनामनेकर्थत्वात् बाधिरत्र अवस्थानवचनः । **वि** व्याप्य अवस्थितवान् । पृथिवीमारभ्य दिवं यावत् यावान् प्रदेशः तावति प्रदेशे वैश्वानरः अवतस्थे । नास्ति मनागपि प्रदेशो यः वैश्वानरेण न व्याप्त इति भावः । सहस्रचतुर्युग-परिमितो ब्रह्मणो दिवसः, तावती च रात्रिः । सृष्टिरेव अहः, रात्रिरेव प्रलयः ।

'सहस्र-युगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
रात्रिं युग-सहस्रान्तां तेऽहोरात्रविदो जनाः ॥' (गी० ८.१७)

इति गीतोक्तेः। **अह्नः** दिवोपलक्षितस्य सर्जनसमयस्य आगमे **ततः** तस्मात् श्रुति-स्मृतिप्रतिपादितात् **अमुतः** दूरतमात् अज्ञैः दुर्विज्ञेयात् **षष्ठात्** भूतपञ्चकमपेक्ष्य षष्ठात् ब्रह्मणः **स्तोमा** स्तोतारः, 'ष्टुञ् स्तुतौ' औणादिकः, कर्तरि मन्। स्तोतारः मनुष्याः यजमानाः, त्रिवृदादि-साम-स्तोमविशेषा वा, तदुपलक्षिता यज्ञाः, अन्ये च सर्वे लोकविभागाः प्रशंसनीया दानपरोपकारादयः। **आयन्ति** आगच्छन्ति, सृष्टा भवन्ति, उत्पद्यन्ते, प्रादुर्भवन्ति। अहर्ग्रहणाद् 'रात्रेः' इत्यध्याहर्तव्यम्। रात्र-रागमे प्रलयसमये **इतः** अस्मात् लोकात् **षष्ठं** ब्रह्मतत्त्वं **अभियन्ति** समा-विशन्ति। तत्र प्रलीयन्ते, भूतानां प्रभवाप्यय-हेतुर्वैश्वानरः। तदुक्तं गीतायाम्—

'अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥'(८.१८-१९)

अपि वा–अह्न इति 'षष्ठात्' इत्यनेनान्वेति। तत्र 'स्वप्रकाशचिद्-रूपात् ब्रह्मण इत्यर्थो ज्ञेयः।' 'अग्नि'शब्दस्य परमेश्वरपरत्वे व्यास-निरुक्तसम्मता षट् निरुक्तयः श्रीमदानन्दतीर्थभगवत्पादैः स्वकीये ऋग्वेदभाष्ये उद्धृताः। यथा—अग्निः १. अग्रे अभिपूजितः, २. अग्रे भवः, ३. अग्रे नेता, ४. अङ्गनेता, ५. अगनेता, ६. अद्निः अत्ता, दकारस्य गकारः। तथा च श्रुतिः—

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः॥'(कठो० १.२.२५)

पारमर्षं सूत्रञ्च—'अत्ता चराचरग्रहणात्' (ब्रह्मसू० १.२.१०) इति॥ ६॥

**षट् त्वा॑ पृच्छाम॒ ऋष॑यः कश्यपे॒मे त्वं हि यु॒क्तं यु॑यु॒क्षे योग्यं॑ च।**
**वि॒राजं॑माहु॒र्ब्रह्म॑णः पि॒तरं॒ तां नो॒ वि धे॑हि यति॒धा सखि॑भ्यः॥ ७॥**

षट्। त्वा॒। पृ॒च्छा॒म॒। ऋष॑यः। क॒श्य॒प॒। इ॒मे। त्वम्। हि। यु॒क्तम्। यु॒यु॒क्षे। योग्य॑म्। च॒। वि॒ऽराज॑म्।

**आहुः । ब्रह्मणः । पितरम् । ताम् । नः । वि । धेहि । यतिऽधा । सखिभ्यः ॥ ७ ॥**

अस्मिन् मन्त्रे 'षट् त्वा पृच्छाम ऋषय' इति निर्देशात् प्रश्नोपनिषदि भारद्वाजादि-कात्यायनान्तानां षण्णाम् ऋषीणां पिप्पलादेन गुरुणा सह प्रश्नोत्तरलक्षणः संवादः, छान्दोग्योपनिषदि च राज्ञा अश्वपतिना सार्धं प्राचीनशालाद्युद्दालकान्तानां षण्णाम् ऋषीणां पञ्चमाध्यायस्य एकादशाद्यष्टादशान्तेषु खण्डेषु वर्णितः संवादश्च गम्यते। शब्दयोजना चेत्थम्—**कश्यप** पश्यक, आत्मदर्शिन् 'कश्यपः पश्यको भवति' इति हि निरुक्तम्। प्रश्नोपनिषदि पिप्पलादगुरो ! छान्दोग्योपनिषदि च अश्वपते राजन् ! **इमे** भवत्सविधे समायाताः षड् ऋषयो वयं तव शिष्याः १. सुकेशा च भारद्वाजः, २. शैब्यश्च सत्यकामः, ३ सौर्यायणिः गार्ग्यः, ४. कौशल्यश्च आश्वलायनः, ५. भार्गवो वैदर्भिः, ६. कबन्धी कात्यायनः (प्रश्नो० १.१) इति नामानः **षट्** षट्संख्याकाः। छान्दोग्योपनिषदि च १. प्राचीनशाल औपमन्यवः, २. सत्ययज्ञः पौलुषिः, ३. इन्द्रद्युम्नो भाल्लवेयः, ४. जनः शार्कराक्ष्यः, ५. बुडिल आश्वतराश्विः ६. उद्दालकश्च आरुणिः (छान्दो० ५.११.१.२) इति नामानः। **त्वा** त्वां गुरुं **पृच्छामः** जिज्ञासामहे। **हि** यतः त्वं **युक्तम्** ध्यातम् उपासितं **योग्यम्** उपासितव्यं ध्यातव्यञ्च **युयुक्षे** समाधिप्रसूत-ऋतम्भराख्यप्रज्ञायां सर्वं साक्षात्कृतवान्। 'युज् समाधौ', 'युजिर् योगे' वा लिट्, थासि, सेभावे रूपम्। अतः अर्हसि अस्माभिः कृतं प्रश्नं समाधातुमित्यर्थः। भगवन्तं पिप्पलादमुपसन्नानां भारद्वाजादीनां दृष्टचेदमभिधानम्। अपि वा—प्राचीनशालादिदृष्ट्या **युक्तम्** अस्माभिर्यद् यथाध्यात्मं वैश्वानरं **योग्यं** वस्तुतो यथा ध्यातव्यं च तत्सर्वं **युयुक्षे** योगेन ज्ञातवानसि। अतोऽस्मभ्यं यथार्थं वैश्वानरोपासनम् उपदिशेति भावः। ते सर्वे सुतेजस्त्वगुणविशिष्टं १. दिवम्, २. विश्वरूपं सूर्यम्, ३. पृथग् वर्तमानात्मानं वायुम्, ४. बहुलम् आकाशम्, ५. धनहेतुत्वलक्षण-रयित्वगुणविशिष्टं जलम्, ६. प्रतिष्ठां पृथिवीं च क्रमेण वैश्वानरावयवजातं भ्रान्त्योपासाञ्चक्रिरे। तैः पृष्टो गुरुरश्वपतिराजा तेषां विपरीतज्ञाननिरासाय नैते वैश्वानराः, किं तर्हि ? वैश्वानरस्य दिवुप्रभृतयः षट् क्रमेण १. मूर्धा, २. चक्षुः, ३. प्राणः, ४. सन्देहापरपर्याय-देहमध्यः, ५. बस्तिः, ६. पादः इत्येवंरूपा अवयवाः। अतो

भवद्भिः 'द्युमूर्धाद्यवयवको वैश्वानरः' इत्युपासनीयम्, न तु प्रत्येकं तदवयवेषु वैश्वानरत्वेन ध्यानं विधेयमिति तान् गुरुः अश्वपतिराजा उपदिदेशेति तत्रत्यः सन्दर्भः। विस्तरस्तु छान्दोग्योपनिषदि पञ्चमाऽध्याये द्रष्टव्यः।

ऋषयस्ते गुरुमुपेत्य किं पृष्टवन्तः ? इत्यपेक्षायां संक्षिप्याह–विराज- इति। ब्रह्मणः आदिपुरुषात्[1] उत्पन्नमिति शेषः। **विराजं** ब्रह्माण्डदेहलक्षणा विराडाकृतिः, तदभिमानिनं विराडात्मानं वा **पितरं** जगतः उत्पत्तिम्, अपि वा ब्रह्मणः परमात्मनः सम्बन्धिनीं तदधिष्ठितां विराजं विविधप्रपञ्चाकारपरिणतया दीप्यमानां शोभमानां प्रकृतिम्, सैव शुद्धसत्त्वप्रधाना 'अविद्या', तमःप्रधाना 'प्रकृतिः' इति चाख्यायते।[2] **आहुः** वेदविदः वर्णयन्ति। एषा विराट् **यतिधा यैः** प्रकारैः उपेता वर्तते, सप्रकारां तां विराजं **नः** अस्मभ्यं **सखिभ्यः** समित्पाणित्वादिना समानख्यानेभ्यो मित्रेभ्यः **विधेहि** वि विशिष्य धेहि धारय स्थापय, यथाविधि वर्णय। विराट्शब्दोऽयं पुल्लिङ्गः स्त्रीलिङ्गश्च। ब्रह्माण्ड-

१. आह च सायणः पुरुषसूक्तस्य,
"तस्माद्विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः॥" (ऋ० १०.९०.५)
इति मन्त्रभाष्ये—"(तस्मात्) आदिपुरुषात् (विराट्) ब्रह्माण्ड-देहः (अजायत) उत्पन्नः। विविधानि राजन्ते वस्तून्यत्रेति विराट्। (विराजोऽधि) विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा (पुरुषः) तद्देहाभिमानी कश्चित् पुमान् अजायत। सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानि-देवतात्मा जीवोऽभवत्। एतच्च आथर्वणिकायां नृसिंहोत्तरतापिन्यां विस्पष्टमामनन्ति—'स वा भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहारन्नास्ते माययैव' (नृ० उ० ता० २.१.९) इति। (स जातः) विराट् पुरुषः (अत्यरिच्यत) अतिरिक्तोऽभूत्। विराड्व्यतिरिक्तो देव-तिर्यङ्-मनुष्यादिरूपोऽभूत्। (पश्चात्) देवादिजीवभावादूर्ध्वं (भूमिं) ससर्जेति शेषः। (अथो) भूमिसृष्टेरनन्तरं तेषां जीवानां (पुरः) पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि" ससर्ज, इति।

२. 'सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते।' (पञ्च० १.१६ पूर्वा०)
'तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया।' (पञ्च० १.१८ पूर्वा०)

देहाख्य-विराडाकृतिवाचित्वे जगन्मूलकारण-प्रकृतिवाचित्वे च स्त्रीलिङ्गः, ब्रह्माण्डदेहाभिमानिनो विराडात्मनो वाचित्वे च पुल्लिङ्गः।

अपि वा—**विराजं** वैश्वानरं **ब्रह्मणः** प्रथमं पादं 'जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः' (माण्डू० कण्डि० ३) इत्युक्तम् **यतिधा** इत्यनेन तस्मिन् वैश्वानरपादे सप्ताङ्गत्वैकोनविंशतिमुखत्वादिकः प्रकारविशेषः सूचितः। पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, प्राणपञ्चकम्, अन्तःकरणचतुष्टयं चेति वैश्वानरस्य एकोनविंशतिमुखानि भवन्ति। तैः सर्वैरसौ स्थूलसृष्टेर्भोग्यजातं भुङ्क्ते। अत एव तत्र 'स्थूल-भुग्' इति व्यवहारः। सप्ताङ्गानि वैश्वानरस्य (माण्डू० ३) मणिप्रभायाम् उदासीनामरदासविदुषा इत्थं व्याख्यातानि—"सप्ताङ्गः सप्तसंख्यकानि द्युसूर्यवाय्वाकाशरयिपृथिव्याहवनीयाख्यानि अङ्गानि मूर्ध-चक्षुः-प्राण-देहमध्य-वस्ति-पाद-मुखस्थानीयानि यस्य स सप्ताङ्गः" इति।

छान्दोग्योपनिषदि पञ्चमे अष्टादशखण्डे स्फुटमिदम्। मूले प्रतिपादितानि तानि अङ्गानि यथा—

"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव ,रयिः पृथिव्येव पादौ उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति। अस्यां कण्डिकायाम् अग्निहोत्रोपासनरूपाङ्गविद्यया सहिता प्रधानवैश्वानरोपासना शिष्याणां हिताय गुरुणा अश्वपतिभूपतिना वर्णिता इत्यवसेयम्।

यद्वा—कश्यपसहिताः सप्त ऋषयः इतिहासपुराणप्रसिद्धाः (बृ० उ० २.२.४) कण्डिकायां निर्दिष्टाः। कश्यपसंहिताः गोतमभरद्वाजविश्वामित्रजमदग्निवसिष्ठात्रिनामानः। तत्र कश्यपः समाधाता, इतरे षट् प्रष्टारः। शिष्टं समानम्। अथवा—अध्यात्मं षड् ऋषयः षड् इन्द्रियाणि चक्षुःश्रोत्रघ्राणत्वग्रसनमनांसि। आह च यास्कः—सप्त ऋषयः षडिन्द्रियाणि विद्या सप्तमी' इति (निरु० १२.३७)॥ ७॥

**यां प्रच्युतामनु यज्ञाः प्रच्यवन्त उपतिष्ठन्त उपतिष्ठमानाम्।**
**यस्या व्रते प्रसवे यक्षमेजति सा विराडृषयः परमे व्योमन्॥ ८॥**

**याम् । प्रऽच्युताम् । अनु । यज्ञाः । प्रऽच्यवन्ते । उपऽतिष्ठन्ते । उपऽतिष्ठमानाम् । यस्याः । व्रते । प्रऽसवे । यक्षम् । एजति । सा । विऽराट् । ऋषयः । परमे । विऽओमन् ॥ ८ ॥**

पृष्टः कश्यपः समाधत्ते—यां प्रच्युतामिति । **ऋषयः** ! ऋषिगणाः ! यां विराजं **प्रच्युताम्** फलोन्मुखप्राणिवर्गादृष्टवशात् प्रच्युताम्, चलन्तीं सर्गव्यापारे प्रवर्तमानाम् **अनु** पश्चात् **यज्ञाः** यज्ञोपलक्षिताः सर्वे जगद्व्यापाराः **प्रच्यवन्ते** प्रवर्तन्ते, सर्वं जगत् प्रादुर्भवतीत्यर्थः । **उपतिष्ठमानाम्** फलं दत्त्वा प्राणिवर्गादृष्टोपरमात् निवृत्तव्यापाराम् अनु पश्चात् **उपतिष्ठन्ते** फलदानहेतोः अदृष्टस्योपरमात् तिष्ठन्ति, निवर्तन्ते, प्रलीयन्ते । जगतः सृष्टि-प्रलयौ यदाधीनावित्यर्थः । **यस्याः व्रते** नियमे **प्रसवे** आज्ञायां नियमादेशपरिपालननिमित्तं **यक्षं** सङ्गतं समुदित-भूतपञ्चकम् **एजति** चेष्टते विविधव्यापारोन्मुखी भवति । यजिरत्र सङ्गत्यर्थः, ततः वृतॄवदिहनि०' (उणा० ३.६२) इति सूत्रेण सप्रत्ययः । **सा विराट् परमे** सर्वोत्कृष्टे **व्योमन्** व्योम्नि । व्योमपदं लक्षणया उच्चस्थानपरम्, तथा सति सर्वोत्कृष्टे सर्वोच्चस्थाने वर्तते आयतते इत्यर्थः । अथवा—परमे व्योम्नि । किं बहुना, सर्वं जगति पदार्थजातं अतिशेते सा, जगज्जननीत्वादिति तात्पर्यम् । अथवा—परमे सर्वोत्कृष्टे व्योम्नि विशेषेण रक्षके परमात्मनि, आयतते इति शेषः, परमात्मायत्ता सेत्यर्थः । एतेन परमात्माधीनत्व[1] कथनात् सांख्याभिमतं प्रकृतेः स्वातन्त्र्यं निरस्तम् । विराजः वैश्वानरवाचकत्वपक्षे तस्य दिवसः जागरणाख्यसर्गावस्था, तस्य रात्र्याख्या स्वापावस्था प्रलय इति गीतानुसारेण उक्तपूर्वम् । अतः सर्ग-प्रलयौ वैश्वानरायत्तौ । शिष्टं समानम् ॥ ८ ॥

**अप्राणैति प्राणेन प्राणतीनां विराट् स्वराजमभ्येति पश्चात् । विश्वं मृशन्तीमभिरूपां विराजं पश्यन्ति त्वे न त्वे पश्यन्त्येनाम् ॥ ९ ॥**

---

१. ''मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ।''
(पञ्च० १·१६ उत्त०)

अप्राणा । एति । प्राणेन । प्राणतीनाम् । विऽराट् । स्वऽराजम् । अभि । एति । पश्चात् । विश्वम् । मृशन्तीम् । अभिऽरूपाम् । विऽराजम् । पश्यन्ति । त्वे इति । न । त्वे इति । पश्यन्ति । एनाम् ॥ ९ ॥

**अप्राणा** स्वतः प्राणरहिता, अव्यक्तदशायां प्राणानुदयात् । व्यक्तदशायां **प्राणतीनाम्** प्रजानां श्वासोपेतानां जनानां प्राणेन श्वासादिलक्षणेन सह **एति** गच्छति । सर्गकाले विविधप्राणिवर्गाकारेण परिणमितीत्यर्थः । अपि **वा—अप्राणा** श्वासग्रहणावकाशरहिता, नितान्तव्यस्ता सततं चेष्टमाना सर्वदा सव्यापारा **पश्चात्** सर्गावसाने प्रलयदशायां **स्वराजं** स्वप्रकाशं स्वस्वामिनं परमात्मानं **अभि** आभिमुख्येन **एति** गच्छति । स्वाध्यक्षे परमात्मनि प्रलीयते, तदभेदेन अवतिष्ठते, तेन सह एकीभावमापद्यते वा । **विश्वम्** जगत् **मृशन्तीम्** स्पृशन्तीम् **अभिरूपाम्** मनोहराम् अनुरूपां विविधरूपोपेतां वा । **विराजं** भगवतो मायाशक्तिं **त्वे** एके विद्वांसः, शास्त्रज्ञाः **पश्यन्ति** तत्त्वतो जानन्ति । **त्वे** अपरे अज्ञाः अविवेकिनो मूढाः अज्ञानिनः **न पश्यन्ति** न जानन्ति । "त्व त्व इति द्वावपि अदन्तौ अन्यपर्यायौ, एक उदात्तः, अपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे" इति सिद्धान्तकौमुद्यां सर्वादिगणे भट्टोजीदीक्षितः । 'त्व इति विनिगार्थीयं सर्वनामानुदात्तम्' (निरु० १.७) । विनिग्रहः पृथक्कृत्य विशेषणेन सम्बन्धः । यथात्रैव कैश्चित् सह दर्शनम्, अत्रैव समम् अदर्शनं सम्बद्ध्यते । यथा वा यज्ञे होत्रादीनाम् ऋत्विजां शंसनगान-प्रायश्चित्तोक्ति-यज्ञनिष्पादनरूपकार्यैः पृथक्कृत्य सम्बन्धः, 'ऋचां त्व' (ऋ० १०.७१.११) इति मन्त्रे ॥ ९ ॥

को विराजो मिथुनत्वं प्र वेद क ऋतून् क उ कल्पमस्याः ।
क्रमान् को अस्याः कतिधा विदुग्धान् को अस्या धाम कतिधा व्युष्टीः ॥ १० ॥

कः । विऽराजः । मिथुनऽत्वम् । प्र । वेद । कः । ऋतून् । कः । ऊं इति । कल्पम् । अस्याः । क्रमान् । कः । अस्याः ।

**कृतिऽधा । विऽदुग्धान् । कः । अस्याः । धाम । कृतिऽधा । विऽउंष्टीः ॥ १० ॥**

**कः** कश्चित् विरल एव, न सर्वः **विराजः** वैश्वानरस्य प्रजापतेः **मिथुनत्वम्** रयि-प्राणलक्षणस्त्रीपुरुषभावम्, 'स मिथुनमुत्पादयते रयिं च प्राणं च' (प्रश्नो० १.४), 'आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः' (१.५), 'संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरञ्च (१.९), 'मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः' (१.१२), 'अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः' (१.१३), इत्येवं प्रश्नोपनिषदि सविस्तरं प्रतिपादितं तत्त्वं बोद्धुं निष्णात एव प्रभवतीति भावः । **अस्याः** प्रजापतीनां संवत्सराहोरात्रलक्षणेन उत्पादितायाः दक्षिणोत्तरायण-शुक्लकृष्णपक्ष-दिवसरात्रि-युगलरूपायाः सृष्टेः । **ऋतून्** वसन्तादि-नियतसङ्क्रमनकालान् **कल्पम्** सामर्थ्यम् । 'कृपु सामर्थ्ये', घञ् । **'उ'** शब्दः पादपूरणः । 'वेद' इत्यनुवर्तते । द्विरावृत्तः 'क' इति व्याख्यातपूर्वः । ऋतुकल्पावपि वेदोपनिषन्निष्णातेनैव ज्ञातुं शक्याविर्त्यर्थः । **कतिधा** कतिभिः प्रकारैः, बहुभिः प्रकारैरित्यर्थः । **विदुग्धान्** 'वि' शब्दोऽत्र परेरर्थे, परिपूर्णान् क्रमान् संचालननियमान् अस्याः सृष्टेः कः वेद इति सम्बन्धः । **अस्याः** सृष्टेः **धाम** स्थानं तेजःप्रभावं वा **कतिधा** कियद्भिः प्रकारैः **व्युष्टीः** उषसः प्रलय-तमोपनोदक-प्रभातकालान् **कः** को वेदेत्यन्वयः । अस्या इति स्त्रीलिङ्गपदप्रयोग-प्राचुर्यात् प्रकृतिपरतया केचित् योजयन्ति । वस्तुतस्तु "दृष्टं शब्दान्यत्वे लिङ्गान्यत्वम्" इति भाष्यवचनेन पदार्थ-व्यक्ति-वस्तु-शब्द-सम्बन्धात् 'अयं पदार्थः, इयम् व्यक्तिः, इदं वस्तु' इत्येवं विवक्षायां पुल्लिङ्गोऽपि स्त्रीलिङ्गः, स्त्रीलिङ्गोऽपि पुल्लिङ्गः प्रयोक्तुमर्हः । अतः प्रजापतिपरत्वेऽपि स्त्रीलिङ्गतायाः न काचिदनुपपत्तिः ॥ १० ॥

**इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा ।**
**महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री ॥ ११ ॥**

**इयम् । एव । सा । या । प्रथमा । विऽऔच्छत् । आसु । इतरासु । चरति । प्रऽविष्टा । महान्तः । अस्याम् । महिमानः । अन्तः । वधूः । जिगाय । नवऽगत् । जनित्री ॥ ११ ॥**

'व्युष्टी'पदेन उक्ताम् उषसं प्रशंसति—इयमेवेति । सायणेन (अथर्व० ३.१०.४) व्याख्यातोऽयं मन्त्रः । पाठकानां हिताय पुनरुपन्यस्यते यथावत् तद्भाष्यम्—

**इयमेव** अद्यतनी विराड्लक्षणा **सा** प्रथमम् उत्पन्ना उषाः । अनेन तादात्म्यप्रतिपादनेन अस्या अतिशयितमहत्त्वमुक्तं भवति । तच्छब्दार्थमाह—**या** उषाः **प्रथमा** प्रागुक्तप्रकारेण सृष्ट्यादौ उत्पन्ना सती **व्यौच्छत्** तमोनिरसनं कृतवती । 'उछी विवासे' । सेयम् एकाष्टका विराट् उषाः **आसु** परिदृश्यमानासु **इतरासु** अन्यासु उषस्सु **प्रविष्टा** अनुगता सती **चरति** वर्तते, उदेति । श्रूयते हि—"एका सती बहुधोषो व्युच्छसि" (तै० सं० ४.३.११.५) इति । प्रपूर्वाद् विशेः कर्तरि निष्ठा । व्यत्ययेन अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा—प्रविष्टा सूर्येणानुप्रविष्टा । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **अस्याम्** उक्तलक्षणायाम् उषसि **अन्तः** मध्ये **महान्तः** अपरिमिताः महिमानः माहात्म्यविशेषाः, वर्तन्त इति शेषः । यद्वा—महिमानः महत्त्वोपेता महान्तः मुख्याः सूर्यसोमाग्नयः अस्याम् अन्तर्वर्तन्ते । सूर्यादय एतदधीनाः प्रकाशन्त इत्यर्थः, 'त्रय एनां महिमानः सचन्ते' (तै० सं० ४.३.११.१) इति श्रुतेः । **वधूः** सूर्यस्य जाया उषाः, "सूर्यपत्नी विचरतः प्रजावती" इति (तै० सं० ४.३.११.१) श्रुत्यन्तरात् ।

**नवगत्** नवम् अभिनवम् उत्पद्यमानं प्राणिजातं गच्छति व्याप्नोतीति वा नवगत् । यद्वा—प्रतिदिनम् उत्पद्यमानमपि नवमभिनवम् उत्कृष्टम् एकविधं रूपं गच्छतीति नवगत् । तथा च मन्त्रवर्णः—"पुनः पुनर्जायमाना पुराणी समानं वर्णम् अभि शुम्भमाना" (ऋ० १.९२.१०) इति । अथवा—नवधा विभक्तान् अहर्भागान् प्रातरादीन् गच्छतीति नवगत् । ते च भागाः प्रातःसङ्गवमध्याह्नापराह्णसायाह्नाख्याः पञ्च, तदन्तरालकालाश्च चत्वारः । श्रूयते हि तैत्तिरीयके प्रातरादीन् प्रस्तुत्य—"समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । चत्वार्यश्लीलानि । तानि नव" (तै० ब्रा० १.५.३.४) इति । स्मर्यते च—'प्रातरातः सङ्गवश्च रुग्णो मध्याह्नसंतपौ । अपराह्णं खनिः सायं नवधा भिद्यते त्वहः' इति । नवपूर्वाद् गमेः क्विप् । "गमः क्वौ" इत्यनुनासिकलोपः । 'ह्रस्वस्य पिति कृति' इति तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।

एवंभूता उषाः **जनित्री** जनानां प्रकाशप्रदानेन साधु जनयित्री सती **जिगाय** जयति सर्वोत्कर्षेण वर्तते । जयतेर्लिटि "सन् लिटोर्जेः" इत्यभ्यासाद् उत्तरस्य कुत्वम् । जनित्रीति, जनेर्ण्यन्तात् साधकारिणि तृन् 'बहुलम् अन्यत्रापि' इति णिलोपः ।

अपि वा—नवगत् नवीनपरिचर्याप्रकाराभिज्ञा, नवं नूतनं परिचर्याप्रकारं गच्छति जानाति इति व्युत्पत्तेः । गमिरत्र ज्ञानार्थकः, ततः कर्तरि क्विपि तुक् । **वधूः** सद्यः परिणीता युवती इव **अन्तः** स्वस्वामिनः परमेश्वरस्य अन्तःकरणम् **जिगाय** जितवती । नवोढायाः युवत्याः लोकोत्तरपरिचरणेन यथा तद्भर्ता प्रसीदति, तद्वत् परमेश्वरः विराट्-परिचर्यया सुप्रसन्नोऽभवदित्यर्थः ।। ११ ।।

**छन्दः॑पक्षे उ॒षसा॒ पेपि॑शाने स॒मा॒नं योनि॑म॒नु सं च॑रेते ।**
**सूर्य॑पत्नी॒ सं च॑रतः प्रजान॒ती के॑तु॒मती॑ अ॒जरे॒ भूरि॑रेतसा ॥१२॥**

**छन्दः॑पक्षे इति॒ छन्दः॑ऽपक्षे । उ॒षसा॑ । पेपि॑शाने॒ इति॑ । स॒मा॒नम् । योनि॑म् । अनु॑ । सम् । च॒रे॒ते इति॑ । सूर्य॑पत्नी॒ इति॒ सूर्य॑ऽपत्नी । सम् । च॒र॒तः । प्र॒जा॒न॒ती इति॑ प्र॒ऽजा॒न॒ती । के॒तु॒मती॒ इति॑ के॒तु॒ऽमती॑ । अ॒जरे॒ इति॑ । भूरि॑ऽरेतसा ॥ १२ ॥**

**छन्दः** स्वेच्छा, तस्याः **पक्षे** परिगृहीत्र्यौ । 'पक्ष परिग्रहे' (१५५१ चुरा०) अच्, स्वतन्त्रे इत्यर्थः । अपि वा—छन्दसी 'छदि संवरणे' (१५७८ चुरा०), संवरणकारिण्यौ पूर्व-प्राची-प्रतीची-लक्षणे दिशौ पक्षौ गमनहेतुभूतौ ययोः तथोक्ते । **उषसा** उषसौ द्वे, सायंप्रातवेलारूपे **पेपिशाने** रूपेण सौन्दर्येण स्वात्मानमतिशयेन शोभयन्त्यौ, दीपयमाने । 'पिश अवयवे दीपनायाश्च' (१४३८ तुदा०) । **समानम्** एकं **योनिम्** कारणं स्वोत्पादकं सूर्यं परमेश्वरं वा **अनु** अनुलक्ष्य **संचरेते** सम्यक् मिथः सख्येन सह चरतः, सह गच्छतः, मिलित्वा भ्राम्यतः । तमेवार्थं दृढीकरणाय पुनराह—**सूर्यपत्नी** तत्तुल्ये सायं-प्रभातवेले सम्बद्धत्वसामान्यात् **प्रजानती** प्राणिवर्गं कालं बोधयन्त्यौ स्वयाता यातमार्गं जानाने वा **केतुमती** केतुमत्यौ जागरणस्वापयोः श्रमविश्रामयोर्वा केतुनाम, पताकया युक्ते **अजरे** अजीर्णे, कदापि अप्राप्तवृद्धावस्थे,

४

सर्वदा यौवनोपेते **भूरिरेतसा** भूरिरेतसौ अनन्तवीर्योपेते **संचरतः** मिथः सख्यौ भूत्वा व्यवहरतः ॥ १२ ॥

**ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मा अनु रेत आगुः ।**
**प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम् ॥ १३ ॥**

**ऋतस्य । पन्थाम् । अनु । तिस्रः । आ । अगुः । त्रयः । घर्माः । अनु । रेतः । आ । अगुः । प्रऽजाम् । एका । जिन्वति । ऊर्जम् । एका । राष्ट्रम् । एका । रक्षति । देवऽयूनाम् ॥ १३ ॥**

**तिस्रः** तिस्रो देवताः अग्नि-वाय्वादित्याख्याः **ऋतस्य** सत्यस्य, यज्ञस्य **पन्थाम्** मार्गम् **अनु आ अगुः** आसमन्तात् अनुसृतवत्यः । 'अग्निरत्र रुद्रः, 'सो अरोदीद् यदरोदीत्' इति तैत्तिरीये वाक्ये रुद्रपदेन अग्नेर्विवक्षितत्वात् । वायुः सूत्रात्मा हिरण्यगर्भः, आदित्यो विष्णुः, द्वादशादित्यनामसु विष्णोः पाठात्, 'आदित्यानामहं विष्णुः' (गीता १०.२१) इति गीतावचनाच्च । तथा च रुद्रब्रह्मविष्णुनामधेयाः त्रिनयन-चतुर्मुख-चतुर्भुजा देवाः यज्ञं जगदाख्यं विस्तारितवन्त इति पर्यवस्यति । **त्रयः घर्माः** तेजांसि, तेषां देवानां शक्तयः सृष्टि-स्थिति-संहाराख्याः **रेतः** पूर्वकल्पानुष्ठितं मायायां लीनेषु सर्वप्राण्यन्तःकरणेषु समवेतं धर्माधर्मकर्मजातं कामापरपर्यायसिसृक्षाद्वारा भाविसृष्टिबीजं फलोन्मुखम्[1] **अनु** समष्टिप्राणिकर्मफलोन्मुखतायाः उपरि **आ अगुः** स्वकार्यव्यापृता बभूवुः । तदेव विवृणोति—**एका** सर्गशक्तिः **प्रजाम्** प्राणिवर्गं पुत्रादिसन्तानोत्पादनेन **जिन्वति** प्रीणयति । 'हिविधि-विजिवि प्रीणनार्थाः । जगति सर्वेऽपि प्राणिनः पितृ-पितामहप्रमुखाः

१. मनसः अन्तःकरणस्य सम्बन्धिवासनाशेषेण मायायां विलीने अन्तःकरणे समवेतम् । सामान्यापेक्षमेकवचनम् । सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः । एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम् । तादृशं रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमम् । अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् । भूष्णु वर्धिष्णवजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः । ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः ।

पुत्रपौत्रादिव्युत्पत्त्या प्रसीदन्ति, तद्धेतुसर्गशक्तिरिति भावः। **एका** स्थितिशक्तिः, रक्षणशक्तिः, परिपालनशक्तिर्वा **ऊर्जम्** अन्नम् भोग्यजातं तदुत्थबलं वा प्रदाय प्राणिवर्गम्, 'रक्षति' इत्यपकृष्यते। रक्षणशक्त्या समुपलब्धभोग्यजातेन सर्वे प्रणिनः पुष्टाः बलिनः सुरक्षिताश्च जायन्ते। **देवयूनाम्** आत्मनो देवमिच्छताम्, देवशब्दात् क्यच्। अथवा 'देवैर्युवन्ति आत्मानं मिश्रयन्ति संयोजयन्ति' इति देवयुवस्तेषाम्। 'युः मिश्रणामिश्रणयोः', विच्। देवयुवां वा, वकारलोपश्छान्दसः। देवोपासकानां देवभक्तानां राष्ट्रं राज्यं जनपदं वा रक्षति संहारशक्तिः। एतदुक्तं भवति—यदा परराष्ट्रं अस्मद्राष्ट्रम् आक्रामति तदा आक्रमणकारिणां शत्रूणां विनाशमन्तरा रक्षा दुर्घटेति। 'रक्षति'पदेन रक्षणकारणं शत्रुसंहारो लक्ष्यते। स्वभक्तानां राष्ट्रस्योपरि आक्रमणकारिणाम् असुराणां विनाशं करोति प्रह्वो संहारशक्तिरिति।

अपरा व्याख्या—अध्यात्मम्, **तिस्रः** श्रवणमनननिदिध्यासनाख्याः तिस्रश्चेतोवृत्तयः। **ऋतस्य** सत्यस्य त्रिकालाबाध्यस्य ब्रह्मणः **पन्थां** मार्गं साधनम् **अनु आ अगुः** अनुसृतवत्यः। इमाः तिस्रो वृत्तयः साक्षात्कारसाधनतामापद्यन्त। **त्रयः धर्माः** सामर्थ्यविशेषाः क्रमेण प्रमाणसंशयापनोदन-प्रमेयसंशयापनोदन-विपरीतभावनानिराकृतिलक्षणाः। **एका** श्रवणशक्तिः **प्रजाम्** साधकानाम् आत्मानं जिज्ञासमानानां समूहम् **जिन्वति** किमत्र प्रमाणमिति संशयनिरासेन प्रसादयति। **एका** अपरा मननशक्तिः **ऊर्जम्** बलं कुतर्कनिरासेन सत्तर्क-साहाय्येन च, दृढतां सम्पादयतीति शेषः। **देवयूनाम्** आत्मचिन्तकानां **राष्ट्रम्** आत्मराज्यं ब्रह्मसाक्षात्कारलक्षणम् **एका** अन्या निदिध्यासनशक्तिः रक्षति, तद्रक्षणार्थं विपरीतभावनाख्यं सपत्नं निरस्यति, विनाशयति। अयं भावः—असम्भावना द्विविधा प्रमाणाशङ्का प्रमेयाशङ्का च। तात्पर्यग्राहकोपक्रमोपसंहारादिलिङ्गषट्कबलात् अद्वितीयब्रह्मणि तात्पर्यावधारणं श्रवणम्। तस्य शक्तिः प्रथमाम् असम्भावनां दूरीकरोति। युक्तिभिः सत्तर्कैः निर्धारिताऽद्वितीयब्रह्मानुसन्धानं मननम्। तच्छक्तिः द्वितीयां प्रमेयाशङ्कारूपाम् असम्भावनां समूलघातमपहन्ति। विजातीयप्रत्ययतिरस्कारपुरस्सरम् अद्वितीयब्रह्माकारसजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम्। तच्छक्तिः विपरीतभावनां चतुष्पदाम् अविद्याम् अनित्ये

देहादौ स्वात्मबुद्धिं सद्यो विनाशयति। ततो अप्रतिबद्धं महावाक्यं ब्रह्मात्मसाक्षात्कारं जनयितुं प्रभवति इति। चतुष्पदाम् अविद्यां वर्णयति महर्षि-पतञ्जलिः योगदर्शने—'अनित्याशुचिदुःखाऽनात्मसु नित्य-शुचि-सुखा-ऽऽत्मख्यातिः अविद्येति' ( योगसू० साधनपाद सू० ६ ) ॥ १३ ॥

**अ॒ग्नीषोमा॑वदधु॒र्या तु॒रीयासी॑द् य॒ज्ञस्य॑ प॒क्षावृष॑यः क॒ल्पय॑न्तः । गा॒य॒त्रीं त्रि॒ष्टुभं॒ जग॑तीमनु॒ष्टुभं॑ बृहद॒र्कीं यज॑मानाय॒ स्व॒रा॒भर॑न्तीम् ॥ १४ ॥**

**अ॒ग्नीषोमौ॑ । अ॒द॒धुः॒ । या । तु॒रीया॑ । आसी॑त् । य॒ज्ञस्य॑ । प॒क्षौ॑ । ऋष॑यः । क॒ल्पय॑न्तः । गा॒य॒त्रीम् । त्रि॒ऽस्तुभ॑म् । जग॑तीम् । अ॒नु॒ऽस्तुभ॑म् । बृ॒ह॒त्ऽअ॒र्कीम् । यज॑मानाय । स्वः॑ । आ॒ऽभर॑न्तीम् ॥ १४ ॥**

**ऋषयः** योगप्रसूत-ऋतम्भराप्रज्ञया दृष्टानुश्रविकविषयवितृष्णाः वीतरागाः **या तुरीया आसीत्** जागरित-स्वप्न-सुषुप्तिभ्यो विलक्षणा चतुर्थी ब्रह्मभावापत्तिरूपा मुक्त्यपरपर्याया। येति यच्छब्दानुरोधेन 'ताम्' इति शेषः। 'अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' ( माण्डू० ७ ) इत्युक्तां तां तादृशीम्, **अदधुः** धारितवन्तः, बहिरङ्गान्तरङ्गसाधनानुष्ठानेन सञ्जातात्मसाक्षात्कारा लब्धवन्तः। किं कुर्वन्तः ? एतान् पदार्थान् **कल्पयन्तः** मिथ्यात्वेन निश्चिन्वानाः सर्वं जगदिदं मायाविजृम्भितप्रतीतिमात्रं तत्त्वतो नास्त्येव इति कृतनिश्चयाः। के ते पदार्थाः, ये तैः कल्पितत्वेन निश्चिताः ? इत्यपेक्षायामाह—**अग्नीषोमौ**। भोक्तृ-भोग्यलक्षणौ पति-पत्नीरूपौ उग्रोष्णः अग्नितत्त्वप्रधानः पुरुषोऽग्निः, शान्त-रसात्मक-सोमतत्त्वप्रधाना पत्नी सोमः। अग्निश्च सोमश्च तौ। एतावेव प्रश्नोपनिषदि प्राण-रयिशब्देन अभिहितौ—'आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः' इति ( प्रश्नो० १.५ )। तत्र आदित्यशब्देन अग्निरेव लक्ष्यते—'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापान-समायुक्तः पचाम्यन्नं

चतुर्विधम् ॥' ( गी० १५.१५ ) इति स्मृत्या अग्नेः प्राणसम्बन्धात्, 'उद्यन्तं वा आदित्यमग्निरनु समारोहति' इति श्रुतेः । 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' ( प्रश्नो० १.७ ), 'प्राणः प्रजानामुदयत्येष सूर्यः' ( प्रश्नो० १.८ ) इति श्रुतेश्च सूर्याग्नयोरभेदस्य विवक्षितत्वात् । **यज्ञस्य** मानस-जपयज्ञस्य वेदमन्त्रविषयक-मनोवृत्ति-रूपस्य लक्षणया तत्साधकमनोमयस्य **पक्षौ** ऋक्सामलक्षणौ दक्षिण-वामपक्षौ, 'तस्य यजुरेव शिरः, ऋग्दक्षिणः पक्षः, सामोत्तरः पक्षः'' ( तै० उ० २.३ ) इति श्रुतेः ।

अथवा—**यज्ञस्य** यज्ञविस्तारकस्य विज्ञानमयस्य, 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' ( तै० उ० ५ ) इति श्रुतेः । **पक्षौ** ऋत-सत्यलक्षणौ, 'तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः, सत्य-मुत्तरः पक्षः' ( तै० उ० २.४ ) इति श्रुतेः । ऋतं शास्त्रानुसारेण कर्तव्यत्वेन निश्चितम्, शास्त्रतो निश्चितस्य अनुसन्धानं सत्यमिति तयोर्भेदः ।

न केवलमेतावदेव, किं तर्हि ? सप्त छन्दांस्यपि इत्याह—**गायत्रीम्** चतुर्विंशत्यक्षरां त्रिपदाम्, अष्टविंशत्यक्षरस्य उष्णिक्छन्दसः उप-लक्षणमेतत् । **त्रिष्टुभम्** चतुश्चत्वारिंशदक्षरं चतुष्पदं त्रिष्टुबाख्यं छन्दः, **जगतीम्** अष्टाचत्वारिंशदक्षरं चतुष्पदं जगतीनामधेयं छन्दः, **अनुष्टुभम्** द्वात्रिंशदक्षरं चतुष्पदम्, **बृहदर्कीं** बृहती चासौ अर्की बृहदर्की अर्चनीयां बृहतीं सा षट्त्रिंशदक्षरा चतुष्पदा, एतत् चत्वारिंशदक्षरायाः पञ्चपदायाः पङ्क्तेरुपलक्षणम् । अर्की अर्को अर्चतेः गौरादिगणे-पाठात् ङीष् । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीलक्षणानि सप्त छन्दांसि क्रमेण चतुरक्षरवृद्ध्या संपन्नानीति यावत् । छन्दः-सप्तकस्य विशेषणं **यजमानाय** याजकाय, यज्ञमनुतिष्ठते श्रद्धाधनाय **स्वः** स्वर्गं सुखं वा **आभरन्तीम्** आहरन्तीं सम्पादयन्तीं यज्ञाङ्गदेवता-स्तुतिरूपेण प्रसन्ना देवाः यजमानं स्वर्गं प्रापयन्ति इति निष्कर्षः ।

अपि वा—अग्निपदेन अग्निहोत्रादि-हविःसंस्थासप्तकस्य ग्रहणम् । सोमपदेन च अग्निष्टोमादि-सोमसंस्था-सप्तकस्य ग्रहणम् । तथा सति अग्निषोमौ हविःसंस्था-सोमसंस्थारूपौ । १. अग्न्याधानम्, २. अग्नि-होत्रम्, ३. दर्शपौर्णमासौ, ४. चातुर्मास्यानि, ५. पिण्डपितृयज्ञः, ६. पशु-बन्धः, ७. सौत्रामणिश्चेति सप्त हविःसंस्था । १. अग्निष्टोमः, २.

अत्यग्निष्टोमः, ३. उक्थ्यम्, ४. षोडशी, ५. वाजपेयः, ६. अतिरात्रः, ७. आप्तोर्यामश्चेति सप्त सोमसंस्थाः ज्ञेयाः ॥ १४ ॥

**पञ्च व्यु॑ष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।**
**पञ्च दिशः पञ्चदशेन क्लृप्तास्ता एकमूर्ध्नीरभि लोकमेकम् ॥१५॥**

**पञ्च । विऽउष्टीः । अनु । पञ्च । दोहाः । गाम् । पञ्चऽनाम्नीम् । ऋतवः । अनु । पञ्च । पञ्च । दिशः । पञ्चऽदशेन । क्लृप्ताः । ताः । एकऽमूर्ध्नीः । अभि । लोकम् । एकम् ॥ १५ ॥**

**पञ्च** पञ्चसंख्याकाः **व्युष्टीः** तमोनिरासेन दीप्यमानाः उषसः प्रभातवेलाः, 'वि'पूर्वात् 'वस निवासे' (१००५ भ्वा०), 'वस आच्छादने' (१०२३ अदा०) 'वस स्नेहाच्छेदनापहरणेषु' (१७४५ चुरा०), 'वस निवासे' (१९४३ चुरा०) 'उष दाहे' (६९६ भ्वा०) वा । ततः क्तिन् । विपूर्वो वसिः समाप्तिवचनः । 'अच्छी विवासे' (१२९६ तु०) 'विवासः समाप्तिरिति' भट्टोजीदीक्षितः । विवासकाः रात्रेः समापकाः तमोनिरासकाः प्रीतिकारिण्यः निद्राऽऽलस्यादिदाहिकाः वा इत्यर्थः । अनु ताभिः सह **पञ्चदोहा** दोहनकाला **पञ्चनाम्नीं** पञ्चनामधेयां प्रपञ्चरचनायां गमनशीलां प्रपञ्चरचनोन्मुखीं वा, **गाम्** धेनुः, विराजम् अनु लक्ष्य, अनुगता वा **ऋतवः** वसन्तादयः **पञ्च** पञ्चसंख्याकाः वर्तन्ते । **पञ्चदिशः** चतस्रः प्राच्यादयः, एका ऊर्ध्वा 'पञ्च वा इमा दिशश्चतस्रस्तिरश्च एकोर्ध्वा' (ऐ० ६.३२) इति च ब्राह्मणम् । सम्भूय पञ्चसंख्याकाः । **पञ्चदशेन** चन्द्रमसा प्राणेन वा **क्लृप्ताः** सम्पादिताः प्राणिवर्गस्य व्यवहार्यतां नीताः । 'कृपू सामर्थ्ये' (७६२ भ्वा०) । **एकमूर्ध्नीः** एकमूर्धन्यः एकेन शिरसोपेता, चन्द्रः सूर्यः प्राणः परमात्मा वा तदध्यक्षः, तदधीना । **ताः** सर्वाः **एकं लोकं** प्रकाशमानम्, 'लोकृ दर्शने' (७६ भ्वा०) स्वस्वामिनं परमात्मानं चन्द्रं सूर्यं वा अभिव्याप्य स्थिताः 'चन्द्रमा वै पञ्चदश । एष हि पञ्चदश्यां क्षीयते पञ्चदश्यामापूर्यते' (तै० १.५.१०.५) इति तैत्तिरीयकाः । 'प्राणो वै त्रिवृदात्मा पञ्चदशः' (तां० १९.११.३) इति ताण्डीनः ।

आधिदैवतम्—पञ्च व्युष्टयः प्रकृतेर्विकारविशेषाः पञ्चभूतलक्षणाः । अनुरत्र सहार्थे 'तृतीयार्थे', (पा० सू० १.४.८५) इति कर्म

प्रवचनीयसंज्ञायाम् 'कर्मप्रवचनीययुक्ते द्वितीया' (पा० सू० २.३.८) इति द्वितीया। ताभिर्व्युष्टिभिः सहिता इत्यर्थः। **पञ्चदोहाः** तन्मात्रापरपर्यायपञ्चभूतवर्तिनः, ग्राह्यशब्दादिधर्मविशेषाः।

अध्यात्मम्—**पञ्चनाम्नीं गाम्** चितिशक्तिम् अनुगता ऋतवः गतिशीलाः प्राणनापाननादिलक्षणपञ्चवृत्तियुक्ताः प्राणाः। सप्तेन्द्रियाणि शिरःस्थितानि द्वे चक्षुषी द्वे श्रोत्रे द्वे घ्राणे मुखं चेति सप्त कर्मेन्द्रियाणि, द्वौ पादौ द्वौ हस्तौ पायूपस्थौ वाक् चेति सम्भूय चतुर्दश, मनश्च पञ्चदश, तद् विद्यते वशे यस्य असौ पञ्चदशश्चन्द्रः मनोऽध्यक्षश्चन्द्रदेवः, तेन पञ्चदशेन। पञ्चदशशब्दात् मत्वर्थे 'अर्शादिभ्यो अच्' प्रत्ययः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्चप्राणाः सम्भूय पञ्चदश। पूर्ववद् पञ्चदशशब्दात् मत्वर्थीयो अच्। पञ्चदशः पञ्चदशानां ज्ञानेन्द्रिय-कर्मेन्द्रिय-प्राणानां स्वामी जीवोऽपि पञ्चदशः। तेन जीवात्मना सप्त लोका उपरितना सप्त अधस्तना मिलित्वा चतुर्दशलोकाः। तान् लोकान् अपेक्ष्य पञ्चदशः पञ्चदशसंख्यापूरकः चतुर्दशभुवनपतिः परमात्मा। तेन चतुर्दशभुवनप्रकाशकत्वात् सूर्योऽपि पञ्चदशः। ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम् अन्तःकरणचतुष्टयं मनोबुद्धयहङ्कार-चित्तलक्षणं तान्यपेक्ष्य प्राणः पञ्चवृत्तिमान् पञ्चदशः, तेन वा। एवं मनीषिभिः स्वप्रतिभानुसारेण सङ्गमनीयम्। ज्ञानेन्द्रियाणां श्रोत्रत्वक्चक्षुःघ्राणरसनाख्यानां दिग्वार्ताकाश्विवरुणाख्याः क्रमेण देवाः। तत्र घ्राणदेवस्य अश्वियुगलरूपत्वात् षड्देवाः कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानाम् अग्नीन्द्रोपेन्द्रयमप्रजापतयो देवाः। इत्थं इन्द्रियदशकस्य देवा एकादश। अन्तःकरणं चतुर्विधं मनोबुद्धयहङ्कारचित्ताख्यम्। मनसः चन्द्रः, बुद्धेश्चतुर्मुखः, अहङ्कारस्य रुद्र इति सम्भूय चतुर्दश देवाः। पञ्चदशः चित्ताभिमानी वासुदेवोऽच्युतः। तेन पञ्चदशेन अच्युतेन। अलमनजल्पनेन। अत्र मन्त्रे अन्यत् ज्ञातव्यं सुधयो विभावयन्तु॥ १५॥

**षड् जाता भूता प्रथमजर्तस्य षडु सामानि षडहं वहन्ति।**
**षड्योगं सीरमनु सामसाम षडाहुर्द्यावापृथिवीः षडुर्वीः॥ १६॥**

**षट्। जाता। भूता। प्रथमऽजा। ऋतस्य। षट्। ऊं इति।**

सामा॑नि । ष॒ट्ऽअ॒हम् । व॒ह॒न्ति॒ । ष॒ट्ऽयो॒गम् । सीर॑म् । अनु॑ ।
साम॑ऽसाम । षट् । आ॒हुः । द्यावा॑पृथि॒वीः । षट् । उ॒र्वीः ॥ १६ ॥

मनसा सहितैः ज्ञानेन्द्रियैः युक्तं **सीरं** शरीरं **सामसाम** वीप्सया बहुत्वम्, सर्वाणि सामानि, सोऽन्तकर्मणि, पापविनाशकानि समनस्कज्ञानेन्द्रियसाध्यानि भगवद्दर्शन-भगवदर्चनादिकर्माणि, वहन्ति इत्यनुषङ्गः। अपि वा–षडहं ब्रह्माण्डम्, अहशब्दो ज्योतिर्वचनः। 'पृथिवीमारभ्य दिवं यावत् प्रसृतस्य ज्योतिषः षड् विभागाः' इति वेदवेदाङ्गसमयः। **द्यावापृथिवी** दिवं पृथिवीं च सम्भूय **षट् आहुः** कथयन्ति। एतदुक्तं भवति—पृथिवीमारभ्य द्युपर्यन्तो यावान् प्रदेशस्तस्य वेदाभिमता षड् विभागाः तिस्रो भूमयः, तिस्रो दिवश्च—"तिस्रो मातॄस्त्रीन् पितॄन् बिभ्रदेकः' (ऋ० १.१६४.१०) इति मन्त्रे प्रतिपादिताः। किं तासु काचिद् भूयसि काचित् अल्पीयसी वेत्याशङ्कायामाह—**षडुर्वीः**। ताः षट् ऊर्वीः ऊर्व्यः विस्तीर्णाः, न्यूनाधिक्यशङ्का न कार्येत्यर्थः। अपि वा षट् ऊर्व्यः महान्तः पदार्थाः। यदाह आश्वलायनश्रौत्रसूत्रे—"षण्मोर्वी रंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्चेति" (आश्व० श्रौ० १.२.)। **सीरम्** 'सेरं' ह्येतद्यत्। 'इरामेवास्मिन्नेतद् दधाति।" (शत० ७.२.२), "इन्द्र आसीत् सीरपतिः शतक्रतुः" (तै० ब्रा० २.४.८.७) इति च ब्राह्मणम् ॥ १६ ॥

षडा॑हुः शी॒तान् षड्डु॑ मा॒स उ॒ष्णानृ॒तुं नो॑ ब्रूत यत॒मोऽति॑रिक्तः ।
स॒प्त सु॑प॒र्णाः क॒वयो॒ नि षे॑दुः स॒प्त च्छन्दा॒स्यनु॑ स॒प्त दी॒क्षाः ॥ १७ ॥

षट् । आ॒हुः । शी॒तान् । षट् । ऊं॒ इति॑ । मा॒सः । उ॒ष्णान् । ऋ॒तुम् । नः॒ । ब्रू॒त॒ । य॒त॒मः । अति॑ऽरिक्तः । स॒प्त । सु॒ऽप॒र्णाः । क॒वयः॑ । नि । से॒दुः॒ । स॒प्त । छन्दां॑सि । अनु॑ । स॒प्त । दी॒क्षाः ॥ १७ ॥

**मासः** मासान् षड् षट्संख्यकान् **शीतान्** शैत्योपेतान् आश्विनादिफाल्गुनान्तान् शरद्-हेमन्त-शिशिराख्यर्तुत्रयरूपान्, **उष्णान्** शैत्यविरोध्यौष्ण्ययुक्तान् चैत्रादिभाद्रपदपर्यन्तान् मासान् वसन्त-ग्रीष्म-वर्षाख्यर्तुत्रयात्मकान् आहुः कथयन्ति शास्त्रकोविदः ऋतुविशेषज्ञा वा।

अतिरिक्तः एभ्यो भिन्नः अवशिष्टः अधिको वा यतमः यः ऋतुरस्ति । यच्छब्दानुरोधात् 'तम्' इति शेषः । ऋतून् इति छान्दसं बहुवचनम् । ऋतुम् ऋतुविशेषं नः अस्मान् ब्रूत कथयत, वेदविदो महानुभावाः । सुपर्णाः सुपतना इतस्ततः प्रसरणस्वभावाः कवयः गतिशीलाः कविः क्रान्तदर्शनो भवति कवतेर्वा इति (निरु० १२.७) । 'कविः' क्रान्तदर्शनः । अथवाः कवतेः धातोः गत्यर्थस्य कविः, कवति गच्छत्यसौ नित्यमिच्छतीति तट्टीकायां दुर्गाचार्यः । कविरत्र गत्यर्थः । निषेदुः निषण्णाः सूर्यमण्डले उपविष्टाः, सूर्येण सम्बद्धा इत्यर्थः । अनुरत्र सहार्थे । सप्तभिः छन्दोभिः गायत्र्यादिभिः सहिताः सप्तदीक्षाः संस्कारविशेषा वरीवृत्यन्ते । सप्त दीक्षा—"प्रजापतिरकामयताऽश्वमेधेन यजेति । स तपोऽतप्यत । तस्य तेपानस्य सप्तात्मनो देवता उदक्रामन्, सा दीक्षाऽभवद् । (तै० सं० ३.८.१०.१) इति ॥ १७ ॥

**स॒प्त होमा॑ः स॒मिधो॑ ह स॒प्त मधू॑नि स॒प्तर्तवो॑ ह स॒प्त ।**
**स॒प्ताज्या॑नि॒ परि॑ भू॒तमा॑य॒न् ताः स॑प्तगृ॒ध्रा इति॑ शुश्रुमा व॒यम् ॥ १८ ॥**

स॒प्त । होमा॑ः । स॒म्ऽइध॑ः । ह॒ । स॒प्त । मधू॑नि । स॒प्त । ऋ॒तव॑ः । ह॒ । स॒प्त । स॒प्त । आज्या॑नि । परि॑ । भू॒तम् । आ॒य॒न् । ताः । स॒प्त॒ऽगृ॒ध्राः । इति॑ । शु॒श्रु॒म॒ । व॒यम् ॥ १८ ॥

द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका वागिति प्राणसप्तकाभिप्रायकोऽयं मन्त्रः । 'सप्त प्राणाः प्रभवन्ति, तस्मात् सप्तर्चिषः समिधः सप्त होमाः । सप्त इमे लोका येषु चरन्ति प्राणाः गुहाशया निहिताः सप्त सप्त ।'[१] (मुण्ड० २ खण्ड १ मन्त्र ८) । इति मन्त्रेण विवृतश्च । सप्त सप्तसंख्याकाः शिरसि स्थिताः चक्षुश्श्रोत्रादिलक्षणाः प्राणाः । इन्द्रियाणि विवृणोति—होमाः होमस्तद्विषयाणि उपासनानि, 'यदस्य विज्ञानं तज्जुहोति' इति श्रुत्यन्तरात् । सप्त इत्युषज्यते । इन्द्रियसप्तकविषयोपासनानि अपि होमनामधेयानि सप्त इत्यर्थः । सप्त समिधः समिन्धनहेतवो विषयाः । विषया एव हि इन्द्रियाणि समिद्धयन्ति, दीपयन्ति, यथा अग्निः काष्ठम् । ह शब्दोऽवधारणार्थकः । सप्त मधूनि तेषां इन्द्रियाणां सप्त विषयान् मधूनि मधुराणि मन्यन्ते मूढा आपात-

दर्शिनः । अहितकरेषु हितकरबुद्धिरेव अविद्या । **ऋतवः** गतिशीलाः । अत एव एते 'सप्त ऋतु'-शब्देनापि व्यपदिश्यन्ते । **सप्त आज्यानि** आङ्-पूर्वात् 'अञ्जू व्यक्तीम्रक्षणकान्तिगतिषु' (१४५९ रुधा०) इति धातोः आङ्पूर्वात् 'अञ्जेः संज्ञायामुपसंज्ञानम्' (का० वा० ३.१.१०९) इति वार्तिकेन करणे क्यप्, 'अनिदताम्' इति नलोपे रूपम् । **आज्यम्** घृतं तद्धि अग्नौ प्रक्षिप्तं दीप्तिवर्धनेन पदार्थाभिव्यञ्जकम् । स्वभक्षणेन वाक्-तेजोवृद्ध्या स्फुटोच्चारणकरम् । अत्र आज्यशब्देन तत्प्रक्षेपोत्थदीप्तयो गृह्यन्ते । ताश्च श्रोत्रादीन्द्रियजन्यवृत्तयः श्रवणादिव्यापाराः सप्तैव । **ताः** इन्द्रियजन्यश्रवणादिव्यापारजन्यसंस्काराख्या वासनाः **सप्तगृध्राः** शवमांसादिभक्षक-लोमप्रतिमूर्ति-गृध्राख्यपक्षितुल्याः । 'उलूक यातुं' (ऋ० ७.२०४.२२) इति मन्त्रे क्रमेण मोह-क्रोध-मत्सर-काम-मद-लोभा-ख्यषड्रिपुप्रतीकत्वेन उक्तानाम् उलूकादीनां षण्णां राक्षसानां मध्ये पाठात् गृध्रशब्देन तासु वासनासु गृध्रवत् अशोभनीयत्वबुद्धिद्वारा त्याज्यत्वं ध्वन्यते । **इति** एवं **वयं** साधकाः **शुश्रुम** श्रुतवन्तः ।

कर्मठाः केचित् इत्थं वर्णयन्ति—**सप्त होमाः** सप्त यज्ञाः बलिवैश्व-देवरूपाः पञ्चमहायागनामधेयाः, द्वे अग्निहोत्राहुती प्रातराहुति-सायाह्नाहुतिलक्षणे सम्भूय सप्त । अथवा—इष्टि-संस्थायाः अग्निहोत्रादि-भेदेन सोम-संस्थायाश्च अग्निष्टोमादिभेदेन सप्तत्वात् । तत्र पुरोडाशा-ज्याद्याहुतयः सोमाहुतयश्च प्रतिसंस्थं सप्तैव । 'सप्तर्तवः संवत्सरः' (शत० ६.६.१.१४), 'तस्मादेकस्मिन् ऋतौ सर्वेषाम् ऋतूनां रूपम्' (शत० ८. ७. १. ४) इति शतपथ-श्रुतीभ्यां प्रसिद्धषडर्तुव्यतिरिक्तः कश्चिद् एकोऽपर ऋतुः सप्तमः । सर्वर्तुविश्रुतस्वरूपः । असौ हि प्रत्यर्तुः कियन्तं कालं यावत् सर्वेषामृतूनां रूपं प्रकटयतीति । शिष्टं समानम् ॥ १८ ॥

**स॒प्त च्छन्दां॑सि चतुरु॒त्त॒राण्य॒न्यो अ॒न्यस्मि॒न्नध्यार्पि॑तानि ।**
**कु॒थं स्तोमा॒ः प्रति॑ तिष्ठन्ति॒ तेषु॒ तानि॒ स्तोमे॑षु कु॒थमार्पि॑तानि ॥ १९ ॥**

**स॒प्त । छन्दां॑सि । च॒तुः॒ऽउ॒त्त॒राणि॑ । अ॒न्यः । अ॒न्यस्मि॑न् । अधि॑ । आर्पि॑तानि । कु॒थम् । स्तोमाः॑ । प्रति॑ । ति॒ष्ठ॒न्ति॒ । तेषु॑ । तानि॑ । स्तोमे॑षु । कु॒थम् । आर्पि॑तानि ॥ १९ ॥**

**सप्त छन्दांसि** गायत्र्यादीनि, **चतुरुत्तराणि** चतुरक्षराधिकानि उपरितनानि, मध्यमपदलोपी समासः। पूर्वपूर्वमपेक्ष्य उत्तरस्मिन् उत्तरस्मिन् छन्दसि चत्वारि अक्षराणि वर्धन्ते। यथा—गायत्रीमपेक्ष्य उष्णीहि तृतीयपादे चत्वारि अक्षराणि अधिकानि। अष्टाविंशत्यक्षरा हि सा। अनुष्टुब् हि चतुरक्षरवृद्धया अष्टाक्षरैः द्वात्रिंशदक्षरो हि सः। ततो वृहत्यां चतुरक्षरमेलनेन षड्विंशदक्षरा सा चतुष्पदी। एवमुत्तरोत्तराणि पङ्क्ति-त्रिष्टुप्-जगतीछन्दांसि प्रत्येकं चतुरक्षरवृद्धानि। पङ्क्तौ इयान् विशेषः—सा पञ्चपदा, चत्वारिंशदक्षरा। 'पङ्क्ति पञ्चपदे' इति हि निरुक्तम्। **अन्यः अन्यस्मिन्** परस्परस्मिन्, **अधि** अधिशब्दो सप्तम्यर्थानुवादी **आर्पितानि** आ समन्तात् अर्पितानि, परस्परम् आश्रितानीत्यर्थः। मिथः सापेक्षाणि, चतुरक्षरवृद्धयर्थम् उत्तरैः पूर्वेषामपेक्षणात्। अपि वा— चतुरुत्तराणि इत्यस्य तेषु चत्वारि छन्दांसि उत्कृष्टानि गायत्र्यनुष्टुप्-त्रिष्टुप्-जगत्याख्यानि, यागसम्बन्धप्राचुर्यात् संख्यावहुत्वात् समाक्षरपादचतुष्टययुक्तत्वाच्च। विषमाक्षरत्वं विषमपादत्वञ्च निकृष्टत्वम्, समाक्षरता समपादता च ज्यायस्त्वम्।

स्तोम-छन्दसोः मिथः सम्बन्धं पृच्छति—कथमिति। **तेषु छन्दस्सु स्तोमाः** त्रिवृदादयः सामगानविशेषाः। प्रगीतमन्त्रसाध्यं स्तोत्रम्। ऋगावृत्तिसाध्य-गानगतसंख्याविशेषः स्तोमः। **कथम्** केन प्रकारेण **प्रतितिष्ठन्ति** अवस्थिता भवन्ति। दृढीकरणाया **तानि** छन्दांसि **तेषु** त्रिवृदादिषु **स्तोमेषु कथम्** केन प्रकारेण **आर्पितानि** आ समन्तात् अर्पितानि आश्रितानि। भो वेदविदो महानुभावाः! कैः छन्दोभिः कः स्तोमः कथं निष्पाद्य इति विविच्य अस्मभ्यं यूयं ब्रूत इति प्रश्नः। सकृद्वर्णनमात्रेण तत् दुरधिगमम्। अतः सामसंहितायाः तद्ब्राह्मणाष्टकस्य च सततमभ्यासो विधेयः। ततो भवन्तः तद्रहस्यं प्रतिपत्स्यन्त इति उत्तरमुपरिष्टादवगन्तव्यम्। स्तोम-विष्टुतिप्रकाराः ताण्ड्यब्राह्मणस्य द्वितीय-तृतीयाध्याययोर्वर्णिताः। मया अपि सामसंहिता-भाषाभाष्यभूमिकायां सविस्तरमुपन्यस्तास्तत एव अवसेयाः ॥ १९ ॥

**कथं गायत्री त्रिवृतं व्यापि कथं त्रिष्टुप् पञ्चदशेन कल्पते।**
**त्रयस्त्रिंशेन जगती कथमनुष्टुप् कथमेकविंशः ॥ २० ॥**

कथम् । गायत्री । त्रिऽवृतम् । वि । आप । कथम् । त्रिऽस्तुप् । पञ्चऽदशेन । कल्पते । त्रयःऽत्रिंशेन । जगती । कथम् । अनुऽस्तुप् । कथम् । एकऽविंशः ॥ २० ॥

द्वादशाहान्तर्गतस्य दशरात्रस्य त्रयो यागाः—१. पृष्ठषडहः, २. छन्दोम्, ३. अविवाक्यमिति भेदात् । तत्र प्रथमेषु षट्सु दिवसेषु पृष्ठषडहानुष्ठानम् । तत्र क्रमेण षण्णां रथन्तरादिसाम्नाम् त्रिवृत्-पञ्चदश-सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशाख्यानां षण्णां स्तोमानां च सम्बन्धो वर्तते । तस्मात् **गायत्री** गायत्रीछन्दः **कथम्** प्रथमे दिवसे **त्रिवृतं** स्तोमं तस्मिन् अहनि प्रधानं **व्याप** विशेषेण प्राप्तवान् । व्यापनं चात्र प्राचुर्यम् । सामसंहितायाम् उत्तरार्चिके द्वितीयाध्यायस्य षोडश-सूक्तमारभ्य द्वाविंशसूक्तपर्यन्तं वर्णिते अस्मिन् दिवसे षोडश-सप्तदशा-ऽष्टादशै-कोनविंशै-कविंशसूक्तेषु गायत्रीछन्दस एव समाश्रयणात् ।

**कथं** केन प्रकारेण **त्रिष्टुप्** तन्नामधेयं छन्दः **पञ्चदशेन** स्तोमेन सह संगन्तुम् **कल्पते** प्रभवति । उत्तरार्चिके प्रथमाध्यायीय-दशमसूक्ततृतीयाध्यायीयैकादशसूक्तयोः माध्यन्दिनपवमाने अग्निष्टोमे प्रकृतौ षडहे विकृतौ च तस्य समाश्रयणात् । नहि अग्निष्टोमात् षडहविकृतियागस्य पञ्चदशस्तोमप्रधाने तृतीयाध्याये द्वितीयदिवसे किञ्चित् माध्यन्दिनपवमाने विशेषो दृश्यते, उभयत्र त्रिष्टुभः एव समाश्रयणात् । **जगती** तन्नामकं छन्दः **त्रयस्त्रिंशेन** स्तोमेन **कथं** केन प्रकारेण, कल्पते इत्यनुवर्तते । त्रयस्त्रिंशत्-स्तोम-[१] प्रधाने षष्ठे दिवसे सप्तमाध्याये सूक्तषडात्मकस्य बहिष्पवमान-स्तोत्रस्य जगत्योपक्रमात्, आज्यशस्त्राणां ( ७, ८, ९, १० ) सूक्त-चतुष्टयात्मकानां मध्ये सप्तमसूक्तस्य आग्नेयाज्यशस्त्रस्य तयैव उपक्रमाच्च । **अनुष्टुप्** तदाख्यः छन्दोविशेषः **एकविंशः कथं** केन प्रकारेण । एकविंशस्तोमप्रधाने चतुर्थे दिवसे विनियुक्तस्य पञ्च-माध्यायस्य एकविंशतृचेन सूक्तापरपर्यायेण अनुष्टुप्-छन्दस्केन

१. तेषु सूक्तेषु प्रथमखण्डस्य प्रथमसूक्ते तिस्रः ऋचः, द्वितीयेऽपि तिस्रः, तृतीये दश, सम्भूय षोडश । द्वितीयखण्डस्य प्रथमे सूक्ते दश, द्वितीये चतस्रः, तृतीये तिस्रः, सम्भूय सप्तदश । संकलनेन त्रयस्त्रिंशत्-संख्या पर्यवस्यति ।

उपसंहारात् । अतः सुतरां तस्य छन्दसः एकविंशत्वोपपत्तिः । पृष्टा वेदविदो महानुभावाः एतत् सर्वं सामवेदाभ्यासेन भवन्तः प्रष्टारो अवमोत्स्यन्त इति उपरिष्टाद् उत्तरं ददुरिति भावः । यद्यपि पञ्च-माध्यास्य उपसंहारो द्वाविंशेन षोडशीसूक्तेन कृतः, तथापि तस्य वैकल्पिकत्वेन कादाचित्कत्वात् अनुष्टुभ एव विशिष्टं महत्त्वमिति ध्येयम् ॥ २० ॥

अष्ट जाता भूता प्रथमजर्तस्याष्टेन्द्रर्त्विजो दैव्या ये ।
अष्टयोनिरदितिरष्टपुत्राष्टमीं रात्रिमभि हव्यमेति ॥ २१ ॥

अष्ट । जाता । भूता । प्रथमऽजा । ऋतस्य । अष्ट । इन्द्र । ऋत्विजः । दैव्याः । ये । अष्टऽयोनिः । अदितिः । अष्टऽपुत्रा । अष्टमीम् । रात्रिम् । अभि । हव्यम् । एति ॥ २१ ॥

**ऋतस्य** आदिपुरुषस्य सत्यस्य त्रिकालाबाध्यस्य परब्रह्मणः **प्रथमजाः** प्रथमोत्पन्नानि अष्ट भूता भूतानि तत्त्वानि **जाता** जातानि प्रादुर्भूतानि । आह च पार्थसारथिर्गीतायाम्—'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥" ( ७.४ ) इति । अत्र स्थूलभूतकारणं सूक्ष्मभूततन्मात्रापरपर्यायं पृथिव्यादिभूतपञ्चकं मनःशब्देन मनःकारणं अहङ्कारो बुद्धिशब्देन अहङ्कारकारणं महत्तत्त्वम्, अहङ्कारशब्देन च सर्ववासनावासितम् अविद्यात्मकमव्यक्ततत्त्वं बोध्यम् । यद्वा—बुद्धिरीक्षणम्, अहङ्कारः सृष्टि-सङ्कल्पः । **इन्द्र** अष्टसंख्याकाः **ऋत्विजः** चत्वारः होता, अध्वर्युः, उद्गाता, ब्रह्मा चेति प्रसिद्धाः । तैः सार्धं सदस्य-द्रष्ट्री-गाणपत्य-द्वारपालानां चतुर्णां मेलनादष्टौ ऋत्विजो ये यागे वर्तन्ते । **दैव्याः** दिव्यगुणविशिष्टाः **अष्टयोनिः** अदितिः अष्टानां वसूनां योनिः कारणं अदितिः नामधेया जननी । **अष्टपुत्राः** भवः, शर्वः, रुद्रः, पशुपतिः, उग्रः, महादेवः, भीमः, ईशानाख्याः रुद्रस्य अष्टमूर्तयः पृथिवीजलाग्निवाय्वाकाशक्षेत्रज्ञसूर्यचन्द्रमसाम् अधि-ष्ठात्र्यः पुत्रा यस्य तथोक्ताः । न केवलं वसुजननी, किं तर्हि ? अष्टमूर्तेः रुद्रस्यापि इत्यर्थः । **अष्टमीं रात्रिं** अष्टम्यां रात्रौ **हव्यम्** होतव्यं दुग्धादिलक्षणं हविर्द्रव्यम् **अभ्येति** गृह्णाति । 'अष्टरात्रेण वै

देवाः सर्वमाश्नुवत ( ताम् )। प्राजापत्यमेतदहो यदष्टका रात्रिव्युष्टिः' इति शतपथश्रुतेः।

अपि वा—**अष्टयोनिः** ज्ञानेन्द्रियपञ्चकं मनोबुद्धिप्राणश्चेत्यष्टौ, तेषां कारणभूता **अदितिः** भगवच्छक्तिः **अष्टपुत्रा** मनस्त्वेन उपास्यमानायाः भगवच्छक्तेरदितेः चत्वारो आध्यात्मिकपादाः वाक्प्राणचक्षुःश्रोत्रलक्षणाः, आकाशत्वेन उपास्यमानायाश्च तस्या एव आधिदैविका अग्निवाय्वादित्यदिग्लक्षणा, चत्वारः पादाः (छा० ३.१८.१-२) सम्भूय अष्टौ पुत्राः पुत्रस्थानीया यस्याः सा अष्टपुत्रा। **अष्ट ऋत्विजः** कर्मेन्द्रियपञ्चकं गार्हपत्यान्वाहार्यपचनाहवनीयत्वेन उपास्या अपानविज्ञानप्राणलक्षणाः त्रयः ऋत्विजः यथासमयं स्व-स्वकर्तव्यानुष्ठानात्, 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति। गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः' (प्रश्नो० ४ क० ३) इति श्रुतेः। प्राणस्य पञ्चवृत्तित्वेऽपि समानोदानयोः तदन्तर्भावस्य विवक्षणात्। शतपथे बहुत्र प्राणापानव्यानलक्षणप्राणयित्वा विधानाच्च ॥ २१ ॥

**इत्थं श्रेयो मन्यमानेदमागमं युष्माकं सख्ये अहमस्मि शेवा। समानजन्मा क्रतुरस्ति वः शिवः स वः सर्वाः सं चरति प्रजानन् ॥ २२ ॥**

**इत्थम्। श्रेयः। मन्यमाना। इदम्। आ। अगमम्। युष्माकम्। सख्ये। अहम्। अस्मि। शेवा। समानऽजन्मा। क्रतुः। अस्ति। वः। शिवः। सः। वः। सर्वाः। सम्। चरति। प्रऽजानन् ॥ २२ ॥**

**इत्थम्** अनेन प्रकारेण फलोन्मुखसर्वप्राणिकर्मोपभोगार्थं कृतेन सर्जनलक्षणेन **श्रेयः** कल्याणं सर्वप्राणिहितं **मन्यमाना** अनुभवन्ति। अहं विराट् इदं जगत् **आगमम्** आगतवती, जगदाकारेण परिणतास्मि। **युष्माकं** भवतां सर्वेषां प्राणिनां **सख्ये** मैत्र्यां प्रेमपुरस्सरं सहयोगदाने **शेवा** सुखिनी कृतकृत्या स्वप्रभोरादेशमनुसृत्य कर्तव्यानुष्ठानात् **अहम् अस्मि** भवामि। **समानजन्मा** भवेम। **वः** युष्माकमपि हृदि समुत्पन्नः

क्रतुसङ्कल्पः **शिवः** मङ्गलकारी **अस्ति** भूयत् । **वः** युष्माकं **सः** सङ्कल्पः **प्रजानन्** जाग्रत्-स्वफलदानोन्मुखः **सर्वाः** प्रजाः, परितः इति शेषः, **संचरति** स्वफलं दातुं व्याप्रियते, प्रयतते ॥ २२ ॥

अष्टेन्द्रस्य षड् यमस्य ऋषीणां सप्त सप्तधा ।
अपो मनुष्या३ नोषधीस्ताँ उ पञ्चानु सेचिरे ॥ २३ ॥

अष्ट । इन्द्रस्य । षट् । यमस्य । ऋषीणाम् । सप्त । सप्तऽधा । अपः । मनुष्यान् । ओषधीः । तान् । ऊं इति । पञ्च । अनु । सेचिरे ॥ २३ ॥

**इन्द्रस्य** प्रत्यगभिन्नपरब्रह्मणः **अष्ट** 'स्वयमात्मा चतुष्पात्' ( माण्डू० २ ) इति श्रुतिमनुसृत्य चत्वारः पादाः प्रत्यगात्मनः विश्व-तैजस-प्राज्ञ-तुरीयाख्याः, परमात्मनश्च विराट्, हिरण्यगर्भः, ईश्वरः, ब्रह्म चेत्याख्याः सम्भूय अष्टौ वर्तन्ते। अपि वा—छान्दोग्योपनिषदि ( ३.१८ खण्डे ) उक्ताः आकाश-ब्रह्मणः मनोब्रह्मणश्च आध्यात्मिका आधिदैविकाश्च चत्वारः पादाः सम्भूय अष्टौ उक्तपूर्वाः । **यमस्य** नियन्तुरीश्वरस्य मायाशबलब्रह्मणः अन्तर्यामिनः **षड्** समग्रैश्वर्य-धर्मयशः-श्रीः-ज्ञान-वैराग्य-लक्षणाः । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' इति वचनात् । केचित् वचनेऽस्मिन् धर्मस्थाने वीर्यं पठन्ति । अपि वा—"उत्पत्तिं च विनाशं च भूतानां गतिमागतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति" इति वचनानुसारेण उत्पत्ति-विनाश-प्राणिगमनागमन-विद्याऽविद्या-लक्षणषट्पदार्थविषयिणी ईश्वरीयप्रज्ञा, षड्विषयगतषट्संख्याया प्रज्ञायामारोपात् । वस्तुतः एकैव सर्वपदार्थविषयिका परमेश्वरस्य प्रज्ञा । **ऋषीणाम्** गतिशीलानां मरुतां 'ऋषी गतौ' (१२८८ तुदा०) । **सप्त** सप्तखण्डाः **सप्तधा** प्रत्येकं सप्तप्रकाराः । इन्द्रेण दितिमातुर्गर्भस्य पूर्वं सप्त खण्डाः कृताः । तेषामपि खण्डानां प्रत्येकं सप्तधा विभजनात् सप्तगुणिता सप्त एकोनपञ्चाशत्-सख्याकाः मरुतः सञ्जाताः । कथैषा श्रीमद्भागवते षष्ठे स्कन्धे निरूपिता ( भाग० ६.१८.६२ ) **अपः** कर्माणि **तान् मनुष्यान्** मानवान् कर्मकर्तॄन् **ओषधीः** वातपित्तकफ-लक्षणधातुवैषम्यजनितानां बहूनां रोगाणां प्रतीकारहेतुभूता अपि एतत्

सर्वमपि **पञ्च** पञ्चभूतानि **अनुसेचिरे**। अथवा—ओषधीभिः सहितान् उ अप्यर्थे, मनुष्यान् इत्यन्वयः। **अनुरत्र** सहार्थे। **सेचिरे** सिञ्चन्ति, समुत्पादितवन्त इत्यर्थः। 'षच् सेचने सेवने च' (१६३ भ्वा०)।

यद्वा—**इन्द्रस्य** ईश्वरस्य अष्टौ, **यमस्य** धर्मराजस्य जगन्नियामकस्य कालस्य वा षट्, **ऋषीणाम्** मन्त्रद्रष्टॄणाम् अस्माकं पूर्वजानां वसिष्ठादीनां **सप्त सप्तधा** सप्तोत्तरसप्तति-(७७)-संख्याका **ओषधीः**। यदर्थम् ओषधयस्तान् ओषधिसेवनेन निवर्त्य रोगान् मनुष्यान्। **ऊ** च **पञ्च अपः** शुतुद्रु-विपाट्-परुष्णी-चन्द्रभागा-वितस्ताख्यानां प्रख्यातानाम्। ऋग्वेदे (१०.७५.५) निरूपिते नदीदशकमध्ये पठिता शुतुद्री, परुष्णि (रावी), मरुद्वृधा (चन्द्रभागा), वितस्ता (झेलम) च इति चतस्रः पठिताः, एका विपाट् सम्भूय एताः प्रसिद्धनद्यः। तासां नदीनां **पञ्च अपः** जलानि **अनुसेचिरे** अनुसिञ्चन्ति स्म। अत एव पञ्चनदप्रदेशस्य पञ्चाप-(पंजाब)-संज्ञा संवृत्ता॥ २३॥

**केवलीन्द्राय दुदुहे हि गृष्टिर्वशं पीयूषं प्रथमं दुहाना।**
**अथातर्पयच्चतुरश्चतुर्धा देवान् मनुष्याँ३ असुरानुत ऋषीन्॥ २४॥**

**केवली। इन्द्राय। दुदुहे। हि। गृष्टिः। वशम्। पीयूषम्। प्रथमम्। दुहाना। अथ। अतर्पयत्। चतुरः। चतुःऽधा। देवान्। मनुष्यान्। असुरान्। उत। ऋषीन्॥ २४॥**

**केवली** एकाकिनी असहाया द्वितीयवर्जिता असाधारणी लोकोत्तरा **गृष्टिः** सकृत्प्रसूता विराड् गौः **वशं** कमनीयं सर्वजनाभिलाषास्पदं **पीयूषम्** अमृतं तत्तुल्यं पयः **दुहाना** दुग्धवती सती **इन्द्राय** स्वस्वामिने परमात्मने **हि** एवं **प्रथमं** सर्वस्मात् पूर्वं **दुदुहे** दुग्धं ददे। गोः गौणकर्मणः कर्तृत्वविवक्षया रूपम्। अथवा—दुहाना कृतदोहा दुह्यमाना सती दुदुहे दुग्धा। किं बहुना, सर्वस्मात् प्राणिवर्गात् पूर्वं विराड् गौः प्रथमप्रसूता स्वस्वामिनं परमात्मानम् अमृतोपमं सर्वस्पृहणीयं पयः पायितवतीत्यर्थः। सागर-मन्थनवेलायां चतुर्दश रत्नानि समुद्भूतानि। विभाजनसमये तन्मध्यपतिता या कामधेनूः सा शक्रेण लब्धा। तस्मात् सा प्रथमं

देवराजम् इन्द्रं स्वदुग्धं पीयूषकल्पं पायितवती इति श्रीमद्भागवते अष्टमस्कन्धे वर्णिता पौराणिकी कथाऽत्र अनुसन्धेया ।

अथ पश्चात् तदनन्तरं चतुर्धा चतुर्भिः प्रकारैः उपेतान् **चतुरः** चतुःसंख्यकान् **अतर्पयत्** तर्पितवती स्वपयःपायनेन तोषितवती । के ते चत्वारः ? तदाह—**देवान्** हविर्भुजः सुरान्, **मनुष्यान्** मानवान्, **असुरान्** देवविरोधिनो दैत्यान्, **उत** अपि च **ऋषीन्** वसिष्ठादीन् । एतदुक्तं भवति—सा विराड् धेनुः निजपयःपायनेन स्वस्वामिनं परमात्मानं देवराजं वा प्रसाद्य पश्चात् देवादीन् चतुर्विधान् प्रसादितवतीत्यर्थः ॥ २४ ॥

**को नु गौः क एकऋषिः किमु धाम का आशिषः ।**
**यक्षं पृथिव्यामेकवृदेकर्तुः कतमो नु सः ॥ २५ ॥**

**कः । नु । गौः । कः । एकऽऋषिः । किम् । ऊं इति । धाम । काः । आऽशिषः । यक्षम् । पृथिव्याम् । एकऽवृत् । एकऽऋतुः । कतमः । नु । सः ॥ २५ ॥**

'**नु**'शब्दः प्रश्नवाची । पृच्छामि **गौः** वृषभः **कः** ? **एकः** अद्वितीयः ऋषिः मन्त्रद्रष्टा **कः** ? **धाम** स्थानं **किम्** ? '**उ**' पादपूरकः । **आशिषः** आशंसाः आशीर्वादाः **काः** ? वचनभेदः 'श्रुतयः प्रमाणम्' इतिवत् विज्ञेयः । **पृथिव्यां** पृथिवीग्रहणं ब्रह्माण्डस्य उपलक्षणम् । अस्मिन् ब्रह्माण्डे सप्तलोकात्मके चतुर्दशभुवनात्मके वा **यक्षं** यजनीयं पूजनीयम् । पूजावचनात् 'यज्'धातोः औणादिकः सप्रत्ययः, षत्वे कत्वे च रूपम् । **एकवृत्** वर्तते सर्वत्र इति वृत्, 'वृतु वर्तने' क्विप्, एकश्च तद् वृत् इत्येकवृत् । 'एकं च सर्वत्र वर्तमानं व्यापकं एकम्, एकरसम्, अद्वितीयमित्यर्थः । 'एकं च तद् वृत्' इत्युक्ते यावद् वचनं तावत् सावधारणम्, यथा 'अब्भक्षोऽयं पयोव्रतोऽयम्' इत्युक्ते जलमेव भक्षयति, नान्यत्, पय एव पिबति, नान्यत् इति च गम्यते, तद्वत् । एकमेव वर्तते, नान्यत् इति गम्यते । तथा च एकपदेन स्वगतभेदस्य, 'एव'शब्देन अवधारणवाचिना सजातीयभेदस्य 'नान्यत्'शब्देन विजातीयभेदस्य च निरासात् सजातीय-विजातीय-स्वगतभेदशून्यम् 'एकमेवाद्वितीयमि'ति श्रुत्या ऐक्यावधारण-विजातीय-

प्रतिषेधैः प्रतिपाद्यम् भेदत्रयवर्जितम्, किम् इति शेषः। एकः ऋतुः ऋतुविशेषः यः सः कतमः कः नु पृच्छामि ॥ २५ ॥

एको गौरेक एकऋषिरेकं धामैकधाशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुर्नाति रिच्यते ॥ २६ ॥

एकः । गौः । एकः । एकऽऋषिः । एकम् । धाम । एकऽधा । आऽशिषः । यक्षम् । पृथिव्याम् । एकऽवृत् । एकऽऋतुः । न । अति । रिच्यते ॥ २६ ॥

**गौः** वृषभः **एकः** धर्माख्यः, 'वृषो हि भगवान् धर्म' इति स्मृतेः, श्रीमद्भागवते प्रथमस्कन्धे कलि-परीक्षित-संवादे धर्मस्य चतुष्पाद्-वृषभत्वेन वर्णनाच्च। **एक** एक **ऋषिः** ऋषिः सर्वदेवद्रष्टा एको ब्रह्मा 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वेता० ३. ६. १८) इति वचनात्। **धाम एकं** पुनरावृत्तिशन्यं ब्रह्मप्राप्ति-रूपम्। **आशिषः एकधा** एकप्रकाराः, 'शिष्य! स्वस्वरूपे अखण्ड-सच्चिदानन्दैकरसलक्षणे अवतिष्ठस्व' इत्येवंरूपाः गुरुणोक्ताः। **पृथिव्याम्** ब्रह्माण्डे **यक्षं** पूजनीयं **एकवृत्** सर्वत्र वर्तमानम् एकस् सदाख्यब्रह्मतत्त्वम्, 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' ( छान्दो० उ० ६.२ ) इति श्रुतेः। **ऋतुः** गतिशीलः एकः कालः। अलं बहुना, **नातिरिच्यते** एकस्मात् अतिरिक्तोऽधिकः कश्चिद् नास्तीत्यर्थः ॥ २६ ॥

---

अत्र पञ्चदशीकारः—

१. 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारण-द्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥'

(पञ्चभूत-विवेक २. २०-२१)

## दशमं सूक्तम् : विराट् (षट्पर्यायात्मकम्)

### प्रथमः पर्यायः

[१] (१–१३) ऋषिः—अथर्वाचार्यः । देवता:—विराट् (सर्वेषां पर्यायाणाम्), छन्दः—१ त्रिपदार्ची पङ्क्तिः; २–७ याजुषी जगती; ३,९ साम्न्यनुष्टुप्; ५ आर्च्यनुष्टुप्; ७,१३ विराड् गायत्री; ११ साम्नी बृहती ।

विराड् वा इदमग्रं आसीत्तस्यां जातायाः
सर्वमबिभेदियमेवेदं भविष्यतीति ॥ १ ॥

विऽराट् । वै । इदम् । अग्रे । आसीत् । तस्याः । जातायाः ।
सर्वम् । अबिभेत् । इयम् । एव । इदम् । भविष्यति । इति ॥ १ ॥

**वै** निश्चये । **इदम्** पुरोवर्ति **विराट्** विविधं राजते, 'राजृ दीप्तौ' (८२२ भ्वा० उभ०) इति विराट् । अव्यक्ताख्या प्रकृतिः । **अग्रे** सृष्टेः पूर्वम्, **आसीत्** तदा कश्चिदपि स्रष्टव्यः पदार्थो न बभूव । सैव केवला प्रकृतिः । उत्पत्तेः प्राक् मातुर्गर्भे शिशुरिव जगत् प्रकृतौ विलीनमासीत् । **तस्याः** प्रकृतेः **जातायाः** फलोन्मुखकर्मवशात् प्रादुर्भूतायाः विशालायाः व्यक्तावस्थायाः दर्शनेन **सर्वम्** प्रकृतौ तिरोहितं भावि-जन्मग्राही जीवजातम् **अबिभेत्** त्रस्तमभूत् । यथा अद्यत्वे अकस्मात् पुरोऽवस्थितं सहसा उपनतं विशालं पर्वताद्याकारं दर्शंदर्शं लोका बिभ्यति, तद्वत् । **इयमेव** एषा व्यक्ता विशाला बृहदाकृतिः प्रकृतिरेव **इदं** जगद्रूपं जगदाकारपरिणामं **भविष्यति** भावयिष्यते, प्राप्स्यति । 'भू प्राप्तौ' (१८४५ चुरा० आत्म०) । नह्यत्र आत्मनेपदमाशङ्कनीयम्, अनिच्-सन्नियोगेनैव तस्य शिष्टैरङ्गीकृतत्वात् । आह च सिद्धान्तकौमुद्यां भट्टोजीदीक्षितः—'अनिच्सन्नियोगेनैवात्मनेपदमित्येके भवति' इति । अपि वा—सत्तावचन एव भू-धातुः । तथा च इयं प्रकृतिः इदं जगत् जगदाकारेण परिणता **भविष्यति** स्यात् इति हेतोः । अयमभिसन्धिः—यथा ईप्सितमपि दुग्धं विषसम्पर्कात् भीतिकारणम् एवमीप्सितशोभनपदार्थसन्दोहरूपं भविष्यज्जगत् अशोभनक्रूरसर्पसिंहादिसम्पर्कात् भयमजीजनेदिति ॥ १ ॥

सोद॑क्रामत् सा गार्ह॑पत्ये॒ न्य॑क्रामत् ॥ २ ॥

गृ॒हमे॒धी गृ॒हप॑तिर्भवति॒ य ए॒वं वेद॑ ॥ ३ ॥

सा । उत् । अ॒क्रा॒म॒त् । सा । गार्ह॑ऽपत्ये । नि । अ॒क्रा॒म॒त् ॥ २ ॥

गृ॒ह॒ऽमे॒धी । गृ॒ह॒ऽप॑तिः । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥ ३ ॥

**सा** विराट्, व्यक्तावस्थामापन्ना प्रकृतिः **उत्** ऊर्ध्वं उपरि **अक्रामत्** चरणन्यासं कृतवती, उदतिष्ठत्, समुन्नता, प्रगतिशालिनी बभूव। पश्चात् **सा** विराट् **गार्हपत्ये** 'गृहपतिना संयुक्ते ञ्यः' (पा० ४.४.९०) इति ञ्यप्रत्ययः। गृहपतिसंयुक्ते कर्मणि गहस्थाश्रमे, गार्हपत्ये अग्नौ वा। **न्यक्रामत्** नि निश्चयेन, अक्रामत् प्रविष्टा, तं व्याप्नुवती। **यः** पुरुषः **एवम्** ईदृशं रहस्यं **वेद** जानाति सः **गृहमेधी** गृहस्थः **गृहपतिः** गृहोपलक्षितपत्नीपुत्रादेः स्वामी भवति। 'गृह'शब्दपूर्वात् 'मेधृ संगमे च', चात् 'मेधा-हिंसनयोः' (८७० भ्वा० उभ०) इत्यस्मात् धातोरणिनि गृहं तदुपलक्षितं गृहसम्बद्धं कार्यजातं मेधति जानातीति गृहमेधी गृहस्थः ॥ २-३ ॥

सोद॑क्रामत् साह॑व॒नीये॒ न्य॑क्रामत् ॥ ४ ॥

यन्त्य॑स्य दे॒वा दे॒वहू॑तिं प्रि॒यो दे॒वानां॑ भवति य ए॒वं वेद॑ ॥ ५ ॥

सा । उत् । अ॒क्रा॒म॒त् । सा । आ॒ऽह॒व॒नीये॑ । नि । अ॒क्रा॒म॒त् । यन्ति॑ । अ॒स्य । दे॒वाः । दे॒वऽहू॑तिम् । प्रि॒यः । दे॒वाना॑म् । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥ ४-५ ॥

**सा** विराट् **उत् अक्रामत्** व्याख्यातम्। **सा** उत्क्रान्ता विराट् **आहवनीये** अग्नौ तत्सम्बद्धे दर्शपौर्णमासादौ **न्यक्रामत्** व्याख्यातम्। **यः** पुरुषः **एवम्** ईदृशं **वेद** प्रतिपद्यते, **अस्य** पुरुषस्य **देवहूतिम्** देवानामाह्वानम् आकर्ण्य **देवाः** इन्द्रादयः, यज्ञशालां प्रति **यन्ति** गच्छन्ति। अस्माकं भक्तो अस्मान् प्रीतिपुरस्सरं समाह्वयति, अतो अस्माभिस्तत्र गन्तव्यमित्यभिप्रायेण। न केवलमाह्वानं श्रुत्वा गमनम्, किं तर्हि ? सर्वेषां **देवानां** सः **प्रियः** प्रीतिभाजनं भवति ॥ ४-५ ॥

सोदक्रामत् सा दक्षिणाग्नौ न्यक्रामत् ॥ ६ ॥
यज्ञर्तो दक्षिणीयो वासतेयो भवति य एवं वेद ॥ ७ ॥

सा । उत् । अक्रामत् । सा । दक्षिणऽअग्नौ । नि । अक्रामत् । यज्ञऽऋतः । दक्षिणीयः । वासतेयः । भवति । यः । एवम् । वेद ॥ ६-७ ॥

**सा** विराट् **उदक्रामत्** उत्क्रान्ता अभूत्, समुन्नतिं लेभे, प्रगतिमाससाद । **सा दक्षिणाग्नौ न्यक्रामत** आहिताग्नेस्तृतीयं दक्षिणाख्यम् अग्निं व्याप्नुवती । **यः** पुरुषः **एवम्** इत्थं शास्त्रहृदयं **वेद** वेत्ति, बुद्ध्यते स **यज्ञर्तः** यज्ञे ऋतः सत्यः सत्यभाषणनिष्ठः, 'नानृतं वदेत्' इति यज्ञे मिथ्याभाषणादेः प्रतिषेधात् यज्ञीयनियमपालकः । अपि वा–यज्ञे गतः उपस्थितः 'ऋ गतौ' (१०९८ जुहो० पर०) क्तः, तत्रत्यैः यजमानादिभिः **दक्षिणीयः** दक्षिणादानार्हः । तत्रत्या ऋत्विजो यजमानश्च यज्ञे समागतं तं दक्षिणादान-प्रियभाषणादिना सम्मानयन्ति । **वासतेयः** वसतौ तदुपलक्षिते निवास-भोजनादौ अतिथिसत्कारे साधु, श्रेष्ठः, अतिथीन् सत्कर्तुं समर्थः **भवति** जायते । वसति-शब्दात् साध्वर्थे 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (पा० ४.४.१०४) इत्यनेन ढञ् । अतिथिसत्कारे सम्यक् कुशलो भवतीत्यर्थः ॥ ६-७ ॥

सोदक्रामत् सा सभायां न्यक्रामत् ॥ ८ ॥
यन्त्यस्य सभां सभ्यो भवति य एवं वेद ॥ ९ ॥

सा । उत् । अक्रामत् । सा । सभायाम् । नि । अक्रामत् । यन्ति । अस्य । सभाम् । सभ्यः । भवति । यः । एवम् । वेद ॥ ८-९ ॥

**सा** विराट् **उदक्रामत्** अग्रतो गता, बभूव । **सा सभायाम्** विद्वत्समाजे, राष्ट्रसभायां लोकसभायां वा **न्यक्रामत्** प्रविष्टा । **यः** पुमान् **एवम्** पूर्वोक्तप्रकारेण **वेद अस्य सभां** समाजं काञ्चित् संग्रथितसंस्थां **यन्ति** सोत्साहं गच्छन्ति, अयत्नतः सदस्याः भवन्ति । किञ्च, **सभ्यः** सभायां साधुः, समाजे लब्धकीर्तिः भाषणादिकुशलश्च **भवति**, सम्पद्यते ॥ ८-९ ॥

सोर्दक्रामत् सा समितौ न्यक्रामत् ॥ १० ॥
यन्त्यस्य समितिं सामित्यो भवति य एवं वेदं ॥ ११ ॥

सा । उत् । अक्रामत् । सा । सम्ऽइतौ । नि । अक्रामत् । यन्ति । अस्य । सम्ऽइतिम् । साम्ऽइत्यः । भवति । यः । एवम् । वेदं ॥ १०-११ ॥

लब्धप्रकृतिः **सा** विराट् **समितौ** संघतौ, सङ्गतौ कार्यकारिण्यां संस्थायां वाग्संग्रामे वा **न्यक्रामत्** परिवर्तिता । **यः** यो नरः **एवम्** पूर्वोक्तं **वेद अस्य समितिम्** लोकाः **यन्ति** गच्छन्ति, तत्समितिसदस्याः भवन्ति । स्वयञ्च **सामित्यः** समितौ साधुः मन्त्रणा-परामर्शदानादि-कुशलो भवति ॥ १०-११ ॥

सोर्दक्रामत् सामन्त्रणे न्यक्रामत् ॥ १२ ॥
यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेदं ॥१३॥ (७)

सा । उत् । अक्रामत् । सा । आऽमन्त्रणे । नि । अक्रामत् । यन्ति । अस्य । आऽमन्त्रणम् । आऽमन्त्रणीयः । भवति । यः । एवम् । वेदं ॥ १२-१३ ॥

**सा** विराट् **उदक्रामत्** उपरि आरूढाऽभूत् । **सा** विराट् **आमन्त्रणे** प्रेमपुरस्सरमाह्वाने स्नेहसिक्तहृदयनिर्गतवचसि अभिनन्दने मन्त्रिमण्डले वा आह्वानपुरस्सरं शिक्षा-रक्षा-स्वास्थ्य-गृहमन्त्र्यादिपदविशेषे नियुक्तानां राष्ट्राभक्तानां विशेषज्ञानां परिषदि **न्यक्रामत्** परिवर्तिता । **यः** पुरुषः **एवम् वेद** अवगच्छति, अस्य पुरुषस्य **आमन्त्रणम्** सप्तम्यर्थे द्वितीया, आमन्त्रणे, प्रेमपाशबद्धाः जनाः **यन्ति** गच्छन्ति, तत्सन्निकटवर्तिनो भवन्ति । न केवलं एतावदेव, किं तर्हि ? स्वयं सः **आमन्त्रणीयः** 'मित्र, मम गृहे समागन्तव्यम्, अहमिच्छामि त्वत्सन्निधौ समुपविश्य वार्तालापं कर्तुम्' इत्यादिवचोभिः प्रेमपुरस्सरमाह्वातव्यो निमन्त्रणीयश्च भवति ।

अस्य सूक्तस्य अयं प्रथमः पर्यायः राष्ट्रियोपदेशपरतया सातवलेकर-महोदयैर्योजितः । विस्तरस्तु अथर्ववेदीये तदीये हिन्दीभाष्ये द्रष्टव्यः ।

विराड् वाग्' (अथर्व० ९.१०.२४) इति मन्त्रवर्णेन 'वाग् वै विराट्' (शत० ३.५.१.३४) इति श्रुत्या च विराजो वागात्मकतामङ्गीकृत्य न केवलं प्रथमं पर्यायम्, किं तर्हि इदं सर्वं सूक्तं वाक्परतया व्याख्यातवन्तः शास्त्रार्थमहारथिनः सनातनधर्ममार्तण्डाः श्रीमाधवाचार्याः ॥ १२-१३ ॥

## द्वितीयः पर्यायः

[२] (१–१०) छन्दः—१ त्रिपदा साम्नी अनुष्टुप्, २ उष्णिग्गर्भा चतुष्पदोपरिष्टाद्विराड् बृहती, ३ एकपदा याजुषी गायत्री, ४ एकपदा साम्नी पङ्क्तिः, ५ विराड् गायत्री, ६ आर्च्यनुष्टुप्, ७ साम्नी पङ्क्तिः, ८ आसुरी गायत्री, ९ साम्नी अनुष्टुप् १० साम्नी बृहती ।

**सोदक्रामत् साऽन्तरिक्षे चतुर्धा विक्रान्ताऽतिष्ठत् ॥ १ ॥** (८)

**सा । उत् । अक्रामत् । सा । अन्तरिक्षे । चतुःऽधा ।**
**विऽक्रान्ता । अतिष्ठत् ॥ १ ॥**

सा विराट् उत् अक्रामत् उपरि उदतिष्ठत् । सा अन्तरिक्षे द्यावापृथिवीमध्यवर्तिप्रदेशे चतुर्धा चतुर्भिः रूपैः वक्ष्यमाणैर्वा ऊर्जास्वधासूनृतेरावतीनामकैः विक्रान्ता विस्तृता विशेषकृतपदन्यासा समस्तं गगनमण्डलं परिवेष्टयन्ति अतिष्ठत् स्थितवती ॥ १ ॥

**तां देवमनुष्या अब्रुवन्नियमेव तद् वेद यदुभय उपजीवेमेमामुप ह्वयामहा इति ॥ २ ॥** (९)

**तामुपाह्वयन्त ॥ ३ ॥** (१०)

**ताम् । देवऽमनुष्याः । अब्रुवन् । इयम् । एव । तत् । वेद ।**
**यत् । उभये । उपऽजीवेम । इमाम् । उप । ह्वयामहे । इति ।**
**ताम् । उप । अह्वयन्त ॥ २-३ ॥**

ताम् चतुर्धा विक्रान्ताम् विराजं वाचं देवमनुष्या उपगत्य अब्रुवन्

कथितवन्तः । **इयम्** विक्रान्ता विराट् **एव तत्** ब्रह्मतत्त्वं **वेद यत्** तत्त्वं **उभये** वयं देवाश्च मनुष्याश्च **उपजीवेम** आश्रित्य जीवनं धारयेम । **इमाम्** पुरोवर्तिनीं विराजम् 'आगम्यताम्' इति **उपह्वयामहै** आमन्त्रयामहै, सादरमाह्वानं करवावहै । अथ मिथः परामृश्य, ते **ताम् उपाह्वयन्त** उपाहूतवन्तः सत्कारपुरस्सरं सम्बोधितवन्तः ।। २-३ ।।

**ऊर्ज एहि स्वध एहि सूनृत एहीरावत्येहीति ॥ ४ ॥** (१ १)

**ऊर्जे । आ । इहि । स्वधे । आ । इहि । सूनृते । आ । इहि । इराऽवति । आ । इहि । इति ॥ ४ ॥**

आह्वानप्रकारमेव दर्शयति—**ऊर्जे** तेजस्विनी ! बलवती ! 'ऊर्ज बलप्राणनयोः' ततः क्विप् ऊर्क्, ततः अर्शाद्यचि टाप् ऊर्जा, तत्सम्बुद्धौ ऊर्जे । **एहि** आगच्छ, अस्मान् स्वागमनेन कृतार्थी कुरु । **स्वधा** स्वं धनं तद्धारिका श्राद्धान्नरूपेण पितृगणतर्पिका, तत्सम्बुद्धौ **स्वधे एहि** व्याख्यातम् । **सूनृते** ! प्रियसत्यवाग्वादिनि सत्यमधुरभाषणेन अतिथिगणप्रसादिके ! **एहि** । **इरावति** 'इरा अन्नम्' (निघ० २.७.१२) तद्वती अन्नवति अन्नपूर्णे देवि ! **एहि** अस्मान् कृतार्थीकर्तुमत्र स्वकीयं पादं धारय, निजागमनेनास्माकं पुण्यशालितां प्रकटीकुरु, **इति** इत्थमाहूतवन्तः । तदुक्तं शतपथे–'वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः । तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारश्च वषट्कारश्च, हन्तकारं मनुष्याः स्वधाकारं पितरः ।' (शत० १४.८.९.१) ।। ४ ।।

**तस्या इन्द्रो वत्स आसीद् गायत्र्य भिधान्यभ्रमूधः ॥ ५ ॥** (१६)

**तस्याः । इन्द्रः । वत्सः । आसीत् । गायत्री । अभिऽधानी । अभ्रम् । ऊधः ॥ ५ ॥**

**तस्याः** रूपचतुष्टयधारिण्याः विराजो देव-मनुष्यैः समाहूतायाः । **इन्द्रः** शक्रः **वत्सः आसीत् गायत्री** वेदमाता विश्वामित्रदृष्टा 'तत् सवितुर्वरेण्यम्' इत्याद्यक्षर-समाम्नायरूपा गायत्री । **अभिधानी** बन्धनरज्जुः, **अभ्रम्** मेघ एव **ऊधः** पयोधरमण्डलम् ।। ५ ।।

**बृहच्चं रथन्तरं च द्वौ स्तनावास्तां यज्ञायज्ञियं च वामदेव्यं च द्वौ ॥ ६ ॥** (१३)

**बृहत् । च । रथम्ऽतरम् । च । द्वौ । स्तनौ । आस्ताम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । द्वौ ॥ ६ ॥**

**बृहत्** 'त्वामिद्धि हवामहे' (साम० उत्त० ३.१२.१) इत्यस्यां ऋचि गीयमानं साम **च** पुनः **रथन्तरम्** 'अभि त्वा शूर नोनुमः' (साम० उत्त० १.११.१) इत्यस्याम् ऋचि गीयमानं साम **द्वौ स्तनौ** उभौ वाग्धेनोः पयोधरौ **आस्ताम्** बभूवतुः । अपरौ स्तनौ आह– **यज्ञायज्ञियम्** 'यज्ञायज्ञा वो अग्नये' (सा० उ० १.२०.१) इत्यस्याम् ऋचि गीयमानं **च** पुनः **वामदेव्यम्** 'कया नश्चित्र' (सा० उ० १.१२.१) इत्यस्यामृचि गीयमानं सामद्वयम् । **द्वौ** 'स्तनौ आस्ताम्' इत्यनुषङ्गः । तथा च वागात्मिकाया विराड्-धेनोः बृहदादि-सामचतुष्टयं पयोधरचतुष्टयं मन्तव्यमिति हृदयम् ॥ ६ ॥

**ओषधीरेव रथन्तरेण देवा अदुह्रन् व्यचो बृहता ॥७॥** (१४)

**ओषधीः । एव । रथम्ऽतरेण । देवाः अदुह्रन् । व्यचः । बृहता ॥ ७ ॥**

**देवाः** इन्द्रादयः **ओषधीः** सोमलताद्योषधिः **एव रथन्तरेण** रथन्तर-साममहिम्ना **अदुह्रन्** दुग्धवन्तः । तथा **बृहता** साम्ना, तन्महिम्ना **व्यचः** विस्तीर्णां गतिं 'देवा अदुह्रन्' इति अनुषङ्गः ॥ ७ ॥

**अपो वामदेव्येन यज्ञं यज्ञायज्ञियेन ॥ ८ ॥** (१५)

**अपः । वामऽदेव्येन । यज्ञम् । यज्ञायज्ञियेन ॥ ८ ॥**

**वामदेव्येन** तदाख्यसाममहिम्ना **अपः** जलानि देवाः दुग्धवन्तः । **यज्ञायज्ञियेन** तदाख्यसामप्रभावेण **यज्ञम्** दर्शपौर्णमासादिकम् दुग्धवन्तः ॥ ८ ॥

**ओषधीरेवास्मै रथन्तरं दुहे व्यचो बृहत ॥ ९ ॥** (१६)

**ओषधीः । एव । अस्मै । रथम्ऽतरम् । दुहे । व्यचः । बृहत ॥ ९ ॥**

उक्तमर्थमेव उपसंहरति—**ओषधीरेवास्मै** इति। यः पुमान् एवम् उक्तरीत्या वेद बुद्ध्यते, **अस्मै** पुरुषाय वेदित्रे **रथन्तरम्** साम **ओषधीः एव** निश्चयेन **दुहे** दुग्धे; **व्यचः** विस्तीर्णां गतिं **बृहत्** साम, अस्मै दुहे इत्यनुषङ्गः ॥ ९ ॥

अपो वामदेव्यं यज्ञं यज्ञायज्ञियं य एवं वेद ॥ १० ॥ (१७)

अपः । वामऽदेव्यम् । यज्ञम् । यज्ञायज्ञियम् । यः ।
एवम् । वेद ॥ १० ॥

**यः एवम्** इत्थं **वेद** अस्मै पुरुषाय **वामदेव्यम्** साम **अपः** जलानि च **यज्ञायज्ञियम्** साम **यज्ञम्**, दुहे इत्यनुषङ्गः ॥ १० ॥

## तृतीयः पर्यायः

[३](१-८) छन्दः—१ चतुष्पदा विराडनुष्टुप्, २ आर्ची त्रिष्टुप्, ३,५,७ चतुष्पदा प्राजापत्या पङ्क्तिः, ४,६,८ आर्ची बृहती।

सोदक्रामत् सा वनस्पतीनागच्छत् तां
वनस्पतयोऽघ्नत सा संवत्सरे समभवत् ॥ १ ॥
तस्माद् वनस्पतीनां संवत्सरे वृक्णमपि रोहति ।
वृश्चतेऽस्याप्रियो भ्रातृव्यो य एवं वेद ॥ २ ॥ (१८)

सा । उत् । अक्रामत् । सा । वनस्पतीन् । आ । अगच्छत् । ताम् । वनस्पतयः । अघ्नत । सा । सम्ऽवत्सरे । सम् । अभवत् । तस्मात् । वनस्पतीनाम् । सम्ऽवत्सरे । वृक्णम् । अपि । रोहति । वृश्चते । अस्य । अप्रियः । भ्रातृव्यः । यः । एवम् वेद ॥ १-२ ॥

विराजः वनस्पति-पितृ-देव-मनुष्याणां चतुर्णां समीपे गमनं तदुत्तर-क्रियाकलापञ्चाह—**सा** विराट् **उत्क्रामत्** अधिकप्रगतिवती बभूव। ततः **सा वनस्पतीन्** वनस्पतीनां समीपे **अगच्छत्** आगतवती । **ताम्** विराजं

**वनस्पतयः** वृक्षादयः **अघ्नत** अहिंसन्, नाशितवन्तः। हिंसावचनोऽत्र हन्ति। **सा संवत्सरे** द्वादशमासपरिमिते काले व्यतीते **समभवत्** पुनरुद्भूता यथापूर्वं बभूव। **तस्मात्** कारणात् वनस्पतीनां **वृक्णमपि** खण्डितमपि **संवत्सरे रोहति** परिपूर्यते, यथापूर्वम्। **अप्रियः** द्वेष्यः **भ्रातृव्यः** शत्रुः **वृश्चते** छिद्यते, म्रियते **अस्य पुरुषस्य, यः** पुरुषः **एवम्** इत्थं **वेद** ॥ १-२ ॥

सोदक्रामत् सा पितॄनागच्छत् तां पितरोऽघ्नत
सा मासि समभवत् ॥ ३ ॥
तस्मात् पितृभ्यो मास्युपमास्यं ददति प्र पितृयाणं
पन्थां जानाति य एवं वेद ॥ ४ ॥ (१९)

सा। उत्। अक्रामत्। सा। पितॄन्। आ। अगच्छत्। ताम्। पितरः। अघ्नत। सा। मासि। सम्। अभवत्। तस्मात्। पितृभ्यः। मासि। उपऽमास्यम्। ददति। प्र। पितृऽयानम्। पन्थाम्। जानाति। यः। एवम्। वेद ॥ ३-४ ॥

**पितॄन्** मृतपूर्वजपुरुषान्, तद्देवान् वा। **तां** विराजं **पितरः अघ्नत** प्राप्तवन्तः। गतिवचनोऽत्र हन्ति, गतिश्चात्र प्राप्तिः। **सा मासि** मासपरिमिते काले व्यतीते **समभवत्** यथापूर्वमुद्भूता। **तस्मात्** उक्तहेतोः **पितृभ्यः मासि** गते अमावस्याम् **उपमास्यम्** मासपर्यन्तोपभोग्यं पायसादिपदार्थजातं **ददति** प्रयच्छन्ति पितृभक्ताः पुत्रादयो लोकाः। **यः** पुरुषः **एवम्** ईदृशं पूर्वोक्तं तत्त्वं **वेद** सः **पितृयानं** तदाख्यं मार्गं **प्रजानाति** प्रकर्षेण जानाति, अवगच्छति। अवगतेन पितृयानमार्गेण गत्वा पितृलोके स्वर्गे वा तिष्ठति। पितृलोकप्राप्तेः स्वर्गप्राप्तेश्च मार्गस्य च ऐक्यात् ॥ ३-४ ॥

सोदक्रामत् सा देवानागच्छत् तां देवा अघ्नत
सार्धमासे समभवत् ॥ ५ ॥
तस्माद् देवेभ्योऽर्धमासे वषट् कुर्वन्ति प्र देवयानं पन्थां
जानाति य एवं वेद ॥ ६ ॥ (२०)

सा । उत् । अक्रामत् । सा । देवान् । आ । अगच्छत् । ताम् । देवाः । अघ्नत । सा । अर्धऽमासे । सम् । अभवत् । तस्मात् । देवेभ्यः । अर्धऽमासे । वषट् । कुर्वन्ति । प्र । देवऽयानम् । पन्थाम् । जानाति । यः । एवम् । वेद ॥ ५-६ ॥

ताम् विराजं देवाः अघ्नत प्राप्तवन्तः । सा अर्धमासे पक्षे शुक्ले कृष्णे वा गते समभवत् पुनरुत्पन्ना यथापूर्वम् । तस्मात् पूर्वोक्त-कारणात् देवेभ्यः देवार्थम् अर्धमासे अमावास्यायां पौर्णमास्यां च वषट् कुर्वन्ति दर्शेष्टिं पौर्णमासेष्टिं कुर्वन्ति, तेभ्यस्तत्र हवींषि प्रयच्छन्ति । यः एवं वेद स देवयानम् पन्थाम् देवयानमार्गं जानाति प्रबुद्धचते ॥ ५-६ ॥

सोदक्रामत् सा मनुष्या३नागच्छत् तां मनुष्या अघ्नत
सा सद्यः समभवत् ॥ ७ ॥

तस्मान्मनुष्येभ्य उभयद्युरुप हरन्त्युपास्य गृहे हरन्ति
य एवं वेद ॥ ८ ॥ (२१)

सा । उत् । अक्रामत् । सा । मनुष्यान् । आ । अगच्छत् । ताम् । मनुष्याः । अघ्नत । सा । सद्यः । सम् । अभवत् । तस्मात् । मनुष्येभ्य । उभयऽद्युः । उप । हरन्ति । उप । अस्य । गृहे । हरन्ति । यः । एवम् । वेद ॥ ७-८ ॥

सा विराट् मनुष्यान् अगच्छत् मनुष्याणाम् उपकण्ठम् आगच्छत्, समुपस्थिता बभूव । ताम् विराजं मनुष्याः अघ्नत ताडितवन्तः । ताडनं हि हिंसा । सा सद्यः शीघ्रम् समभवत् यथापूर्वं पुनः समुत्पन्ना । तस्मात् उक्तनिमित्तात् मनुष्येभ्यः मनुष्यार्थं उभयद्युः अस्मिन् समये प्रातः सायं च उपहरन्ति उपनयन्ति, उपस्थापयन्ति अन्नादिकं वस्तुजातं तद्धितैषिणः । अनुभूतमाह–अस्य गृहे उपहरन्ति, उपहाररूपेण नाना-वस्तुजातं लोकाः प्रेषयन्ति । नैतददृष्टचरमिति रहस्यम् ॥ ७-८ ॥

## चतुर्थः पर्यायः

[४-५] (१–१६,१–१६) छन्दांसि—२२,२३,२६,२९ (प्र०) साम्नी जगती; (द्वि०); साम्नी बृहती; २२,२६ (तृ०) २२-२४,२८,२९ साम्नी उष्णिक्; २२, २३,२६,२९ (च०) आर्च्यनुष्टुप्; २३ (तृ०) आर्ची गायत्री; २४,२५,२८ (प्र०) चतुष्पदा उष्णिक्; २४ (तृ०) प्राजापत्यानुष्टुप्; २४,२५,२७, आर्ची त्रिष्टुप्; २५-२६ (द्वि०) साम्नी उष्णिक्; २५,२७-२८ (तृ०) विराड् गायत्री; २७ (प्र०) चतुष्पदा प्राजापत्या जगती; २७ (द्वि०) साम्नी त्रिष्टुप्; २८ (च०) त्रिपदा ब्राह्मी भूरिग्गायत्री; २९ (तृ०) साम्नी अनुष्टुप्।

सोद॑क्रामत् सासु॑रा॒नाग॑च्छत् तामसु॑रा
उपा॑ह्वयन्त॒ माय॒ एहीति॑ ॥ १ ॥

तस्या॑ वि॒रोच॑नः प्राह्रा॑दिर्व॒त्स आसी॑दयस्पा॒त्रं पात्र॑म् ॥ २ ॥

तां द्विमू॑र्धा॒ऽत्व्यो॑ऽधो॒क् तां मा॒याम॒वाधो॑क् ॥ ३ ॥

तां मा॒यामसु॑रा॒ उप॑ जीवन्त्युपजीव॒नीयो॑ भवा॒ति य
ए॒वं वेद॑ ॥ ४ ॥ (२२)

सा । उत् । अ॒क्रा॒म॒त् । सा । असु॑रान् । आ । अ॒ग॒च्छ॒त् ।
ताम् । असु॑राः । उप॑ । अ॒ह्व॒य॒न्त॒ । माये॑ । आ । इ॒हि॒ । इति॑ ।
तस्याः॑ । वि॒ऽरोच॑नः । प्राह्रा॑दिः । व॒त्सः । आसी॑त् ।
अ॒यः॒ऽपा॒त्रम् । पात्र॑म् । ताम् । द्वि॒ऽमू॑र्धा । अ॒त्व्यः॑ ।
अ॒धो॒क् । ताम् । मा॒याम् । ए॒व । अ॒धो॒क् । ताम् ।
मा॒याम् । असु॑राः । उप॑ । जी॒व॒न्ति॒ । उ॒प॒ऽजी॒व॒नीयः॑ ।
भ॒व॒ति॒ । यः । ए॒वं । वेद॑ ॥ १–४ ॥

विराजोपगन्तव्या अष्टौ—१. असुराः, २. पितरः, ३. मनुष्याः, ४. ऋषयः, ५. देवाः, ६. गन्धर्वाप्सरसः, ७. इतरजनाः, ८. सर्पाश्चेति।

तेषु दोग्धृ-वत्स-दोहनपात्रा-ऽऽह्वानानां दुग्ध-जीवनसाधनानि प्रत्येकं षड् वक्तव्यानि । तत्र प्रथमचतुष्के दोग्ध्रादि वक्तुमुपक्रमते—उत्क्रान्ता विराट् **असुरान्** असुराणां समीपम् अगच्छत् आजगाम ; **ताम्** विराजम् **असुराः उपाह्वयन्त** आमन्त्रयन्, आहूतवन्तः । **माये** ! सम्बुद्धौ, माया इति आह्वाननाम **एहि** आगच्छ अस्माकं पार्श्वे समुपविश इति सत्कारपुरस्सरमूचुः । **तस्याः** असुरानुपगतायाः विराजः **प्राह्लादिः** प्रह्लादपुत्रः **विरोचनः** विरोचननामकः **वत्सः आसीत्** वत्सो बभूव । **पात्रं** दोहनपात्रम् **अयस्पात्रम्** लोहभाजनम् । **ताम्** विराजं **आर्त्व्यः** ऋतुपुत्रः **द्विमूर्धा** तन्नामकः **अधोक्** दुग्धवान् । दोग्धा द्विमूर्धा, वत्सो विरोचनः, दोहनपात्रम् अयस्पात्रमिति निष्कर्षः । **ताम्** विराजं **मायामेव** मायात्मकं दुग्धमेव **अधोक्** दुग्धवान् । **असुराः ताम् मायाम्** द्विमूर्ध्ना दुग्धाम् **उपजीवन्ति** आश्रित्य जीवन्ति । **यः एवं वेद सः सर्वैः उपजीवनीयः** आश्रयणीयः **भवति** जायते । आह्वाननाम, दुग्धम्, जीवनसाधनञ्च त्रितयं मायैकनामधेयमसुराणामिति रहस्यम् ।। १–४ ।।

**सादक्रामत् सा पितॄनागच्छत् तां पितर उपाह्वयन्त**
**स्वध एहीति ।। ५ ।।**
**तस्या यमो राजा वत्स आसीद् रजतपात्रं पात्रम् ।। ६ ।।**
**तामन्तको मार्त्यवोऽधोक् तां स्वधामेवाधोक् ।। ७ ।।**
**तां स्वधां पितर उप जीवन्त्युपजीवनीयो भवति**
**य एवं वेद ।। ८ ।।** (२३)

**सा । उत् । अक्रामत् । सा । पितॄन् । आ । अगच्छत् । ताम् । पितरः । उप । अह्वयन्त । स्वधे । आ । इहि । इति । तस्याः । यमः । राजा । वत्सः । आसीत् । रजतऽपात्रम् । पात्रम् । ताम् । अन्तकः । मार्त्यवः । अधोक् । ताम् । स्वधाम् । एव । अधोक् । ताम् । स्वधाम् । पितरः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ।। ५-८ ।।**

**पितॄन्** उपगतां तां विराजं **पितरः स्वधे एहि** आगच्छ **इति** इत्थमाहूतवन्तः इत्याकूतम्। **तस्याः** पितॄनुपगतायाः विराजः पितॄणां **राजा यमः वत्सः आसीत्** विद्यते स्म। **पात्रम्** दोहनपात्रम् **रजतपात्रम्**। **ताम्** विराजं **मार्त्यवः** मृत्योरधिष्ठाता **अन्तकः** यमो **वैवस्वतः** दोग्धा **अधोक्** दुग्धवान्। मृत्योरधिष्ठाता यमो दोग्धा, दोहनपात्रम् रजतपात्रम्, यमो वत्सः पितॄणां राजा अर्यमा 'पितॄणामर्यमा चास्मि' इति गीतावचनात् (१०.२९) इति हृदयम्। **ताम्** विराजं **स्वधाम्** स्वधात्मकं दुग्धम **अधोक्** दुग्धवान्। **ताम्** दुग्धमयीं स्वधां **पितर उपजीवन्ति** आश्रयन्ति। यः पुरुषः **एवं वेद** सः **उपजीवनीयः** आश्रयणीयः **भवति** जायते लोकानाम्। इहापि आह्वाननाम, दुग्धम्, जीवनसाधनञ्च त्रितयं स्वधैव। तत्त्रितयं स्वधानाम्ना निर्दिष्टमिति तात्पर्यम्॥ ५-८॥

**सोद॑क्रामत् सा म॑नु॒ष्या॒३॑नाग॑च्छ॒त् तां म॑नु॒ष्या॒३॑ उपा॑ह्व॒यन्तेरा॑व॒त्येही॒ति॑ ॥ ९ ॥**

**तस्या॑ मनु॑र्वै॑वस्व॒तो॑ व॒त्स आसी॑त् पृ॒थि॒वी पात्र॑म् ॥ १० ॥**

**तां पृथी॑ वै॒न्यो॑ऽधो॒क्तां कृ॒षिं च॑ स॒स्यं चा॑धोक् ॥ ११ ॥**

**ते कृ॒षिं च॑ स॒स्यं च॑ मनु॒ष्या॒३॑ उप॑ जीवन्ति। कृ॒ष्टरा॑धिरुपजीव॒नीयो भवति॒ य ए॒वं वेद॑ ॥ १२ ॥** (२४)

**सा। उत्। अ॒क्रा॒मत्। सा। म॒नु॒ष्या॑न्। आ। अ॒ग॒च्छ॒त्। ताम्। म॒नु॒ष्याः᳚। उप॑। अ॒ह्व॒य॒न्त। इरा॑ऽवति। आ। इ॒हि॒। इति॑। तस्याः॑। मनुः॑। वै॒व॒स्व॒तः। व॒त्सः। आसी॑त्। पृ॒थि॒वी। पात्र॑म्। ताम्। पृथी॑। वै॒न्यः᳚। अ॒धो॒क्। ताम्। कृ॒षिम्। च॒। स॒स्यम्। च॒। अ॒धो॒क्। ते। कृ॒षिम्। च॒। स॒स्यम्। च॒। म॒नु॒ष्याः᳚। उप॑। जी॒व॒न्ति॒। कृ॒ष्टऽरा॑धिः। उ॒प॒ऽजी॒व॒नीयः॑। भ॒व॒ति॒। यः। ए॒वम्। वेद॑ ॥ ९-१२ ॥**

**ताम्** मनुष्याणां समीपे समुपस्थितां विराजं **मनुष्याः** मानवाः **उपाह्वयन्त** सादरमुपहूतवन्तः। कथम्? **इरावति**! इरा अन्नं तद्वतो

तद्युक्ते, अन्नपूर्णे ! **एहि** आयाहि **इति** । इत्थं **तस्याः** विराजः **वैवस्वतः** सूर्यतनयो **मनुः वत्सः** शिशुः **आसीत्** अभवत् । **पात्रम्** दोहनपात्रं **पृथिवी** वसुधा । **ताम्** विराजं **वैन्यः** वेनवंशजः **पृथी** पृथु, 'प्रथ प्रख्याने' (१५-५४ चुरा० पर० )घञर्थे कः, सम्प्रसारणञ्च, पृथा, ततो मत्वर्थीय इनिः । **अधोक्** दुग्धवान् । **तां कृषिम्** कर्षणं **सस्यम्** गोधूम-चणकादि-धान्यं दुग्धस्थानीयम् **अधोक्** दुग्धवान् । **मनुष्याः** मानवाः **कृषिम्** भूमि-कर्षणं **सस्यम्** धान्यं **च उपजीवन्ति** आश्रयन्ति, जीवनं निर्वहन्ति । **यः एवम्** इत्थं रहस्यं **वेद** सः **कृष्टराधिः** कृष्टिः कर्षणम्, तत्र राधिः 'राध संसिद्धौ' (१२६३ स्वा० पर०) साधकः, कृष्यादिव्यवहारनिष्णातः **उपजीवनीयः** आश्रयणीयो भवति कर्षकवर्गेण । पृथु दोग्धा, पृथिवी दोहनपात्रम्, वैवस्वतो मनुर्वत्स इति दोग्धृ-वत्स-दोहनपात्रञ्च त्रयम् । इरावती आह्वाननाम, दुग्धस्थानीयं जीवनसाधनञ्च कृषि-सस्यादिः । अत्र दुग्धस्य जीवनसाधनस्य च एकेन कृषि-सस्यशब्देन निर्देश इति प्रघट्टकार्थः ॥ ९-१२ ॥

सोदक्रामत् सा सप्तऋषीनागच्छत् तां सप्तऋषय
उपाह्वयन्त ब्रह्मण्वत्येहीति ॥ १३ ॥

तस्याः सोमो राजा वत्स आसीच्छन्दः पात्रम् ॥ १४ ॥
तां बृहस्पतिराङ्गिरसोऽधोक् तां ब्रह्म च तपश्चाधोक् ॥ १५ ॥
तद् ब्रह्म च तपश्च सप्तऋषय उप जीवन्ति ब्रह्मवर्च-
स्युपजीवनीयो भवति य एवं वेद ॥ १६ ॥ (२५)

सा । उत् । अक्रामत् । सा । सप्तऽऋषीन् । आ । अगच्छत् । ताम् । सप्तऽऋषयः । उप । अह्वयन्त । ब्रह्मण्ऽवति । आ । इहि । इति । तस्याः । सोमः । राजा । वत्सः । आसीत् । छन्दः । पात्रम् । ताम् । बृहस्पतिः । आङ्गिरसः । अधोक् । ताम् । ब्रह्म । च । तपः । च । अधोक् । तत् । ब्रह्म । च । तपः । च । सप्तऽऋषयः । उप । जीवन्ति । ब्रह्मऽवर्चसी । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १३-१६ ॥

**सा** विराट् **सप्तऋषीन्** वसिष्ठ-विश्वामित्रादीन् **आगच्छत्** आगतवती। **ताम्** ऋषीन् उपसन्नां विराजं **सप्तऋषयः उपाह्वयन्त** आमन्त्रयाञ्चक्रिरे। कथम्? **ब्रह्मण्वति** ब्रह्म वेदः, तद्वती, वेदवती वेदज्ञे! **एहि** आव्रज **इति**। उपविश्य कृतार्थय अस्मान् इति। इत्थम् **तस्याः** विराजः **सोमो राजा** चन्द्रमा **वत्सः पात्रम्** दोहनपात्रं **छन्दः** वैदिकगायत्र्यादि-मन्त्रसमूहः। **आङ्गिरसः** अङ्गिरसः पुत्रः बृहस्पतिः देवगुरुः **ताम् अधोक्** दुग्धवान्। **तपः** ब्रह्मचर्यादिलक्षणं व्रतम्, **च ब्रह्म** वेदः उभयं दुग्धस्थानीयम् अधोक् दुग्धवान्। तद् दुग्धात्मकं तपः ब्रह्म च **सप्तऋषयः उपजीवन्ति** आश्रित्य जीवनं निर्वहन्ति, तपो ब्रह्म च सप्तर्षीणां जीवनसाधनमित्यर्थः। **यः एवं वेद सः ब्रह्मवर्चसी** तपःस्वाध्याय-तेजसा समलङ्कृतो भवति। न केवलमेतावदेव, किं तर्हि? **उपजीवनीयः** आश्रयणीयः, आराध्यश्च जायते। इह आङ्गिरसो बृहस्पतिर्दोग्धा, गायत्र्यादि-वैदिकछन्दः दोहनपात्रं सोमो राजा वत्सश्चेति हृदयम्। दोग्धा-दोहनपात्रं वत्सश्च त्रयम्। आह्वाननाम ब्रह्मण्वती, तपो ब्रह्म च दुग्ध-स्थानीयं जीवनसाधनञ्च। दुग्धस्य जीवनसाधनस्य च समान-शब्दाभ्यां तपो-ब्रह्मभ्यां निर्देश इति हृदयम्॥ १३-१६॥

पञ्चमः पर्यायः

**सोद॑क्राम॒त् सा दे॒वाना॑ग॑च्छत् तां दे॒वा उपा॑ह्वय॒न्तोर्ज॒**
**एही॒ति॑॥ १॥**

**तस्या॒ इन्द्रो॑ व॒त्स आसी॑च्चम॒सः पात्र॑म्॥ २॥**

**तां दे॒वः स॑वि॒ताऽधो॒क् तामू॒र्जामे॒वाधो॑क्॥ ३॥**

**तामू॒र्जां दे॒वा उप॑ जीवन्त्युपजीव॒नीयो॑ भवति॒ य**
**ए॒वं वेद॑॥ ४॥** (२६)

सा। उत्। अ॒क्राम॒त्। सा। दे॒वान्। आ। अ॒ग॒च्छ॒त्। ताम्। दे॒वाः। उप॑। अ॒ह्व॒य॒न्त॒। ऊर्जे॑। आ। इ॒हि॒। इति॑। तस्याः॑। इन्द्रः॑। व॒त्सः। आसी॑त्। च॒म॒सः। पात्र॑म्। ताम्। दे॒वः। स॒वि॒ता। अ॒धो॒क्। ताम्। ऊ॒र्जाम्। ए॒व। अ॒धो॒क्।

६

ताम् । ऊर्जाम् । देवाः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १–४ ॥

चतुर्थपर्याये असुर-पितृ-मनुष्यर्षिणां चतुर्णां दोग्ध्रादिषट्कं प्रदर्श्य सम्प्रति देव-गन्धर्वाऽप्सरोगणे-तरजन-सर्पाणां चतुर्णां दोग्ध्रादिषट्कं प्रदर्शयन्नाह–**सोदक्रामत्** इति । **ताम्** देवानुपगतां विराजं **देवाः** इन्द्रादयः **उपाह्वयन्त** आमन्त्रयन्त । कथम् ? **ऊर्जे** ! तेजोबलवति ! **एहि** आगच्छ इति । उपकृता वयम्, किं प्रत्युपकर्तुं पारयामहे, इति सस्नेहं उपहूय स्वपार्श्वे समुपवेशितवन्तः । **तस्याः** विराजः **इन्द्रः** देवराजः शक्रः **वत्सः आसीत्** बभूव । **चमसः** चमसादिकं स्रुवादियज्ञपात्रं **पात्रम्** दोहनपात्रम् । **सविता देवः** सूर्यः **ताम्** विराजं तत्सकाशात् **ऊर्जाम्** तेजसा सह बलं शक्तिम् **अधोक्** दुग्धवान् । सविता दोग्धा, चमसादिकं दोहनपात्रम्, इन्द्रो वत्स इति दोग्ध्रादित्रयम्, ऊर्जा दुग्धस्थानीया जीवनसाधनञ्च । किं बहुना, एकेन ऊर्जानाम्ना आह्वाननाम, दुग्धं, जीवनसाधनञ्च त्रयं निर्दिष्टमित्यभिप्रायः । शिष्टं समानम् ॥ १–४ ॥

सोदक्रामत् सा गन्धर्वाप्सरस आगच्छत्
तां गन्धर्वाप्सरस उपाह्वयन्त पुण्यगन्ध एहीति ॥ ५ ॥

तस्याश्चित्ररथः सौर्यवर्चसो वत्स
आसीत् पुष्करपर्णं पात्रम् ॥ ६ ॥

तां वसुरुचिः सौर्यवर्चसोऽधोक्
तां पुण्यमेव गन्धमधोक् ॥ ७ ॥

तं पुण्यं गन्धं गन्धर्वाप्सरस उप जीवन्ति ।
पुण्यगन्धिरुपजीवनीयो भवति य एवं वेद ॥ ८ ॥ (२७)

सा । उत् । अक्रामत् । सा । गन्धर्वऽअप्सरसः । आ । अगच्छत् । ताम् । गन्धर्वऽअप्सरसः । उप । अह्वयन्त । पुण्यऽगन्धे । आ । इहि । इति । तस्याः । चित्रऽरथः । सौर्यऽवर्चसः । वत्सः । आसीत् । पुष्करऽपर्णम् । पात्रम् ।

ताम् । वसुऽरुचिः । सौर्यऽवर्चसः । अधोक् । ताम् । पुण्यम् । एव । गन्धम् । अधोक् । तम् । पुण्यम् । गन्धम् । गन्धर्वऽअप्सरसः । उप । जीवन्ति । पुण्यऽगन्धिः । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ ५-८ ॥

**ताम्** गन्धर्वाप्सरसः उपगताम् **उपाह्वयन्त** आहूतवन्तः । कथम् ? **पुण्यगन्धे** ! उपाह्वाननामैतत्, पवित्रगन्धयुक्ते **एहि** आव्रज **इति** । **तस्याः** विराजः **सौर्यवर्चसः** सूर्यवर्चसः पुत्रः चैत्ररथो **वत्सः आसीत्** वत्सो बभूव । **पुष्करपर्णम्** कमलपत्रं **पात्रम्** दोहनपात्रम् । **सौर्यवर्चसः** सूर्यवर्चसः पुत्रः **वसुरुचिः ताम्** विराजं **अधोक्** दुग्धवान् । **ताम्** तस्याः सकाशात् **पुण्यं गन्धं** पवित्रगन्धम् **अधोक्** दुग्धवान् । **तम्** दुग्धस्थानीयं पुण्यगन्धं **गन्धर्वाः** देवगायकाः **अप्सरसः** तत्पत्न्यश्च **उपजीवन्ति** जीवनं धारयन्ति । **यः एवं वेद सः पुण्यगन्धिः** पुण्यगन्धसंयुक्तो भूत्वा **उपजीवनीयः** आश्रयणीयः **भवति** जायते । इह वत्सश्चैत्ररथः, दोग्धा वसुरुचिः, दोहनपात्रं कमलपत्रम्, आह्वाननाम पुण्यगन्धे, दुग्धस्थानीयः पुण्यगन्धः जीवनसाधनञ्चेति दर्शितम् ॥ ५-८ ॥

सोदक्रामत् सेतरजनानागच्छत् तामितरजना
उपाह्वयन्त तिरोध एहीति ॥ ९ ॥

तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम् ॥ १० ॥

तां रजतनाभिः काबेरकोऽधोक् तां तिरोधामेवाधोक् ॥ ११ ॥

तां तिरोधामितरजना उप जीवन्ति तिरो धत्ते सर्वं
पाप्मानमुपजीवनीयो भवति य एवं वेद ॥ १२ ॥ (२८)

सा । उत् । अक्रामत् । सा । इतरऽजनान् । आ । अगच्छत् । ताम् । इतरऽजनाः । उप । अह्वयन्त । तिरःऽधे । आ । इहि । इति । तस्याः । कुबेरः । वैश्रवणः । वत्सः । आसीत् । आमऽपात्रम् । पात्रम् । ताम् । रजतऽनाभिः । काबेरकः । अधोक् । ताम् । तिरःऽधाम् । एव । अधोक् । ताम् । तिरःऽधाम् ।

इतरऽजनाः । उप॑ । जीवन्ति । तिरः । धत्ते । सर्वम् । पाप्मान॑म् । उपऽजीवनीय॑ः । भवति । यः । एवम् । वेद॑ ॥ ९–१२ ॥

सा विराट् उदक्रामत् लब्धोत्क्रमणा अभूत् । सा इतरजनान् सामान्यजनान् अज्ञान् पामरान् चौरवञ्चकादीन् अगच्छत् तेषां समीपे आजगाम । आह्वाननाम तिरोधे ! इति । तस्याः विराजः कुबेरः धनपतिः, धनाध्यक्षः वैश्रवणः विश्वश्रवसः पुत्रः वत्स आसीत् वत्सो बभूव । आमपात्रम् अपक्वं मृण्मयपात्रं घटादि दोहनपात्रम् । काबेरकः कुबेरपुत्रः रजतनाभिः तन्नामधेयः अधोक् दुग्धवान् ताम् तिरोधाम् अदृश्यकलां तिरोभवनशक्तिम् अन्तर्धानकलां दुग्धस्थानीयाम् । तां तिरोधाम् तिरोधनशक्तिं समाश्रित्य इतरजनाः उपजीवन्ति जीवनं धारयन्ति । यः एवं वेद सः सर्वम् समस्तं पाप्मानम् पापं तिरोधत्ते अन्तर्धत्ते, नाशयतीत्यर्थः । इह कुबेरो वैश्रवणो वत्सः, कुबेरपुत्रो रजतनाभिः दोग्धा, अपक्वमृण्मयपात्रं दोहनपात्रम्, आह्वाननाम तिरोधे, अन्तर्धानं दुग्धं जीवनसाधनञ्च । किं, बहुना आह्वाननाम, दुग्धं जीवनं चैतत्त्रयमत्र तिरोधा-शब्देन निर्दिष्टमित्यैदंपर्यम् ॥ ९–१२ ॥

सोद॑क्रामत् सा सर्पानाग॑च्छत् तां सर्पा
उपा॑ह्वयन्त विष॑वत्येही॒ति॑ ॥ १३ ॥

तस्या॑स्तक्षको वैशालेयो वत्स आसीदलाबुपात्रं पात्र॑म् ॥ १४ ॥

तां धृतरा॑ष्ट्र ऐरावतो॒ऽधोक् तां विषमेवाधो॑क् ॥ १५ ॥

तद् विषं सर्पा उप॑ जीवन्त्युपजीवनीयो
भवति य एवं वेद॑ ॥ १६ ॥ (२९)

सा । उत् । अक्रामत् । सा । सर्पान् । आ । अगच्छत् । ताम् । सर्पाः । उप॑ । अह्वयन्त । विष॑ऽवति । आ । इहि । इति॑ । तस्या॑ः । तक्षकः । वैशालेयः । वत्सः । आसी॑त् । अलाबुऽपात्रम् । पात्र॑म् । ताम् । धृतऽरा॑ष्ट्रः । ऐराऽवतः । अधोक् । ताम् ।

विषम् । एव । अधोक् । तत् । विषम् । सर्पाः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १३–१६ ॥

**ताम्** सर्पान् उपगतां विराजं **सर्पाः** नागाः **उपाह्वयन्त** आमन्त्रयन्त । कथम् ? **विषवति** ! विषयुक्ते ! **एहि** आगच्छ **इति** । इत्थम् **तस्याः** विराजः **वैशालेयः** विशालापुत्रः **तक्षकः** तन्नामधेयः सर्पेषु प्रख्यातः **वत्सः आसीत्** । **अलाबुपात्रम्** तुम्बिकापात्रं **पात्रम्** दोहनपात्रम् । **तां** विराजं **ऐरावतः धृतराष्ट्रः** च, विनापि चकारं समुच्चयः । तन्नामधेयौ सर्पविशेषौ । अथवा इरावती पुत्रः धृतराष्ट्रः, **अधोक्**, दुग्धवान् । किम् ? **विषम्** दुग्धस्थानीयम्, जीवनसाधनञ्च । तथा च तक्षको वत्सः, दोग्धा धृतराष्ट्रः, दोहनपात्रं तुम्बिकापात्रम्, आमन्त्रणनाम विषवति, दुग्धस्थानीयं जीवनसाधनञ्च विषमिति पर्यवस्यति ॥ १३–१६ ॥

## षष्ठः पर्यायः

[६] (१–४) छन्दः—१ द्विपदा विराड् गायत्री; २ द्विपदा साम्नी त्रिष्टुप्; ३ द्विपदा प्राजापत्यानुष्टुप्; ४ द्विपदार्च्यनुष्टुप् ।

**तद् यस्मा एवं विदुषेऽलाबुनाऽभिषिञ्चेत् प्रत्याहन्यात् ॥ १ ॥**

तत् । यस्मै । एवम् । विदुषे । अलाबुना ।
अभिऽसिञ्चेत् । प्रतिऽआहन्यात् ॥ १ ॥

पञ्चमपर्याये समाप्तौ सर्पाणां विषवती इति आह्वाननाम्नः विषस्य च कीर्तनेन सम्भाव्यममङ्गलं परिहर्तुं षष्ठपर्याये मङ्गलमयं विषप्रतिघातं निर्दिशति—तद् यस्मा इति । **तद्** तस्मात् कारणात् **एवं विदुषे यस्मै** कस्मैचित् उक्तरहस्यवेदिने **अलाबुना** तुम्बिकायाः जलेन **अभिषिञ्चेत्** । प्रक्षिप्तं तज्जलं **प्रत्याहन्यात्** प्रतिघातं कुर्यात्, तेन जलप्रक्षेपेण विषप्रकोपः शाम्येत् ॥ १ ॥

**न च प्रत्याहन्यान्मनसा त्वा प्रत्याहन्मीति प्रत्याहन्यात् ॥ २ ॥**

न । च । प्रतिऽआहन्यात् । मनसा । त्वा ।
प्रतिऽआहन्मि । इति । प्रतिऽआहन्यात् ॥ २ ॥

यदि जलप्रक्षेपः **न च प्रतिहन्यात्** प्रतिघातं न कुर्यात्, तेन जल-प्रक्षेपेण विषप्रकोपो न शाम्येत्, तर्हि **मनसा** दिव्यसङ्कल्पशक्ति-सम्पन्नेन मनसा, चेतसा हे विषप्रकोप ! **त्वा** त्वां **प्रतिहन्मि** विनाश-यामि इति भावनया **प्रतिहन्यात्** विष-प्रकोपप्रतिरोधं कुर्यात् ।। २ ।।

**यत् प्रत्याहन्ति विषमेव तत् प्रत्याहन्ति ।। ३ ।।**

**यत् । प्रतिऽआहन्ति । विषम् । एव । तत् । प्रतिऽआहन्ति ।। ३ ।।**

**यत्** बाह्यजलप्रक्षेपेण मानसिकभावनया वा **प्रत्याहन्ति** विषप्रति-घातं कुरुते **तत्** बाह्यं जल-प्रक्षेपणमान्तरिकं मानसिकभावनं तदुभय-मपि **विषम् प्रतिहन्ति** विष-प्रकोपं शमयति ।। ३ ।।

**विषमेवास्याप्रियं भ्रातृव्यमनुविषिच्यते य एवं वेद ।। ४ ।।**(३०)

**विषम् । एव । अस्य । अप्रियम् । भ्रातृव्यम् । अनुऽविसिच्यते । यः । एवम् । वेद ।। ४ ।।**

**यः** पुरुषः **एवम्** इत्थमुक्तपूर्वं तत्त्वं **वेद** प्रतिपद्यते, **अस्य** विदुषः **अप्रियम्** द्वेष्यं **भ्रातृव्यम्** शत्रुम् **अनु विषिच्यते विषम्** विषमेव प्रक्षिप्यते । उक्तवेदनं स्वस्य शत्रुं प्रति विषसिञ्चनमेव । उक्तवेदन-सामर्थ्येन विषेणैव स्वशत्रुविनाश इति हृदयम् ।। ४ ।।

# इति अष्टमं काण्डम्

---

गुरु-गङ्गेश्वर-ग्रन्थमालाया : ३२ तमं पुष्पम्

# शौनकीया अथर्ववेद-संहिता

•

## नवमं काण्डम्

•

## अभिनव-सायणभाष्य-भूषिता

•

—भाष्यकारः—

वेद-दर्शनाचार्यो: महामण्डलेश्वरः

**श्री स्वामी गङ्गेश्वरानन्द उदासीनः**

•

—सम्पादकौ—

**वेदान्ताचार्यः श्री स्वामी गोविन्दानन्दः**

**श्री गोविन्द नरहरि वैजापुरकरः**

एम०ए० न्याय-वेदान्त-साहित्याचार्यः

राष्ट्रपति-पुरस्कृतश्च

•

—प्रकाशकः—

**सद्गुरु गङ्गेश्वर इण्टर नेशनल वेदमिशन न्यासः**

**बम्बई : ४०००,२०**

# शौनकीया अथर्ववेद संहिता

## नवमं काण्डम्

### प्रथमं सूक्तम् : मधुविद्या

(१-२४) ऋषिः—अथर्वा। देवता—मधु, अश्विनौ च। छन्दः—१ त्रिष्टुप्;* २ त्रिष्टुब्गर्भा पङ्क्तिः; ३ परानुष्टुप्; ६ अतिशक्वरीगर्भा महाबृहती; ७ अतिजागतगर्भा महाबृहती; ८ बृहतीगर्भा संस्तारपङ्क्तिः; ९ पराबृहती प्रस्तारपङ्क्तिः; १० परोष्णिक्पङ्क्तिः; ११-१३,१५,१६, १८,१९ अनुष्टुप्; १४ पुरोष्णिक्; १७ उपरिष्टाद्विराड्बृहती; २० भुरिग्विष्टारपङ्क्तिः; २१ एकावसाना द्विपदार्च्यनुष्टुप्; २२ त्रिपदा ब्राह्मी पुरोष्णिक्; २३ द्विपदा आर्ची पङ्क्तिः; २४ त्र्यवसाना षट्पदाष्टिः।

[**विनियोगः**—'दिवस्पृथिव्याः' इति चतुर्विंशर्चं सूक्तम्। तत्र प्रथमासु दशसु ऋक्षु मधुकशायाः गोरूपेण वर्णनम्। द्वितीये दशके वर्चस आशंसनम् अश्विभ्यां सकाशाद् इतरदेवेभ्यश्च। शिष्टासु ऋक्षु पुनरपि कशायाः वर्णनम्।

सांप्रदायिकास्तु एवं विनियुञ्ज्यते। 'दिवस्पृथिव्याः' इत्यर्थसूक्तस्य मेधाजननकर्मणि वर्चस्यकर्मणि च विनियोगः। एतद्विस्तरः 'प्रातरग्निम्' (अथर्व० ३.१६) इति सूक्ते द्रष्टव्यः। उत्सर्जनकर्मणि 'यथा सोमः प्रातःसवने' (अथर्व सं० ९.१.११-२४) इति सूक्तम् आज्यहोमे विनियुज्यते। तदुक्तं कौशिकेन—'गिरावरगराटेषु' (अथर्व० ६.६९) 'यथा सोमः प्रातःसवने' (कौ० सू० १३९.१५) इति तथा 'दिवस्पृथिव्याः' इति सूक्तं सोमयागे सोमसेवने विनियुज्यते। तदुक्तं वैताने—'दिवस्पृथिव्याः' इति मधुसूक्तेन राजानं संश्रयति' (वैता० श्रौ० १६.१२) इति।]

शौनकीयाया अथर्वसंहितायाः नवमं काण्डं मधुविद्यया प्रारभते। मधुविद्याया अधिष्ठात्री मधुकशा। मधुकशा नाम नभोव्यापिनी सा शक्तिः यया मधु कृष्यते, आकृष्यते। 'मधु इति जलनाम' (नि० १.१२), 'ओषधीनां वा एष परमो रसो यन्मधु', (शत० ११.

* सर्वत्र अनुल्लिखितसंख्यकाः सूक्तीया ऋचः प्रथमछन्दस्काः बोध्याः।

५.४.१८), 'रसो वा एष ओषधिवनस्पतिषु यन्मधु' (ऐत० ८.२०) 'अन्नं वै मधु' (ताण्डय० ब्रा० ११.१०.३) सर्वं वा इदं मधु यदिदं किं च' (शत० ब्रा० ३.७.१.११)। इत्थं यया सर्वव्यापिन्या शक्त्या मधु जलम्, ओषधिवनस्पत्यादिको रसः, अन्नादिकं वा कृष्यते आकृष्यते सा शक्तिः 'मधुकशा' नाम। सा मधुकशा परितः प्रसृतं रसमाकृष्य तरुणे पुत्रे सूर्ये प्रक्षिपति। तदेवोक्तम्-'तं जातं तरुणं पिपर्ति माता। स जातो विश्वा भुवन विचष्टे' (अथर्व० ९.१.५)। तं मधुरसं सा द्युलोकात् अन्तरिक्षात् पृथिव्याम् आकर्षति। सा च अग्नेर्वातस्य च साहाय्येन आकर्षति। ग्रीष्मे शुष्यति रसः। स रसः वातमागच्छति। अग्नेर्वातस्य च रसाकर्षणे सक्रियता द्यावापृथिव्योरन्तरिक्षस्य च साहाय्यमपेक्षते। एषां सर्वेषां सम्मिलितानां बलेन मध्वाकर्षणशक्तिः समुत्पद्यते। अत एव प्रथममन्त्रे साधूक्तम्—"दिवस्पृथिव्या मधुकशा हि जज्ञे।' सा हि समुद्र-जलं वनस्पत्यादिकानां नानाविधान् रसान् प्राणिनां च प्राणान् समाकृष्य स्वात्मनि निधत्ते। अतः अस्याः गर्भः 'विश्वरूपः' इत्युक्तम् मन्त्रेषु।

पिण्डे चेयं मधुकशा मधुरसाकर्षिणी वाक्। नेयं वैखरी, प्रत्युत सप्तद्वारवती। यथा मनुनोक्तम्—'सप्तद्वारावकीर्णां न वाचमनृतां वदेत्' इति। सप्तद्वाराणि—'कर्णाविमौ नासिके चक्षिणी मुखम्।' एषु सप्तद्वारेषु विभक्ता वाक् द्यावापृथिव्योरन्तराले प्रसृतं मधुरसं संगृह्णाति। अतः सप्तमुखी चेयं मधुकशा सप्तमुखैः सप्तान्नानि भक्षयति—'यत् सप्तान्नानि मेधयाऽजनयत् पिता न' (बृह० उ० १.५.१)। इयं सप्तमुखी वाक् 'खशया', खानि=इन्द्रियाणि, तत्र शेते इति। तथा च सर्वेन्द्रियव्यापिनी। इयं च प्रकाशयत्यर्थान्। तथा नभोव्यापिनी मधुकशा 'अश्वाजनी' अश्वं सूर्यम् अजति प्रेरयति। भयाद् अस्याः सूर्यः, ग्रहोपग्रहाः, नक्षत्राणि च प्रधावन्ति। 'असौ वा आदित्य एषोऽश्वः' (शत० ब्रा० ७.३.२.१०)। श्रूयते-ईश्वरीयां मधुरामिमां विद्यामश्विभ्यां महर्षिः दधीचिः प्रादादिति (बृ० उ० २.५.१६)।

मधुविद्याया अधिष्ठात्रीं मधुविद्यां निरूप्य संक्षेपतः अश्विनाम-धेयस्तद्देवता अश्विनावपि विचार्यते। अश्विदेवताविचाराय पुनः सवन-त्रयपरामर्शोऽप्यनुपेक्ष्यः। अतः समासतः सवनत्रयनिरूपणेन अश्विनो-र्वैशिष्ट्यं प्रस्तूयते। वेदेषु त्रीणि सवनानि श्रूयन्ते—१. प्रातःसवनम्, २. माध्यन्दिनसवनम्, ३. तृतीयसवनं चेति। एषु प्रातःसवनं प्रातः-

काले माध्यन्दिनसवनं मध्याह्नकाले तृतीयसवनं पुनः अस्तमयनवेलायां क्रियते। प्रातःसवनमग्निदेवस्य अश्विनोर्वा, माध्यन्दिनसवनं इन्द्रस्य इन्द्राग्न्योर्वा, तृतीयसवनं पुनरन्येषां देवानाम्, आदित्यानां वा। 'सुन्वन्ति निष्पादयन्ति पदार्थान् येन कर्मणा तत्' इति व्युत्पत्त्या पदार्थ-निष्पादकं कर्म सवनम्। तथैव सोमरसादि-निष्पादनमपि तत्। निघण्टुः सवनं यज्ञमाचष्टे—'सवनं यज्ञनाम' (निघ० ३.१७) इति। इत्थं सवनं सोमाभिषवणं पदार्थनिष्पादकं श्रेष्ठं कर्म, यज्ञः, श्रमः, कर्म इत्येतैर्नामभिर्व्याहर्तुं शक्यम्।

अथ प्रातःसवनसम्बन्धिनौ मधुविद्यादेवौ अश्विनौ कौ? इत्युच्यते—अश्विनौ, सूर्याचन्द्रमसौ। यदा द्वावेतौ प्रातःकाले स्वकिरणाभ्यां मिथो युञ्जाते तदा तौ प्रातर्युजौ अश्विनाविति। 'प्रातर्युजा प्रातर्योगिनौ' इति हि निरुक्तम् (निरु० १२.४)। प्रातःकाले मिथः सम्पृक्तौ अश्विनौ एव देवानां भिषजौ भवतः। देवानां प्राकृतिकशक्तीनां संशोधकौ। प्रातःकाले व्याध्यादीनामुपशमो जायते। पवनोऽपि प्राणवहः शुद्धः पवित्रो भवति। प्रभाते मनः प्रशान्ततमं सम्पद्यते। एवं प्रकृतौ सर्वं प्रशान्तवाहिता दृग्गोचरीभवति। अतः अश्विनोर्भिषग्रूपत्वं सूपपादम्। तदत्र अश्विदेवत्याया मधुविद्याया मन्त्रकृता अथर्वणा दृष्ट आदिमो मन्त्रो यथा—

**दि॒वस्पृ॑थि॒व्या अ॒न्तरि॑क्षात् समु॒द्राद॒ग्नेर्वाता॑न्मधुक॒शा हि ज॒ज्ञे। तां चा॑यि॒त्वाऽमृ॒तं वसा॑नां हृ॒द्भिः प्र॒जाः प्रति॑ नन्दन्ति॒ सर्वाः॑ ॥ १ ॥**

**दि॒वः। पृ॒थि॒व्याः। अ॒न्तरि॑क्षात्। स॒मु॒द्रात्। अ॒ग्नेः। वाता॑त्। म॒धु॒ऽक॒शा। हि। ज॒ज्ञे। ताम्। चा॒यि॒त्वा। अ॒मृत॑म्। वसा॑नाम्। हृ॒त्ऽभिः। प्र॒ऽजाः। प्रति॑। न॒न्द॒न्ति॒। सर्वाः॑ ॥ १ ॥**

**मधुकशा** मधोराकर्षणकर्त्री **दिवः** द्युलोकात् **पृथिव्याः** भूमेः **अन्त-रिक्षात्** द्यावापृथिव्योर्मध्यस्थितादाकाशात् **समुद्रात्** अर्णवात् **अग्नेः वातात्** वायोश्च एभ्यः सर्वेभ्यः **जज्ञे** समुत्पन्ना। **ताम् अमृतम् वसानाम्** अमृतधारिणीं मधुकशां **हृद्भिः चायित्वा** हृदयैः सत्कृत्य **सर्वाः प्रजाः** अखिला प्रजाः **प्रतिनन्दन्ति** हर्षं प्राप्नुवन्ति। यद्वा—अमृतं जलं सोमरसं

वसानां धारयन्तीं । तदुक्तम्–'तद् यत् तदमृतं सोमः सः' (शत० ब्रा० ९.५.१-८), 'अमृतम् उदकनाम' (निघ० १.१२)। यद्वा–अमृतं हिरण्यं वसानाम् आच्छादयन्तीम् । तदुक्तम्–'अमृतं हिरण्यम्' (शत० ब्रा० १०.४.१.६); (ताण्ड्य० ब्रा० ९.९.४)। 'हिरण्यवर्णा मधुकशा' इति निगदोऽपि (अथर्व० ९.१.४)। एतादृशीं **तां** हिरण्यवर्णां **दिव्यां** मधुकशां **हृद्भिः** हृद्बलैः **चायित्वा** तीक्ष्णीकृत्य, सूक्ष्मीकृत्य सूक्ष्मं तत् दिव्यं मधुरसं संगृह्य **सर्वाः प्रजाः प्रतिनन्दन्ति** प्रमोदमाप्नुवन्ति । उपनिषदपि आह–'स मोदते मोदनीयं हि लब्ध्वा ।' (कठो० १.२.१३)। अत्रैवान्यत्र (६.१२५.२, १९.३.१) मन्त्रप्रतीकसाम्यात् पुनरुक्तवदाभासः ॥ १ ॥

**म॒हत् पयो॑ वि॒श्वरू॑पमस्याः समु॒द्रस्य॑ त्वो॒त रेत॑ आहुः ।**
**यत ऐति॑ मधुक॒शा ररा॑णा॒ तत् प्रा॒णस्तद॒मृत॑ं निवि॑ष्टम् ॥ २ ॥**

**म॒हत् । पय॑ः । वि॒श्वऽरू॑पम् । अ॒स्याः । स॒मु॒द्रस्य॑ । त्वा॒ । उ॒त । रेत॑ः । आ॒हुः । यत॑ः । आ॒ऽएति॑ । म॒धु॒ऽक॒शा । ररा॑णा । तत् । प्रा॒णः । तत् । अ॒मृत॑म् । नि॒ऽवि॑ष्टम् ॥ २ ॥**

**अस्याः** मधुकशायाः **महत् पयः** दुग्धं सर्वासु वनस्पत्योषध्याद्यासु पूर्वं यो रसः समुत्पद्यते तत् शुभ्रं दुग्धरूपमेव भवति । तत्र पयसि **विश्वरूपं** सर्वासामोषध्यादीनां रूपाणि सन्निविष्टानि । **उत** अपि च **त्वा** तवेति षष्ठ्यर्थे द्वितीया । तव तं रसं **समुद्रस्य** ब्रह्माण्डसमुद्रस्य **रेतः** इति **आहुः** तत्त्वज्ञाः, **यतः** यस्मात् समुत्पद्य इयं मधुकशा **रराणा** सुष्ठुदात्री रसादीन् **एति** आगच्छति **तत् प्राणः** प्राणात्मकं ब्रह्म, **तत् अमृतं निविष्टम्** पूर्वोक्तमन्त्रेऽमृतनाम्ना प्रतिपादितं सर्वं निहितमस्ति । 'रराणः रातिरभ्यस्तः' (निरु० २.१२) ॥ २ ॥

**पश्य॑न्त्यस्याश्च॒रि॒तं पृ॑थि॒व्यां पृ॒थङ्नरो॑ बहु॒धा मीमा॑ंसमानाः ।**
**अ॒ग्नेर्वाता॒न्मधुक॒शा हि ज॒ज्ञे म॒रुता॑मु॒ग्रा न॒प्तिः ॥ ३ ॥**

**पश्य॑न्ति । अ॒स्याः । च॒रि॒तम् । पृ॒थि॒व्याम् । पृथ॑क् । नर॑ः । ब॒हु॒ऽधा । मीमा॑ंसमानाः । अ॒ग्नेः । वाता॑त् । म॒धु॒ऽक॒शा । हि । ज॒ज्ञे । म॒रुता॑म् । उ॒ग्रा । न॒प्तिः ॥ ३ ॥**

**बहुधा मीमांसमानाः नरः** नैकप्रकारेण विचारविमर्शं कुर्वन्तो जनाः। यद्वा–अस्याः पय आन्तरिक्ष्य-समुद्रे एकरूपं सत् कथं बहुधा विश्वरूपं धत्ते इति विचारयन्तः। **अस्याः** मधुकशायाः **चरितं पृथिव्यां पृथक्** पृथक्-पृथक् **पश्यन्ति। मरुतां** प्राणवायूनाम् **उग्रा** उद्गूर्णबला **नप्तिः** दुहितृरूपिणी मधुकशा, **हि** यतः सा वाताज्जाता, अत एवेयं दुहिता। सा **अग्नेः वातात्** च **जज्ञे** जाता समुत्पन्ना ॥ ३ ॥

**मातादित्यानां दुहिता वसूनां प्राणः प्रजानाममृतस्य नाभिः।**
**हिरण्यवर्णा मधुकशा घृताची महान् भर्गश्चरति मर्त्येषु ॥ ४ ॥**

**माता। आदित्यानाम्। दुहिता। वसूनाम्। प्राणः।**
**प्रऽजानाम्। अमृतस्य। नाभिः। हिरण्यऽवर्णा।**
**मधुऽकशा। घृताची। महान्। भर्गः। चरति। मर्त्येषु ॥ ४ ॥**

इयं मधुकशा **वसूनां** वसुनामकानां प्राणानां **दुहिता** दूरे हिता भवति, यतो हि 'एते हीदं सर्वं वासयन्ते ते यदिदं सर्वं वासयन्ते तस्माद् वसव इति (शत० ब्रा० ११.६.३.६)। अतः ओषध्यादिषु रसस्य वासकाले ताभ्यो रसाकर्षणं न भवति, अतः सा तस्मिन् काले दूरे हिता भवति। कन्याऽपि सा मधुकशा वसूनां भवति, यतो रसानामोषध्यादिषु वासानन्तरमेव तस्या अवकाशः सम्भवति। अतः मधुकशा वसूनां दुहिता। तथा **आदित्यानाम्** इयं **माता** निर्मात्री। 'आदित्यः कस्मात्? आदत्ते भासं ज्योतिषाम्' (निरु० २.१३) इति। यथा मधुकशा रसानाकर्षति तथैव आदित्या अपि। अत एव ते मधुकशायाः पुत्राः। इयं मधुकशा **प्रजानां** प्राणिनां **प्राणः** रसादीनां प्रदानेन प्राणस्वरूपा। **अमृतस्य नाभिः** केन्द्रस्थानीया। **हिरण्यवर्णा** हिरण्यरूपा **घृताची** घृतं जलं तेजो वा अञ्चति व्याप्नोतीति, 'तेजो वै घृतम्' (तै० सं० २.२.९.४; मैत्रा० सं० १.६.८)। यद्वा–'घृताची'नामिकाया अप्सरसो रूपेण वेति। एषा मधुकशा **मर्त्येषु** मनुष्येषु **महान् भर्गः** तेजोरूपेण **चरति** विचरति, मनुष्येषु भर्गपरिपाककर्त्री तेजस्विनी सा विचरतीति भावः ॥ ४ ॥

**मधोः कशामजनयन्त देवास्तस्या गर्भो अभवद् विश्वरूपः।**

तं जातं तरुणं पिपर्ति माता स जातो विश्वा भुवना वि चष्टे ॥ ५ ॥

मधोः । कशाम् । अजनयन्त । देवाः । तस्याः । गर्भः । अभवत् । विश्वऽरूपः । तम् । जातम् । तरुणम् । पिपर्ति । माता । सः । जातः । विश्वा । भुवना । वि । चष्टे ॥ ५ ॥

देवाः मधोः कशां मधुरसस्याकर्षयित्रीं अजनयन्त उत्पादितवन्तः । तस्याः मधुकशायाः गर्भः विश्वरूपः सर्वरूपः सूर्यात्मकः अभवत् सञ्जातः । तं जातं समुत्पन्नं तरुणं युवानं सूर्यं माता निर्मात्री मधुकशा पिपर्ति पालयति । सः जातः समुत्पन्नः सन् विश्वा भुवना सकललोक-लोकान्तराणि विचष्टे पश्यति, प्रकाशयति च ॥ ५ ॥

कस्तं प्र वेद क उ तं चिकेत यो अस्या
हृदः कलशः सोमधानो अक्षितः ।
ब्रह्मा सुमेधाः सो अस्मिन् मदेत ॥ ६ ॥

कः । तम् । प्र । वेद । कः । ऊं इति । तम् । चिकेत । यः । अस्याः । हृदः । कलशः । सोमऽधानः । अक्षितः । ब्रह्मा । सुऽमेधाः । सः । अस्मिन् । मदेत ॥ ६ ॥

कः तं कलशं प्र वेद प्रकृष्टरूपेण विजानाति । क उ वितर्के । तं चिकेत निभालयति यः अस्याः मधुकशायाः अक्षितः अक्षीणः सोमधानः सोमः निधीयते यस्मिन् स सोमधानः, सोमरसभरितः । हृदः हृदयस्य कलशः घटो विद्यते । सुमेधाः सुष्ठु मेधाशक्तिसम्पन्नः ब्रह्मा तं कलशम् वेद जानाति इत्युपरिष्टादवगन्तव्यम् । स एव अस्मिन् कलशे मदेत मोदते सोमरसपानेनेति ॥ ६ ॥

स तौ प्र वेद स उ तौ चिकेत यावस्याः स्तनौ सहस्रधारावक्षितौ । ऊर्जं दुहाते अनपस्फुरन्तौ ॥ ७ ॥

सः । तौ । प्र । वेद । सः । ऊं इति । तौ । चिकेत ।

**यौ । अस्याः । स्तनौ । सहस्रऽधारौ । अक्षितौ । ऊर्जम् । दुहाते इति । अनपऽस्फुरन्तौ ॥ ७ ॥**

**स** ब्रह्मा **तौ द्वौ प्रवेद** प्रकृष्टतया जानाति । उ निश्चयेन सः ब्रह्मा एव तौ **चिकेत** पश्यति । **यौ अस्याः** मधुकशाया **अक्षितौ** अक्षीणौ **सहस्रधारौ** पयसः सहस्रधारायुक्तौ **स्तनौ** सूर्य-चन्द्ररूपौ स्तः । उभावेतौ अनपस्फुरन्तौ अविचलभावेन **ऊर्जम्** ऊर्कं रसं **दुहाते इति** दुग्धं प्रवर्षयतः । अत्र मधुकशाया गोरूपत्वप्रतिपादितम्, अपरोक्षतया सूर्याचन्द्रमसोः स्तनत्वञ्च ॥ ७ ॥

**हिङ्करिक्रती बृहती वयोधा उच्चैर्घोषाऽभ्येति या व्रतम् ।**
**त्रीन् घर्मानभि वावशाना मिमाति मायुं पयते पयोभिः ॥ ८ ॥**

**हिङ्ऽकरिक्रती । बृहती । वयःऽधाः । उच्चैःऽघोषा । अभिऽएति । या । व्रतम् । त्रीन् । घर्मान् । अभि । वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ ८ ॥**

**हिङ्करिक्रती** हिङ्कारशब्दं कुर्वती **बृहती** महती **वयोधाः** अन्नस्य धात्री **उच्चैर्घोषा** तारस्वरेण शब्दयन्ती **या** मधुकशा सा **व्रतं** व्रतस्थानम् **अभ्येति** आगच्छति । **त्रीन् घर्मान्** 'हृञ् हरणे' (८९९ भ्वा०) 'घर्मग्रीष्मौ' (उणा० १.१४१) इति यक्प्रत्ययान्तो निपात्यते । हकारस्य घकारो निपातनात् । **अभि त्रीन्** सूर्यविद्युदग्निरूपान् तापयुक्तान् **वावशाना** 'वाशृ शब्दे (११६३ दिवा०), ततः 'लिटः कानज् वा' (पा० ३.२.१०६), 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६.१.७) । उपधाह्रस्वत्वं छान्दसम् । भृशं कामयमाना **मायुं मिमाति** 'माङ् माने शब्दे च (१००.८. जुहो०) शब्दं करोति, **पयोभिः** रसैः **पयते** प्रप्यायते, तर्पयतीत्यर्थः । मायुम्—'माङ् माने शब्दे च' उण्, युक् च 'कृवापाजिमि' (उणा० १.१) । पयते प्रप्यायते (निरु० ११.२९) 'ओप्यायी वृद्धौ' (४८८ भ्वा० आ०) इत्यस्मात् कृतसम्प्रसारणात् लटि रूपम्, सम्प्रसारणं च छान्दसं प्रत्ययात् पूर्वमेव ॥ ८ ॥

**यामापीनामुपसीदन्त्यापः शाक्वरा वृषभा ये स्वराजः ।**
**ते वर्षन्ति ते वर्षयन्ति तद्विदे काममूर्जमापः ॥ ९ ॥**

याम् । आऽपीनाम् । उपऽसीदन्ति । आपः । शाक्वराः ।
वृषभाः । ये । स्वऽराजः । ते । वर्षन्ति । ते ।
वर्षयन्ति । तत्ऽविदे । कामम् । ऊर्जम् । आपः ॥ ९ ॥

ये मेघाः **शाक्वराः** शक्तिमन्तः, शाक्वराः–'शक्लृ शक्तौ' वनिप् 'स्नामदि' (उणा० ४.११३)। **वृषभाः** वर्षणशीलाः **स्वराजः** स्वयं राजमानाः **ते वर्षन्ति** वृष्टिरूपेण पृथिव्यां पतन्ति, **तद्विदे** तद्रहस्य-विदे पुरुषाय **आपः** जलानि **कामं** यथेष्टम् **ऊर्जम्** बलं प्राणशक्तिं वा **वर्षयन्ति** सिञ्चन्ति ॥ ९ ॥

स्तनयित्नुस्ते वाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यामधि ।
अग्नेर्वातान्मधुकशा हि जज्ञे मरुतामुग्रा नप्तिः ॥ १० ॥

स्तनयित्नुः । ते । वाक् । प्रजाऽपते । वृषा । शुष्मम् ।
क्षिपसि । भूम्याम् । अधि । अग्नेः । वातात् ।
मधुऽकशा । हि । जज्ञे । मरुताम् । उग्रा । नप्तिः ॥ १० ॥

**प्रजापते** ! प्रजापालक प्रभो ! **स्तनयित्नुः** अशनिः गर्जनं वा **ते** तव **वाक्** वाणी अस्ति । त्वं **वृषा** वर्षणशीलः सन् **भूम्यामधि** पृथिव्या उपरि **शुष्मं** स्वकीयं बलं 'शुष्ममिति बलनाम' (निघ० २.९) **क्षिपसि** पातयसि। शेषं पूर्ववत् ॥ १० ॥

यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥ ११ ॥

यथा । सोमः । प्रातःऽसवने । अश्विनोः । भवति । प्रियः ।
एव । मे । अश्विना । वर्चः । आत्मनि । ध्रियताम् ॥ ११ ॥

**यथा प्रातःसवने** तदाख्ये प्रातर्यज्ञे **सोमः अश्विनोः** देवानां भिषजोः **प्रियः** रुचिकर **भवति एवा** एवमेव एतौ **अश्विना मे** मम **आत्मनि** देहादिषु **वर्चः** तेजः **ध्रियताम्** धारयताम् ॥ ११ ॥

यथा सोमो द्वितीये सवन इन्द्राग्न्योर्भवति प्रियः ।
एवा म इन्द्राग्नी वर्च आत्मनि ध्रियताम् ॥ १२ ॥

यथा । सोमः । द्वितीये । सवने । इन्द्राग्न्योः ।
भवति । प्रियः । एव । मे । इन्द्राग्नी इति ।
वर्चः । आत्मनि । ध्रियताम् ॥ १२ ॥

**यथा द्वितीये सवने** माध्यन्दिने यज्ञे **सोमः इन्द्राग्न्योः** इन्द्रदेवाऽग्निदेवयोः **प्रियः** रुचिकरः **भवति एवा** एवमेव **इन्द्राग्नी** द्वौ एतौ **मे आत्मनि** मम देहादिषु **वर्चः** तेजः **ध्रियताम्** धारयताम् । 'ऐन्द्रो वै मध्यन्दिनः' (ऐ० ६.३, कौ० ५.५) ॥ १२ ॥

यथा सोमस्तृतीये सवन ऋभूणां भवति प्रियः ।
एवा म ऋभवो वर्च आत्मनि ध्रियताम् ॥ १३ ॥

यथा । सोमः । तृतीये । सवने । ऋभूणाम् । भवति । प्रियः ।
एव । मे । ऋभवः । वर्चः । आत्मनि । ध्रियताम् ॥ १३ ॥

**यथा तृतीये सवने** तदाख्ये सायंकालिके यज्ञे **सोमः ऋभूणां** देवशिल्पीनां त्वष्टृशिष्याणां **प्रियः भवति । एवा** एवमेव **ऋभवः मे** मम **आत्मनि वर्चः** तेजो **ध्रियताम्** धारयन्ताम् । ऋभवः त्वष्टुः शिष्याः सोमसामग्र्याः नानाविधानि यन्त्राणि विमानानि एवमन्यान्यपि विज्ञानसम्बन्धीनि वस्तूनि निर्मान्ति इति तत्र तत्र वेदेषु वर्ण्यते ॥ १३ ॥

मधु जनिषीय मधु वंसिषीय ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥ १४ ॥

मधु । जनिषीय । मधु । वंसिषीय । पयस्वान् । अग्ने । आ ।
अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ १४ ॥

**मधु** मधुरसमहं **जनिषीय** 'जनी प्रादुर्भावे', छन्दसि आशीर्लिङ्, समुत्पादयेयम् । **मधु** मधुरसं **वंसिषीय** याच्ञां कुर्यासम् । 'वनु याचने' (१४७१ तना० आ०) आशीर्लिङि छान्दसं रूपम् । **अग्ने! अहं पयस्वान्** अग्निहोत्रार्थं पयोयुक्तः सन् **आगमं** त्वत्समीपे प्राप्तवान् । **तं मा** तादृशं माम् **वर्चसा** तेजसा **संसृज** संसक्तं कुरु ॥ १४ ॥

सं मा॑ऽग्ने॒ वर्च॑सा सृज॒ सं प्र॒जया॒ समायु॑षा ।
वि॒द्युर्मे॑ अ॒स्य दे॒वा इन्द्रो॑ विद्यात् स॒ह ऋषि॑भिः ॥ १५ ॥

सम् । मा॒ । अ॒ग्ने॒ । वर्च॑सा । सृ॒ज॒ । सम् । प्र॒ऽजया॑ । सम् । आयु॑षा । वि॒द्युः । मे॒ । अ॒स्य । दे॒वाः । इन्द्रः॑ । वि॒द्यात् । स॒ह । ऋषि॑ऽभिः ॥ १५ ॥

हे **अग्ने** ! त्वं **वर्चसा** तेजसा **मा** मां **संसृज** संयोजय । **प्रजया** सन्तत्या **सं** सृजेति अनुवर्तते । **समायुषा** दीर्घायुष्येण **सं** संयोजय । **देवाः मे** मम **अस्य** इममभीष्टसङ्कल्पं **विद्युः** जानीयुः । **ऋषिभिः** वसिष्ठविश्वामित्रादिभिः **सह इन्द्रः** देवाधिपतिरपि **विद्यात्** जानीयात् । पुनरुक्तोऽयं मन्त्रः अथर्वसंहितायाम् (७.८९.२;१०.५.४७) ॥ १५ ॥

**विशेषः**—अस्यैव मन्त्रस्य काण्डान्तर्गतस्य पुरस्तात् सायणभाष्यं पाठकानाम् उपकृतये यथावत् इहोपन्यस्यते । हे **अग्ने मा** मां **वर्चसा** तेजसा बलेन वा **सं सृज** संयोजय । **प्रजया** पुत्रादिकया **सं** सृज । **आयुषा** जीवनेन च **सं** सृज । किं च **अस्य** एनम्, अन्वादेशे इदमः अशादेशोऽनुदात्तः । विभक्तिः सुप्त्वात् अनुदात्तः । अतः सर्वानुदात्तं पदम् । एनं **मे माम्** । कर्मार्थे षष्ठ्यौ । **देवा विद्युः** असौ पूत इति जानीयुः । तथा **ऋषिभिः** अतीन्द्रियदर्शिभिर्मुनिभिः **सह इन्द्रश्च विद्यात्** मां पूतं जानीयात् । यद्वा अस्य एतादृशस्य मे अभिमतफलं साधयितुम् इन्द्रादयो विद्युरिति । ( अथर्व० ७.८९.२ )

य॒था मधु॑ मधु॒कृतः॑ सं॒भर॑न्ति॒ मधा॒वधि॑ ।
ए॒वा मे॑ अश्वि॒ना वर्च॑ आ॒त्मनि॑ ध्रियताम् ॥ १६ ॥

यथा॑ । मधु॑ । म॒धु॒ऽकृतः॑ । स॒म्ऽभर॑न्ति । मधौ॑ । अधि॑ । ए॒व । मे॒ । अ॒श्वि॒ना । वर्चः॑ । आ॒त्मनि॑ । ध्रि॒यता॒म् ॥ १६ ॥

**यथा मधौ अधि** वसन्ततौं **मधुकृतः** मधुमक्षिकाः **मधु** पुष्परसं **संभरन्ति** संगृह्णन्ति, शेषं पूर्ववत् ॥ १६ ॥

य॒था मक्षा॑ इ॒दं मधु॑ न्य॒ञ्जन्ति॒ मधा॒वधि॑ ।
ए॒वा मे॑ अश्वि॒ना वर्च॒स्तेजो॒ बल॒मोज॑श्च ध्रियताम् ॥ १७ ॥

यथा । मक्षाः । इदम् । मधु । निऽअञ्जन्ति । मधौ । अधि । एव । मे । अश्विना । वर्चः । तेजः । बलम् । ओजः । च । ध्रियताम् ॥ १७ ॥

यथा मक्षाः मधुमक्षिकाः मधौ अधि वसन्ततौ इदं मधु माक्षिकं न्यञ्जन्ति संचिन्वन्ति एवा एवमेव अश्विनौ देवानां भिषजौ मे मयि वर्चः दीप्तः 'वर्च दीप्तौ' (१६२ भ्वा०), तेजः पराक्रमः 'तिज निशाने' (९७१ भ्वा०) प्रभावो वा। बलं प्रसिद्धम् ओजः च मयि ध्रियताम् धारयताम् ॥ १७ ॥

यद् गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु ।
सुरायां सिच्यमानायां यत् तत्र मधु तन्मयि ॥ १८ ॥

यत् । गिरिषु । पर्वतेषु । गोषु । अश्वेषु । यत् । मधु । सुरायाम् । सिच्यमानायाम् । यत् । तत्र । मधु । तत् । मयि ॥ १८ ॥

यथा गिरिषु गिरिगह्वरेषु पर्वतेषु पर्वतशिखरेषु, यद्वा मेघेषु, गोषु धेनुषु तदीयदुग्धेषु वा, अश्वेषु अश्वारोहणसुखेषु यत् मधु यत् माधुर्यं अनुभूयते, सुरायां सिच्यमानायां गलादधः प्रवहति द्राक्षासवादौ, औषध्यादिरसविशेषे सोमरसे वा। 'सुरा सुनोतेः' (निरु० १ ११) 'अपां च वा एष ओषधीनां च रसो यत्सुरा (शत० ब्रा० १२.८.१.४) 'अन्नं सुरा' (तै० १.३.३.५)। यत् तत्र उपरि उक्तेषु सर्वेषु यत् मधु मधुरसः तत् मयि भवत्विति प्रार्थये ॥ १८ ॥

अश्विना सारघेण मा मधुनाऽङ्क्तं शुभस्पती ।
यथा वर्चस्वतीं वाचमावदानि जनाँ अनु ॥ १९ ॥

अश्विना । सारघेण । मा । मधुना । अङ्क्तम् । शुभः । पती इति । यथा । वर्चस्वतीम् । वाचम् । आऽवदानि । जनान् । अनु ॥ १९ ॥

**शुभस्पती** शुभस्य कल्याणकारिण: कर्मण:, यद्वा दीप्तिमत: शुभ-गुणसमूहस्य **पती** स्वामिनौ **अश्विना** हे अश्विदेवौ **सारघेण** माक्षिकेन **मधुना** मधुरसेन, तद्वत् माधुर्यव्यवहारेण वा । सरघा मधुमक्षिका तज्जातेन, सरं गतिमन्तं घातयति 'अन्येष्वपि दृश्यते' (पा० ३.२.१०१) इति सूत्रेण 'अन्येभ्योऽपि दृश्यते' (वा. ३.२.४८) इति वार्तिकेन वा अण्यन्तात् हन्तेर्डः, 'णेरनिटि' (पा० ६.४.५१) इति णिलोप:, 'टे:' (पा० ६.४.१४३) इत्यनेन टिलोप: । यद्वा रङ्घण रघ:, 'रघि गतौ' (१०७ भ्वा०) । 'खनो घ च' (पा० ३.३.१२५) नुम् न, सह रघेण गत्या वर्तते इति । **मा** माम् **अङ्क्तम्** संयोजयतम् । **यथा** येनाहं **वर्चस्वतीं** तेजस्विनी **वाचं** वाणीं **जनान्** **अनु** मनुष्यान् प्रति **आवदानि** ब्रवाणि । किञ्चित्पाठभेदेन पुनरुक्तोऽयं मन्त्र: ( अथर्व० ६.६९.२ ) इति ॥ १९ ॥

**विशेष:**—अस्यैव मन्त्रस्य काण्डान्तर्गतस्य पुरस्तात् सायणभाष्यं पाठकानाम् उपकृतये यथावत् इहोपनस्यते । हे **अश्विना** अश्विनौ **शुभस्पती** शोभमानाया: सूर्याया: शोभाहेतोरलङ्कारस्य वा **पती** भर्तारौ **मा** मां **सारघेण** सरघा मधुमक्षिका तत्संपादितेन **मधुना** **अङ्क्तम्** अभिषिञ्चितं संयोजयतम् । 'अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु' इत्यस्मात् लोण्मध्यमे श्नसोरल्लोपे श्नान्नलोपे च कृते रूपम् । **यथा** खलवहं **भर्गस्वतीम्** दीप्तिमतीं मधुरां **वाचं** **जनान्** मनुष्यान् **अनु** अनुलक्ष्य **आवदामि** अभिलक्ष्य उच्चारयामि । तथा मां मधुना सिञ्चतमित्यर्थ: । ( अथर्व० ६.६९.२ )

**स्तनयित्नुस्ते वाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यां दिवि ।**
**तां पशव उप जीवन्ति सर्वे तेनो सेषमूर्जं पिपर्ति ॥ २० ॥**

**स्तनयित्नुः । ते । वाक् । प्रजाऽपते । वृषा । शुष्मम् । क्षिपसि । भूम्याम् । दिवि । ताम् । पशवः । उप । जीवन्ति । सर्वे । तेनो इति । सा । इषम् । ऊर्जम् । पिपर्ति ॥ २० ॥**

**प्रजापते** हे प्रजापालक ! **स्तनयित्नुः** मेघस्य गर्जनं **ते** तव **वाक्** वाणी । त्वं **वृषा** वर्षणशीलोऽसि । **शुष्मम्** जलरूपं वीर्यं **भूम्यां** पृथिव्यां

**दिवि** द्युलोकेऽपि च **क्षिपसि** प्रवाहयसि । **ताम्** वर्षामाश्रित्य **सर्वे पशवः** सर्वे प्राणिनः **उपजीवन्ति** प्राणन्ति । **तेन उ** जलरूपेण वीर्येणैव **सा** गर्जनारूपा वाक् **इषम्** 'इष्यते प्राणिभिर्जीवनायेति', **अन्नम् ऊर्जं** वलं च **पिपर्ति** 'पृ पालनपूरणयोः'(१०८६ जुहो० पर०) पूरयतीति ॥ २० ॥

पृथिवी दण्डोऽन्तरिक्षं गर्भो द्यौः कशा
विद्युत् प्रकशो हिरण्ययो बिन्दुः ॥ २१ ॥

पृथिवी । दण्डः । अन्तरिक्षम् । गर्भः । द्यौः । कशा ।
विऽद्युत् । प्रऽकशः । हिरण्ययः । बिन्दुः ॥ २१ ॥

अस्याः मधुकशायाः **पृथिवी दण्डः** दण्डस्थानीयः, यतो हि कशा दण्डेन गृह्यते, एवमेव विराड्रूपाया मधुकशाया अपि ग्रहणं सर्वप्रथमं पृथिवीद्वारा जायते । **अन्तरिक्षं गर्भः** मध्यस्थानीयः, यतो हि मधु समाकृष्य तत्र निधीयते । **द्यौः कशा** मध्वाकर्षणकर्त्री । **विद्युत् प्रकशः** कशायाः प्रक्षेपणम् । 'कश गतिशासनयोः शब्दे च' (८६० भ्वा०) पचाद्यच्, प्रकृष्टा गतिः । **बिन्दुः** 'बिदि अवयवे' (६४ भ्वा० पर०) 'शॄ स्वॄस्निहि०' (उणा० १.१०) इति उ-प्रत्ययः । मधुबिन्दुः, यः कशया गृह्यते स **हिरण्ययः** हिरण्मयो वर्णेन भवति ॥ २१ ॥

यो वै कशायाः सप्त मधूनि वेद मधुमान् भवति ।
ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च
मधु सप्तमम् ॥ २२ ॥

यः । वै । कशायाः । सप्त । मधूनि । वेद । मधुऽमान् । भवति ।
ब्राह्मणः । च । राजा । च । धेनुः । च । अनड्वान् ।
च । व्रीहिः । च । यवः । च । मधु । सप्तमम् ॥ २२ ॥

**यः** जनः, **वै** अवधारणे । **कशायाः सप्त मधूनि** सप्त संख्याकानि मधूनि **वेद** जानाति स पुरुषः **मधुमान्** मधुयुक्तः स्वयं मधुमयश्च भवति । कानि तानि मधूनि ? उच्यते-**ब्राह्मणः च राजा च धेनुः च, अनड्वान्, च, व्रीहिः च यवः च सप्तमं** स्वयं **मधु** माक्षिकं भवति । एते सर्वे

मानवजीवनं मधुमयं विदधति। अतः ब्राह्मणादयोऽपि मधुशब्देन प्रोक्ताः वेदेषु ॥ २२ ॥

मधुमान् भवति मधुमदस्याहार्यं भवति ।
मधुमतो लोकान् जयति य एवं वेद ॥ २३ ॥

मधुऽमान् । भवति । मधुऽमत् । अस्य । आऽहार्यम् । भवति । मधुऽमतः । लोकान् । जयति । यः । एवम् । वेद ॥ २३ ॥

स जनः **मधुमान्** माधुर्योपेतः **भवति अस्य** पुरुषस्य यत् किञ्चित् **आहार्यम्** आ+'हृञ् हरणे' (८९९ भ्वा० उभ०) ण्यत्। आहरणयोग्यं भक्ष्यभोज्यादिकं वा तत् **मधुमत्** मधुमयं **भवति**। स च **मधुमतः लोकान्** मरणानन्तरं मधुमयान् लोकान् **जयति यः एवं** मधुरहस्यं **वेद** विजानाति ॥ २३ ॥

यद् वीध्रे स्तनयति प्रजापतिरेव तत् प्रजाभ्यः प्रादुर्भवति ।
तस्मात् प्राचीनोपवीतस्तिष्ठे प्रजापतेऽनु मा बुध्यस्वेति ।
अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते य एवं वेद ॥ २४ ॥

यत् । वीध्रे । स्तनयति । प्रजाऽपतिः । एव । तत् । प्रऽजाभ्यः । प्रादुः । भवति । तस्मात् । प्राचीनऽउपवीतः । तिष्ठे । प्रजाऽपते । अनु । मा । बुध्यस्व । इति । अनु । एनम् । प्रऽजाः । अनु । प्रजाऽपतिः । बुध्यते । यः । एवम् । वेद ॥ २४ ॥

**यत् वीध्रे** विशिष्टे इन्धे प्रकाशिते बाह्याकाशे वि+'ञि इन्धी दीप्तौ' (१४४९ रुधा० आ०) औणादिको रक्प्रत्ययः। यद्वा हृदयाकाशे। **स्तनयति** मेघो गर्जति, **प्रजापतिः एव तत्** गर्जनरूपेण **प्रजाभ्यः** जनेभ्यः कृते **प्रादुर्भवति** प्रकटो भवति इति मन्तव्यम्। **तस्मात्** हेतोः **प्राचीनोपवीतः** दक्षिणकन्धे यज्ञोपवीती सन् **तिष्ठे** तिष्ठामि। हे **प्रजापते!** त्वं **मा** माम् **अनुबुद्ध्यस्व इति** अनुजानीहि, अनुगृहाण वा। **यः एवं वेद** मधुरहस्यं विजानाति **एनं** तत्त्ववेत्तारम् **अनु प्रजाः प्रजापतिः** च **अनुबुद्ध्यते** अनुगृह्णाति॥ २४ ॥

# द्वितीयं सूक्तम् : कामः (सङ्कल्पः)

(१–२५) ऋषिः–अथर्वा। देवता–कामः। छन्दः–त्रिष्टुप्;* ५ अतिजगती; ७,१४, १५, १७, १८, २१, २२ जगती; ८ द्विपदा आर्षी पङ्क्तिः; ११, २०, २३ भुरिक्; १२ अनुष्टुप्; १३ द्विपदार्ची अनुष्टुप्, १६ चतुष्पदा शक्वरीगर्भा परा जगती।

**विनियोगः**—'सपत्नहनम्' इति सूक्तं कामदेवताकम्। काम इच्छारूपो देवः। तं सम्बोध्य सपत्नक्षयं प्रार्थयते। तदेवम् 'सपत्नहनं' इत्यर्थसूक्तेन अभिचारकर्मणि ऋषभं संपातवन्तं कृत्वा द्वेष्याभिमुखं विसृजति। तथा तत्रैव कर्मणि आश्वत्थीः स्वयंपतिताः समिध आदधाति। तथा च सूत्रम्–'सपत्नहनम्' इत्यृषभं संपातवन्तम् अतिसृजति। आश्वत्थीखपत्नाः स्वयम् (कौ० सू० ४९, १–३) इति। तथैव सोमयागे अनूबन्ध्यायाम् अपराजितायां तिष्ठन्त्यां कामदेवता-नमस्कारे अस्य सूक्तस्य विनियोगः। तदुक्तं वैताने–"अनूबन्ध्यायाम् अपराजितायां तिष्ठन्त्यां 'सपत्नहनम्' इति कामं नमस्करोति (वैतान-श्रौ० सू० २४.१०) इति।

**स॒प॒त्न॒हन॑मृष॒भं घृ॒तेन॒ कामं॑ शिक्षामि ह॒विषाज्ये॑न।**
**नी॒चैः स॒पत्ना॒न् मम॑ पादय॒ त्वम॒भिष्टु॑तो मह॒ता वी॒र्ये॒णि॥ १॥**

**स॒प॒त्न॒ऽहन॑म्। ऋ॒ष॒भम्। घृ॒तेन॑। काम॑म्। शि॒क्षा॒मि॒। ह॒विषा॑। आज्ये॑न। नी॒चैः। स॒ऽपत्ना॑न्। मम॑। पा॒द॒य॒। त्वम्। अ॒भिऽस्तु॑तः। म॒ह॒ता। वी॒र्ये॒णि॥ १॥**

अस्मिन् सूक्ते कामः सङ्कल्पाधिष्ठातृदेवः, न त्वासक्तिपरः कामदेवः। **सपत्नहनं** शत्रुहन्तारम् **ऋषभं** बलवीर्योपेतं कामं सङ्कल्प-समुद्भूतां कामदेवतां **घृतेन** रेतसा 'रेतो वै घृतम्' (शत० ब्रा० ९. २. ३. ३४) 'तेजो वा आज्यम्' (ता० ब्रा० १२. १०. १८, तै० सं० १. ६. ३. ४) 'काम आज्यम्' (तै० सं० सं० ३. १. ४. १५) **आज्येन** आङ्-उपसर्गपूर्वकात् 'अञ्जु व्यक्तिम्रक्षणकान्तिगतिषु' (१४५९ रुधा०

*अनुल्लिखितसंख्यकाः सर्वा ऋच एतच्छन्दस्काः ज्ञेयाः।

प० ) इत्यस्मात् क्यप् । हविषा तेजसा आहुत्या शिक्षामि संसाधयामि । हे काम ! महता वीर्येण रेतसा, पराक्रमेण वा अभिस्तुतः संस्तुतः, प्रशंसितः त्वं मम सपत्नान् शत्रून् नीचैः पादय पातय मम शत्रुम् अधस्पदं कुर्वित्यर्थः ।। १ ।।

**यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति ।**
**तद् दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम् ।। २ ।।**

**यत् । मे । मनसः । प्रियम् । न । चक्षुषः । यत् । मे । बभस्ति । न । अभिऽनन्दति । तत् । दुःऽस्वप्न्यम् । प्रति । मुञ्चामि । सऽपत्ने । कामम् । स्तुत्वा । उत् । अहम् । भिदेयम् ।। २ ।।**

**यत् मे** मम **मनसः** अन्तःकरणस्य **न प्रियं** प्रीतिकरं नास्ति, **न चक्षुषः** न नेत्रयोः, **यत् मे बभस्ति** भर्त्सयति 'भस भर्त्सनदीप्तयोः' (११०० जुहो० पर०)। नाभिनन्दति, न प्रशंसति, एतादृशं **तत् दुःष्वप्न्यं** दुष्टस्वप्नं तदुत्पन्नं दुष्टविचारादिकं च, **सपत्ने** शत्रुम् प्रति **मुञ्चामि** प्रक्षिपामि । तं **कामं स्तुत्वा** प्रशस्य, यद्वा प्रशंसया प्रवृद्धय **अहम् उद्भिदेयम्** शत्रुं भित्वा उद्गतो भवामि। उत्+'भिदिर् विदारणे' (१४४० रुधा० उ०) विधिलिङ् छान्दसः ।। २ ।।

**दुष्वप्न्यं काम दुरितं च कामाप्रजस्तामस्वगतामवर्तिम् ।**
**उग्र ईशानः प्रति मुञ्च तस्मिन् यो अस्मभ्यमंहूरणा चिकित्सात् ।। ३ ।।**

**दुःऽस्वप्न्यम् । काम । दुःऽइतम् । च । काम । अप्रजस्ताम् । अस्वगताम् । अवर्तिम् । उग्रः । ईशानः । प्रति । मुञ्च । तस्मिन् । यः । अस्मभ्यम् । अंहूरणा । चिकित्सात् ।। ३ ।।**

हे **काम** अस्माकं **दुःष्वप्न्यं** दुःस्वप्नं तज्जन्यं वा दुर्विचारादिकम्, **दुरितं** दुर्गति कष्टं वा । **अप्रजस्तां** प्रजायाः सन्ततेः अभावम् । अप्रजा-

शब्दात् 'नित्यमसिच् प्रजामेधयोः' (पा० ५. ४. १२२.) इति सूत्रेण असिच्प्रत्ययः। **अस्वगतां** निर्धनतां च **अर्वातं** वृत्यभावं जीवननिर्वाह-साधनाभावं तदेतत् सर्वं हे **उग्र** उद्गीर्णबल काम! **ईशानः** सर्वेषां शासकः सन् **तस्मिन्** तं शत्रुं **प्रतिमुञ्च** प्रक्षिप, **यः अस्मभ्यम् अंहूरणा** कुटिलानि पापकर्माणि **चिकित्सात्** अभिवाञ्छेत्। 'अंहूरणा' इत्यत्र आङ् पूर्वात् 'हन हिंसागत्योः'(१०१२ अदा०) इत्यस्मात् कुः प्रत्ययः। 'मृगय्वादयश्च' (उणा० १.३७) इत्यनेन उपसर्गस्य ह्रस्वत्वं नकारस्य पूर्वप्रवर्तनं च निपातनादेव। अंहुः पापम्, अंहुःशब्दात् मत्वर्थीयो रः। अंहुर एव अंहूरणः, न-प्रत्ययः स्वार्थे, उकारस्य दीर्घत्वं च छान्दसम् ॥ ३ ॥

**नुदस्व काम प्र णुदस्व कामावर्तिं यन्तु मम ये सपत्नाः।**
**तेषां नुत्तानामधमा तमांस्यग्ने वास्तूनि निर्दह त्वम् ॥ ४॥**

**नुदस्व। काम। प्र। नुदस्व। काम। अवर्तिम्। यन्तु।**
**मम। ये। सऽपत्नाः। तेषाम्। नुत्तानाम्। अधमा।**
**तमांसि। अग्ने। वास्तूनि। निः। दह। त्वम् ॥ ४ ॥**

हे **काम**। **नुदस्व** अस्मान् प्रेरय। हे **काम**! कामस्य पुनः पुनः स्मरणं प्रशंसया अभिवृद्ध्यर्थम्। **प्रणुदस्व** अभिवृद्ध्यै प्रेरय। **मम ये सपत्नाः** शत्रवः ते **अवर्तिं** जीविकाभावं निर्वृत्तितां प्राप्नुवन्तु। **अग्ने**! हे अग्निवत् तेजस्विन् काम! **अधमा तमांसि** निविडान्धकारवत्सु निकृष्टगर्तेषु **नुत्तानां** पतितानां **तेषां** शत्रूणां **वास्तूनि** गृहाणि **त्वं निर्दह** भस्मसात् कुरु ॥ ४ ॥

**सा ते काम दुहिता धेनुरुच्यते यामाहुर्वाचं कवयो विराजम्।**
**तया सपत्नान् परि वृङ्ग्धि ये मम पर्येनान् प्राणः पशवो जीवनं वृणक्तु ॥ ५ ॥**

**सा। ते। काम। दुहिता। धेनुः। उच्यते। याम्। आहुः।**
**वाचम्। कवयः। विऽराजम्। तया। सऽपत्नान्। परि।**

वृङ्ग्धि । ये । मम॑ । परि॑ । एनान् । प्राणः । पशवः ।
जीवनम् । वृणक्तु ॥ ५ ॥

हे **काम** ! **सा ते** तव **दुहिता** कामानां दोग्ध्री, प्रपूरयित्री पुत्री **धेनुः** धेनुनाम्ना **उच्यते यां** धेनुं **कवयः** क्रान्तदर्शिनो महर्षयः **विराजं वाचम् आहुः** विराट्नाम्नीं वाणीं वेदवाणीं वा कथयन्ति । **तया** वाचा **ये मम** सपत्नाः सन्ति तान् **सपत्नान्** परिवृङ्धि परितः वर्जय, दूरीकुरु । नैतावदेव, किं तर्हि ? **एनान्** अरीन् **प्राणः** तदुपलक्षितं बलं **पशवः** गवाश्वादयः पुनः **जीवनम् अपि** आयुरपि **परिवृणक्तु** विहाय दूरं गच्छन्तु ॥ ५ ॥

कामस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितुः सवेन ।
अग्नेर्होत्रेण प्र णुदे सपत्नांछम्बीव नावमुदकेषु धीरः ॥ ६ ॥

काम॑स्य । इन्द्र॑स्य । वरु॑णस्य । राज्ञः । विष्णोः । बलेन ।
सवितुः । सवेन॑ । अग्नेः । होत्रेण॑ । प्र । नुदे । सऽपत्नान् ।
शम्बीऽइव । नाव॑म् । उदकेषु । धीरः ॥ ६ ॥

**कामस्य** सङ्कल्पाधिष्ठातृदेवस्य, **इन्द्रस्य** देवाधिपतेः, **राज्ञः वरुणस्य विष्णोः** च एतेषां देवानां **बलेन सवितुः** सवप्रेरकस्य सवितृदेवस्य सूर्यनारायणस्य **सवेन** प्रेरणया **अग्नेः होत्रेण** अग्निहोत्रनामकेन कर्मणा च अहं **सपत्नान्** शत्रून् **प्रणुदे** प्रेरयामि, दूरं प्रेषयामीत्यर्थः । तत्र दृष्टान्तः— **इव** यथा **धीरः** धैर्यवान् **शम्बी** नाविकः **उदकेषु** गभीरेषु जलेषु समुद्रनद्यादिषु **नावं** स्वपोतं प्रेरयति, सुदूरं नयतीत्यर्थः । 'शम्ब इति वज्र नाम, 'शमयतेर्वा शातयतेर्वा' (निरु० ५.७२) । शम्बी वज्रवान्, गृहीतवज्रतुल्यदण्डहस्तः ॥ ६ ॥

अध्यक्षो वाजी मम काम उग्रः कृणोतु मह्यमसपत्नमेव ।
विश्वे देवा मम नाथं भवन्तु सर्वे देवा हवमा यन्तु म इमम् ॥ ७ ॥

अधिऽअक्षः । वाजी । मम॑ । कामः । उग्रः । कृणोतु । मह्य॑म् ।
असपत्नम् । एव । विश्वे । देवाः । मम॑ । नाथम् । भवन्तु ।
सर्वे । देवाः । हव॑म् । आ । यन्तु । मे । इमम् ॥ ७ ॥

**मम अध्यक्षः** अधिपतिः अधिष्ठाता वा, **वाजी** वेगवान्, अन्नवान् वा अयं **कामः उग्रः** तीक्ष्णः अस्ति। सः **मह्यम्** माम् **असपत्नम् एव** एव-कारोऽत्र अत्यन्तायोगव्यवच्छेदकः, शत्रुरहितमेव **कृणोतु** करोतु। **विश्वे देवाः** सर्वे देवाः, विश्वेदेवनामका देवाः वा, **मम नाथं भवन्तु** मम याच्ञापूर्तिकराः स्वामिनः भवन्तु। 'नाथृ याच्ञोपतापैश्वर्याशीःषु' (६ भ्वा० आत्म०), अच्। एते **सर्वे देवाः मे** मम **इमं हवम्** यज्ञम् **आयन्तु** शत्रुनाशाय समारब्धेऽस्मिन् यज्ञे समायान्तु इत्यर्थः ॥ ७ ॥

इ॒दमाज्यं॑ घृ॒तव॑ज्जुषा॒णाः काम॑ज्येष्ठा इ॒ह मा॑दयध्वम्।
कृ॒ण्वन्तो॑ मह्य॑मसप॒त्नमे॒व ॥ ८ ॥

इ॒दम्। आज्य॑म्। घृ॒तऽव॑त्। जु॒षा॒णाः। काम॑ऽज्येष्ठाः। इ॒ह। मा॒द॒य॒ध्व॒म्। कृ॒ण्वन्तः॑। मह्य॑म्। अ॒स॒प॒त्नम्। ए॒व ॥ ८ ॥

**घृतवत्** तेजोयुक्तं पुष्टिप्रदं वा, **इदम् आज्यं** घृतं **जुषाणाः** सेवमानाः **कामज्येष्ठाः** काम एव ज्येष्ठो येषां ते, कामप्रमुखा देवाः! यूयं **मह्यं** माम् **असपत्नम् एव** सर्वथा शत्रुरहितं **कृण्वन्तः** कुर्वन्तः **इह** अस्मिन् यज्ञे **मादयध्वम्** आनन्दयत ॥ ८ ॥

इ॒न्द्रा॒ग्नी का॑म स॒रथं॑ हि भू॒त्वा नी॒चैः स॒पत्ना॑न् मम॑ पादयाथः।
तेषां॑ प॒न्नाना॑मध॒मा त॒मांस्य॑ग्ने वास्तू॑न्यनु॒निर्द॑ह॒ त्वम् ॥ ९ ॥

इ॒न्द्रा॒ग्नी इति॑। का॒म॒। स॒ऽरथ॑म्। हि। भू॒त्वा। नी॒चैः। स॒ऽप॒त्ना॑न्। मम॑। पा॒द॒या॒थः॒। तेषा॑म्। प॒न्नाना॑म्। अ॒ध॒मा। तमां॑सि। अग्ने॑। वास्तू॑नि। अ॒नु॒ऽनिर्द॑ह। त्वम् ॥ ९ ॥

हे **काम**! त्वं **इन्द्राग्नी** ब्रह्मक्षत्रशक्त्योरधिपतीभ्यां इन्द्राग्नीभ्यां सह **हि** निश्चयेन **सरथं भूत्वा** समानरथारूढौ भूत्वा **मम सपत्नान्** शत्रून् **नीचैः पादयाथः** पातय, पादयते लेटि एकवचनस्थाने द्विवचनम्, 'तिङां तिङो भवन्ति' (वा० पा० ७.१.३९)। हे अग्ने! अग्निवत् शत्रुदाहक काम! **अधमा तमांसि पन्नानाम्** 'पद गतौ' क्तः प्रत्ययः, गहनेऽन्धकारे पतितानां **तेषां** शत्रूणाम् **वास्तूनि** गृहाणि अनु लक्ष्यीकृत्य **निर्दह** भस्मीकुरु ॥ ९ ॥

जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान् ।
निरिन्द्रिया अरसाः सन्तु सर्वे मा ते जीविषुः कतमच्चनाहः ॥ १० ॥

जहि । त्वम् । काम । मम । ये । सऽपत्नाः । अन्धा ।
तमांसि । अव । पादय । एनान् । निःऽइन्द्रियाः । अरसाः ।
सन्तु । सर्वे । मा । ते । जीविषुः । कतमत् । चन । अहः ॥ १० ॥

हे **काम** ! **त्वम्** मे मम **ये सपत्नाः** शत्रवः सन्ति तान् जहि व्यापादय । **एनान् अन्धा तमांसि** तमोबहुले अन्धे गर्ते **अव पादय** प्रक्षिप । सर्वे ते मम शत्रवः **निरिन्द्रियाः** इन्द्रियशक्तिशून्याः **अरसाः** अन्नरसैः शून्याः । रस इति अन्ननाम (निघ० २.७), 'रसो वै मधु' (शत० ब्रा० ६.४.३.२) । **सन्तु** । **ते सर्वे** शत्रवः **कतमत् चन** अहः दिनैकमपि **मा जीविषुः** जीवनं न धारयेयुरिति ॥ १० ॥

अवधीत् कामो मम ये सपत्ना उरुं लोकमकरन्मह्यमेधतुम् ।
मह्यं नमन्तां प्रदिशश्चतस्रो मह्यं षडुर्वीर्घृतमा वहन्तु ॥ ११ ॥

अवधीत् । कामः । मम । ये । सऽपत्नाः । उरुम् । लोकम् ।
अकरत् । मह्यम् । एधतुम् । मह्यम् । नमन्ताम् । प्रऽदिशः ।
चतस्रः । मह्यम् । षट् । उर्वीः । घृतम् । आ । वहन्तु ॥ ११ ॥

**ये मम सपत्नाः** अरयस्तान् **कामः अवधीत्** हतवान् । **मह्यम् एधतुं** प्रवृद्धयै 'एध वृद्धौ' तुमुन् प्रत्ययः, इडभावश्छान्दसः । यद्वा-एधतुं प्रवर्धकं 'एधिवह्योश्च तुः' (उणा० १.७७) एध+तुः । **लोकम् ऊरुम्** विस्तृतं **अकरत्** अकरोत् । **चतस्रः** पूर्वादयः **प्रदिशः** प्रकृष्टा दिशः **मह्यं नमन्ताम्** मां प्रति नम्राः भवन्तु । **षडुर्वीः** उर्वीः विशालाः आग्नेयादयोऽवान्तराश्चतस्रो नीचोच्चदिशौ चेति षट्संख्यकाः दिशः **मह्यं** मयि **घृतं** तेजः, तदुपलक्षितान् पुष्टिप्रदान् पदार्थान् वा **आवहन्तु** प्रापयन्तु ॥ ११ ॥

तेऽधराञ्चः प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न सायकप्रणुत्तानां पुनरस्ति निवर्तनम् ॥ १२ ॥

ते । अधराञ्चः । प्र । प्लवन्ताम् । छिन्ना । नौःऽइव । बन्धनात् । न । सायकऽप्रनुत्तानाम् । पुनः । अस्ति । निऽवर्तनम् ॥ १२ ॥

**बन्धनात्** रज्जुबन्धनात् **छिन्ना** पृथग्भूता **नौः इव** तरणीरिव **ते** शत्रवः **अधराञ्चः** निम्नाभिमुखं गच्छन्तः **प्र प्लवन्तां** प्रवहन्तु । **सायक-प्रणुत्तानाम्** शरवर्षैः दूरं प्रचोदितानां शत्रूणां **पुनः निवर्तनं** पुनरागमनं **न अस्ति** न भवति । किञ्चित्पाठभेदेन पुनरुक्तोऽयं मन्त्रः (अथर्व० ३.६.७) ॥ १२ ॥

**विशेषः**—अस्यैव मन्त्रस्य काण्डान्तर्गतस्य **पुरस्तात्** सायण-भाष्यमुपन्यस्यते–पूर्वोक्ता द्विविधाः शत्रवः **अधराञ्चः** अधोमुखम् अञ्चन्तो गच्छन्तः **प्र प्लवन्ताम्** नदीप्रवाहस्य उपर्येव गच्छन्तु, न कदाचित पारं प्राप्नवन्तु इत्यर्थः । अधरशब्दोपपदाद् अञ्चतेः क्विन् । प्लवन्ताम् इति । 'च्युङ्प्लुङ् गतौ' (भ्वादिः) । तत्र दृष्टान्तः–बन्धनात् । बध्यतेऽस्मि-न्निति बन्धनं तोरवक्षादिकम्, बध्नात्यनेन नावमिति वा बन्धनं रज्जुः । ततः **छिन्ना** वियुक्ता **नौरिव** । सा यथा तीरम् अप्राप्ता नदीप्रवाहेण अधोनीयते तद्वत् । [अश्वत्थस्य महिमप्रख्यापनार्थं पारप्राप्तिशङ्कां वारयति—**न** इति ।] **वेबाधप्रणुत्तानां** वैबाधः खदिरोत्पन्नोऽश्वत्थः, तेन प्रणुत्तानां प्रणुन्नानाम् अवाङ्मुखं प्रेरितानां शत्रूणां **पुर्निवर्तनम्** पुनरागमनं न **अस्ति** । 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (पा० ८.२.५६) इति विकल्पनात् निष्ठानत्वाभावः । (अथर्व० ३.६.७)

अग्निर्यव इन्द्रो यवः सोमो यवः ।
यवयावानो देवा यावयन्त्वेनम् ॥ १३ ॥

अग्निः । यवः । इन्द्रः । यवः । सोमः । यवः । यवऽयावानः । देवाः । यवयन्तु । एनम् ॥ १३ ॥

**अग्निः यवः** संयोजक-वियोजक-शक्तियुक्तः 'यु मिश्रणामिश्रणयोः' (१०३३ अदा०) तस्मात् 'नन्दिग्रहिपचा०' (पा० ३.१.१३४) अच्, 'ऋदोरप्'(पा० ३.३.५७) वा । **इन्द्रः यवः, सोमः यवः** इन्द्रासोमावपि तथैव उभयविधशक्तिमन्तौ स्तः । एवं **यवयावानः** यवान् संयुक्तान् वियुक्तान् वा युवन्ति ते, यव+यु इत्यस्मात् 'यु पृषि तक्षि' इत्यनेन

कनिन्, संयुक्तयोर्वियोजयितारः वियुक्तयोश्च संयोजयितारश्च **देवाः एनं** मम शत्रुं **यावयन्तु** पृथक् कुर्वन्तु, मित्रञ्च संयोजयन्तु ॥ १३ ॥

असंर्ववीरश्चरतु प्रणुत्तो
द्वेष्यो मित्राणां परिवर्ग्य१ः स्वानाम् ।
उत पृथिव्यामव स्यन्ति विद्युत
उग्रो वो देवः प्र मृणत सपत्नान् ॥ १४ ॥

असंर्वऽवीरः । चरतु । प्रऽनुत्तः । द्वेष्यः । मित्राणाम् । परिऽवर्ग्यः । स्वानाम् । उत । पृथिव्याम् । अव । स्यन्ति । विऽद्युतः । उग्रः । वः । देवः । प्र । मृणत । सऽपत्नान् ॥ १४ ॥

**असर्ववीरः** वीरपुत्रादिभिः योद्धृवर्गैश्च सर्वैः रहितः, **प्रणुतः** दूरे प्रक्षिप्तः मे शत्रुः **मित्राणां द्वेष्यः** स्वीयसुहृदाम् अप्रियः शत्रुर्वा **स्वानां परिवर्ग्यः** ज्ञातिसम्बन्धीनां परिवर्जनीयः त्याज्यश्च भूत्वा **चरतु** विचरतु । परि+'वृजी वर्जने' (१०२९ अदा० आ०) ण्यन्, 'चजोः कु घिण्यतोः' (पा० ७.३.५२) 'अजिव्रज्योश्च' (पा० ७.३.१०) वृद्ध्यभावः, कुत्वम् । नैतावदेव, किं तर्हि ? **उत** अपि च **पृथिव्यां** भूमौ **विद्युतः** अशनयः **अवस्यन्ति** प्राणान् विमोचयन्ति, विमोचयन्तु । अव+'षोऽन्तकर्मणि' (११४७ दिवा० पर०), 'स्यति रुपसृष्टो विमोचने' (निरु० १.१७) अस्य प्राणान् विमोचयन्तु, ता अपि एव मारयन्तु इत्यर्थः । **उग्रः वः देवः** स प्रवलो युष्माकं रुद्रो देवः । 'उग्र इति रुद्रस्य नाम' (शत० ब्रा० ६. १. ३. १८) । **सपत्नान्** शत्रून् **प्रमृणत** प्रकर्षेण हन्यात् ॥ १४ ॥

च्युता चेयं बृहत्यच्युता च
विद्युद् बिभर्ति स्तनयित्नूंश्च सर्वान् ।
उद्यन्नादित्यो द्रविणेन तेजसा
नीचैः सपत्नान् नुदतां मे सहस्वान् ॥ १५ ॥

च्युता । च । इयम् । बृहती । अच्युता । च विऽद्युत् । बिभर्ति ।

स्तनयित्नून् । च । सर्वान् । उत्ऽस्यन् । आदित्यः । द्रविणेन । तेजसा । नीचैः । सऽपत्नान् । नदताम् । मे । सहस्वान् ॥ १५॥

च्युता च पृथिवीमनुगता 'च्युङ् गतौ' (९५५ भ्वा०) इत्यस्मात् क्तप्रत्ययः, टाप् । अच्युता च पृथिवीं न गता इयं बृहती द्युसम्बद्धा-ऽन्तरिक्षसम्बद्धा महती श्रीः, 'बृहतोपरिवृंहणात्' (निरु० ९.७), 'श्रीर्वै बृहती' (कौ० २८.४), 'द्युलोकोऽपि परिवृंहति सूर्य-रश्मिभिः 'बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठित-स्तपति' ( गोप० उत्त० ५.७ ), 'अन्तरिक्षलोकोऽपि परिवृंहति मेधादिभिः। 'अयं मध्यमो (लोकः अन्तरिक्षं) बृहती' (ता० ब्रा० ७. ३.९) विद्युत् तडित् सर्वान् अखिलान् स्तनयित्नून् स्तनयति 'स्तन देवशब्दे' (१८६० चुरा०) इत्यस्मात्' स्तनिहृषि०' (उणा० ३.२९) इत्यनेन इत्नुच्, 'अयामन्ता० (पा० ६. ४.५५) इत्यनेन णेः अय् आदेशः । 'कतमः स्तनयित्नुरित्यशनिः' (शत० ब्रा० ११. ६. ३. ४) । गर्जनयुक्तान् मेघान् अशनिरूपान् वा । बिभर्ति धारयति । सहस्वान् बलवान् अयं उद्यन् उद्गच्छन् आदित्यः सूर्यः द्रविणेन शक्तिरूपेण धनेन तेजसा च मे सपत्नान् शत्रून् नीचैः नुदताम् अधोमुखं प्रेरयतु ॥ १५ ॥

यत् ते काम शर्म त्रिवरूथमुद्भु
ब्रह्म वर्म विततमनतिव्याध्यं कृतम् ।
तेन सपत्नान् परि वृङ्ग्धि ये मम
पर्येनान् प्राणः पशवो जीवनं वृणक्तु ॥ १६ ॥

यत् । ते । काम । शर्म । त्रिऽवरूथम् । उत्ऽभु । ब्रह्म । वर्म । विऽततम् । अनतिऽव्याध्यम् । कृतम् । तेन । सऽपत्नान् । परि । वृङ्ग्धि । ये । मम । परि । एतान् । प्राणः । पशवः । जीवनम् । वृणक्तु ॥ १६ ॥

हे काम यत् ते तव त्रिवरूथं आध्यात्मिकाधिभौतिकाधिदैविकानि, पृथिव्यन्तरिक्षद्युरूपाणि देह-प्राण-मनोरूपाणि वा वरूथानि रक्षणानि

गृहाणि वा यस्मिन् तत् तादृशम् ।'वरूथं गृहनाम'(निघ०३.४), वरं+ ऊथन्, 'जृवृभ्यामूथन्' (उणा० २.६) इत्यनेन वृञधातो रूथन्-प्रत्ययः । **शर्म** शरणम्, गृहं वा । 'शर्म गृहनाम, शरणं वा' (निघ० ३.४, निरु० ९.१९) यत् **उद्भु** उद्भूतं प्रकटीभूतं प्रत्यक्षं **विततं** विस्तृतम्, **अनतिव्याध्यम्** शत्रुभिरभेद्यम् 'व्यध ताडने' (११८१ दिवा० पर० । ण्यत् । **ब्रह्मवर्म** ब्रह्मात्मकं कवचं कृतम् अस्ति तेन । शेषं पञ्चममन्त्रोत्तरार्धवत् ॥ १६ ॥

येनं देवा असुरान् प्राणुदन्त येनेन्द्रो
दस्यूंनधमं तमों निनायं ।
तेन त्वं कांम मम ये सपत्ना-
स्तानस्माल्लोकात् प्र णुंदस्व दूरम् ॥ १७ ॥

येनं । देवाः । असुरान् । प्रऽअनुंदन्त । येनं । इन्द्रः । दस्यून् । अधमम् । तमः । निनायं । तेनं । त्वम् । काम । ममं । ये । सऽपत्नाः । तान् । अस्मात् । लोकात् । प्र । नुदस्व । दूरम् ॥ १७ ॥

**येन** उपायेन बलेन वा **देवाः** इन्द्रादयः **असुरान्** आसुरबलानि **प्राणुदन्त** दूरं प्रेरितवन्तः, येन च बलेन **इन्द्रः दस्यून्** उपक्षयकर्तॄन् **अधमं तमः** गहनान्धकारे **निनाय** पातयामास, हे **काम** ! **तेन** उपायेन बलेन वा **ये मम सपत्नाः** शत्रवस्तान् **अस्मात् लोकात्** प्रदेशात् **दूरम्** यथा स्यात् तथा, **प्रणुदस्व** बहिष्कुरु ॥ १७ ॥

यथां देवा असुंरान् प्राणुंदन्त यथेन्द्रो दस्यूंनधमं तमों बबाधे ।
तथा त्वं कांम मम ये सपत्नास्तानस्माल्लोकात्
प्र णुंदस्व दूरम् ॥ १८ ॥

यथां । देवाः । असुंरान् । प्रऽअनुंदन्त । यथां ।
इन्द्रः । दस्यून् । अधमम् । तमः । बबाधे । तथां ।

त्वम् । काम । मम॑ । ये । सऽपत्नाः । तान् ।
अस्मात् लोकात् । प्र । नुदस्व । दूरम् ॥ १८ ॥

यथा येन प्रकारेण देवाः…………यथा इन्द्रः अधमं तमः…
अन्धतमसि बबाधे पीडयामास ।………शेषं पूर्वमन्त्रवत् ॥ १८ ॥

कामो॑ जज्ञे प्रथमो नैनं॑ देवा आ॑पुः पितरो न मर्त्याः ।
ततस्त्वम॑सि ज्याया॑न् विश्वहा॑ महांस्तस्मै॑ ते काम
नम इत् कृणोमि ॥ १९ ॥

काम॑ः । जज्ञे । प्रथमः । न । एनम् । देवाः । आपुः । पितर॑ः ।
न । मर्त्या॑ः । तत॑ः । त्वम् । असि । ज्याया॑न् । विश्वहा॑ ।
महान् । तस्मै॑ । ते । काम । नम॑ः । इत् । कृणोमि ॥ १९ ॥

**कामः** सङ्कल्पसम्मिश्रः सात्त्विको भागवतः कामः **प्रथमः** सृष्टेः पूर्वं वर्तमानः **जज्ञे** प्रादुरभूत् । तथा च श्रुतिः—"कामस्तदग्रे समवर्तताधि (ऋ० १०.१२९.४ नासदीयसूक्ते) । **एनम्** कामं **देवाः पितरः मर्त्याः** मनुष्याः **न आपुः** न प्राप्तवन्तः, अस्य रहस्यं न व्यजानन्नित्यर्थः । **ततः** तस्मात् कारणात् हे **काम** ! त्वं देवमनुष्यादिसङ्घात् **ज्यायान्** श्रेष्ठतमः **विश्वहा** विश्वधा सदैव च **महान्** पूज्यः **असि** । अत एव **तस्मै** तादृशोक्तस्वरूपाय **ते** तुभ्यम् **इत्** निश्चयेन, एव **नमः कृणोमि** प्रणमामीत्यर्थः ॥ १९ ॥

याव॑ती द्यावा॑पृथिवी व॑रिम्णा यावदाप॑ः सिष्यदुर्याव॑दग्निः ।
ततस्त्वम॑सि ज्याया॑न् विश्वहा॑ महांस्तस्मै॑ ते काम नम
इत् कृणोमि ॥ २० ॥

याव॑ती इति॑ । द्यावा॑पृथिवी इति॑ । वरिम्णा । याव॑त् । आप॑ः ।
सिस्यदुः । याव॑त् । अग्निः । तत॑ः । त्वम् । असि । ज्याया॑न् ।
विश्वहा॑ । महान् । तस्मै॑ । ते । काम । नम॑ः । इत् ।
कृणोमि ॥ २० ॥

**वरिम्णा** स्वप्रभावस्य शक्तेश्च विस्तारेण **द्यावापृथिवी यावती** यावत्प्रमाणे विद्येते। **आपः** जलानि **यावत्** प्रदेशपर्यन्तं **सिष्यदुः** प्रसुस्रुवुः। 'स्यन्दू प्रस्रवणे' (७६१ भ्वा० आ०) लिटि छान्दसं रूपम्। **यावत् अग्निः** अग्निरपि यावत्प्रमाणं प्रसृतः। शेषं पूर्ववत्। अन्यत्र (अथर्व० ४.६.२) प्रथमचरणसाम्यात् पुनरुक्तवदाभासः ॥ २० ॥

यावतीर्दिशः प्रदिशो विषूचीर्यावतीराशा अभिचक्षणा दिवः।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥ २१ ॥

यावतीः। दिशः। प्रऽदिशः। विषूचीः। यावतीः। आशाः। अभिऽचक्षणा। दिवः। ततः। त्वम्। असि। ज्यायान्। विश्वहा। महान्। तस्मै। ते। काम। नमः। इत्। कृणोमि ॥ २१ ॥

**यावतीः** यावत्प्रमाणाः **दिशः** पूर्वादयः **प्रदिशः** अन्तर्दिशश्च **विषूचीः** विश्वगञ्चतीति यास्ताः व्याप्नुवतीः, **दिवः** द्युलोकस्य **अभिचक्षणाः** अभिचक्षणा, अभि+'चक्षिङ् दर्शने' (१०१७ भ्वा०) ल्युट्। अभितो विस्तृतानि दृश्यानि **यावतीः आशाः** यावत्प्रदेशपर्यन्तं दिक्षु प्रसृतानि। शेषं पूर्ववत् ॥ २१ ॥

यावतीर्भृङ्गा जत्व꣡ः कुरूरवो यावतीर्वघा वृक्षसर्प्यो꣡ बभूवुः।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥ २२ ॥

यावतीः। भृङ्गाः। जत्व꣡ः। कुरूरवः। यावतीः। वघाः। वृक्षऽसर्प्य꣡ः। बभूवुः। ततः। त्वम्। असि। ज्यायान्। विश्वहा। महान्। तस्मै। ते। काम। नमः। इत्। कृणोमि ॥ २२ ॥

**यावतीः** यावत्संख्याकाः **भृङ्गाः** 'भृञ् भरणे' (८९८ भ्वा०) 'भृञः किन्नुट् च' (उणा० १.१२५) गन् कित् नुट च, भ्रमर्यः **जत्वः** 'जनी

प्रादुर्भावे' (११४९ दिवा० आ०) फलिपारिनमि०' (उणा० १.११८), इत्यनेन उ नस्य तः, जतुकाः निशाचरपक्षिविशेषाः 'चिमगादड़' इति लोकभाषाख्याताः, **कुरूरवः** कु+'रु शब्दे' (१०३४ अदा० पर०) इत्यस्मात् 'रुशतिभ्यां क्रुन्' (उणा० ४.१४३) इत्यनेन क्रुन्, छान्दसो दीर्घः, कुत्सितशब्दकारिण्यः, कुररपक्षिणो वा। **यावतीः वघाः** 'वह प्रापणे' (१००४ भ्वा०) वहति प्रवहति धारारूपेण याः, वह+ड टाप्, हस्य घः, शलभाः। **वृक्षसर्प्यः** वृक्षेषु सर्पणशीलाः कीटादयः **बभूवुः** समुत्पन्नाः सन्ति। शेषं पूर्ववत् ॥ २२ ॥

ज्यायान् निमिषतोऽसि तिष्ठतो ज्यायान्त्समुद्रादसि काम मन्यो।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥ २३ ॥

ज्यायान्। निऽमिषतः। असि। तिष्ठतः। ज्यायान्। समुद्रात्। असि। काम। मन्यो इति। ततः। त्वम्। असि। ज्यायान्। विश्वहा। महान्। तस्मै। ते। काम। नमः। इत्। कृणोमि ॥ २३ ॥

मन्यो क्रतुरूप ! 'मन्युर्दैन्ये क्रतौ क्रुधि' इति हैमः (२.३७९) हे काम ! त्वं **निमिषतः** निमेषोन्मेषवतः प्राणिवर्गात् **ज्यायान्** वर्षीयान् असि। पुनः **तिष्ठतः** स्थितिमतः वृक्ष-वनस्पत्यादेः **ज्यायान्** असि। तथैव **समुद्रात्** आन्तरिक्ष्य-पार्थिवोभयात्मकात् अर्णवात् **ज्यायान्** असि। शेषं पूर्ववत् ॥ २३ ॥

न वै वातश्चन काममाप्नोति नाग्निः सूर्यो नोत चन्द्रमाः।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥ २४ ॥

न। वै। वातः। चन। कामम्। आप्नोति। न। अग्निः। सूर्यः। न। उत। चन्द्रमाः। ततः। त्वम्। असि। ज्यायान्। विश्वहा। महान्। तस्मै। ते। काम। नमः। इत्। कृणोमि ॥ २४ ॥

अयं **वातश्चन** वायुरपि **वै** निश्चयेन **कामं न आप्नोति** प्राप्नोति, बलादिषु तत्तुल्यं नेति तात्पर्यम् । एवमेव **अग्निः** प्रसिद्धः, **सूर्यः** दिवाकरः, **उत** अपि च **चन्द्रमाः न**, सर्वे देवास्तं काममतिक्रान्तुं न समर्था इति भावः । शेषं पूर्ववत् ।। २४ ।।

**यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद् वृणीषे ।**
**ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः ।। २५ ।।**

**याः । ते । शिवाः । तन्वः । काम । भद्राः । याभिः । सत्यम् । भवति । यत् । वृणीषे । ताभिः । त्वम् । अस्मान् । अभिऽसंविशस्व । अन्यत्र । पापीः । अप । वेशय । धियः ।। २५ ।।**

हे **काम** ! **याः ते** तव **शिवाः** कल्याणकारिण्यः, **भद्राः** मङ्गलरूपाश्च **तन्वः** व्याप्तयः आत्मस्वरूपाणि वा 'आत्मा वै तनूः' **याभिः** स्वव्याप्तिभिः त्वं **यद् वृणीषे** यद्वरितुमिच्छसि तत् **सत्यं भवति** । हे काम ! त्वं **ताभिः** स्वशक्तिभिः **अस्मान् अभिसंविशस्व** अस्मासु प्रविष्टो भव । **पापीः धियः** पापबुद्धीश्च **अन्यत्र** अस्मान् विहाय अन्यस्मिन् शत्रौ **अपवेशय** प्रवेशयेति भावः ।। २५ ।।

## तृतीयं सूक्तम् : शाला

(१–३१) ऋषि–भृग्वङ्गिराः । देवता–शाला । छन्दः–१–५,९,१४,१६,१८–२०, २२–२४ अनुष्टुप्; ६ पथ्या पङ्क्तिः; ७ पर उष्णिक्; १५ त्र्यवसाना पञ्चपदातिशक्वरी; १७ प्रस्तारपङ्क्तिः; २१ आस्तारपङ्क्तिः; २५, ३१ त्रिपदा प्राजापत्या बृहती; २६ साम्नी त्रिष्टुप्; २७–३० प्रतिष्ठानाम गायत्री; २५–३१ एकावसाना त्रिपदा ।

**विनियोगः**—"'उपमिताम्' इति सूक्तेन शालासवं ददाति सवयज्ञविधानेन स्वर्गकामः" इति विनियोगमाला । सूत्रमपि–'उपमिताम्' इति यच्छालया सह दास्यन् भवति तदन्तर्भवत्यपि हितम्' (कौ० सू० ६६.२२) इत्यादि । वंशसंदंशादिबद्धां शालां दाता प्रतिग्रहीत्रे उद्घाट्य प्रददाति । शाला नाम गहम् ।

उपमितां प्रतिमितामथो परिमितामुत ।
शालाया विश्ववाराया नद्धानि वि चृतामसि ॥ १ ॥

उपऽमिताम् । प्रतिऽमिताम् । अथो इति । परिऽमिताम् । उत ।
शालायाः । विश्वऽवारायाः । नद्धानि । वि । चृतामसि ॥ १ ॥

**विश्ववारायाः** विश्वे सर्वे वारा वरणीयाः श्रेष्ठाः पदार्था यस्याम्, समस्तवरणीयश्रेष्ठपदार्थसमन्वितायाः । यद्वा–विश्वतः सर्वतो वाराः द्वाराणि यस्याम्, सर्वतोमुखीनद्वारोपेतायाः । **शालायाः** गृहस्य **उपमिताम्** उपमायुक्तां वास्तुकलाविद्भिः प्रशंसिताम् । **अथो** अपि च **प्रतिमिताम्** मान-प्रतिमानेन सौन्दर्याकृतिम् । **उत** पुनः **परिमिताम्** सर्वतो विशालपरिमाणोपेताम्, रचनामिति शेषः । अधिकृत्य **नद्धानि** बन्धनानि निर्माणकाले रज्ज्वादिभिः कृतानि बन्धनानि **विचृतामसि** निवारयामः ॥ १ ॥

यत् ते नद्धं विश्ववारे पाशो ग्रन्थिश्च यः कृतः ।
बृहस्पतिरिवाहं बलं वाचा वि स्रंसयामि तत् ॥ २ ॥

यत् । ते । नद्धम् । विश्वऽवारे । पाशः । ग्रन्थिः ।
च । यः । कृतः । बृहस्पतिःऽइव । अहम् । बलम् । वाचा ।
वि । स्रंसयामि । तत् ॥ २ ॥

हे **विश्ववारे** ! **यत् ते** तव **नद्धं** विभिन्नाङ्गजातं बद्धमस्ति, **पाशः** जालः **च ग्रन्थिः** ग्रन्थनं **यः कृतः** निर्माणावसरे कृतः, तदेतत् सर्वम् **अहं विस्रंसयामि** अधः पातयामि, दूरीकरोमि । विपूर्वात् स्रंसनार्थकात् 'स्रंसु' धातोः (७५४ भ्वा०) णिच् । तत्र दृष्टान्तः—**इव** यथा **बृहस्पतिः** बृहत्याः वेदवाण्याः पतिः **वाचा** स्ववाण्या ज्ञानेन वा, **बलम्** इन्द्रियावरणं बलासुरं वा विनाशयति, तद्वत् ॥ २ ॥

आ यंयाम सं बबर्ह ग्रन्थींश्चकार ते दृढान् ।
परूंषि विद्वांछस्तेवेन्द्रेण वि चृतामसि ॥ ३ ॥

आ । य॒या॒म॒ । सम् । ब॒बर्ह॑ । ग्र॒न्थीन् । च॒का॒र॒ । ते॒ । दृ॒ढान् ।
परूं॑षि । वि॒द्वान् । श॒स्ताऽइ॑व । इन्द्रे॑ण । वि । चृ॒ता॒म॒सि॒ ॥ ३ ॥

कारुरसौ त्वाम् **आययाम** ववन्ध, यमितवान्, नियमितवान् वा। **संबबर्ह** सम्यक् परिवृहितां चकार। **ते** तव **ग्रन्थीन्** यत्र तत्र संयोजक-स्थलानि, सन्धि-भागाँश्च **दृढान् चकार** सुपुष्टान् अकरोत्। एवं-भूतास्ताः **इन्द्रेण** इन्द्रस्य साहाय्येन **विचृतामसि** शिथिलीकुर्मः। तत्र दृष्टान्तः—**इव** यथा **विद्वान् शस्ता** शल्यचिकित्सकः 'शसु हिंसायाम्' तृन्। **परूंषि** शरीरस्य पर्वाणि, अङ्गप्रत्यङ्गानि च। यथा स रुग्णानि अङ्गानि पृथक्करोति, स्वस्थानि च सन्दधाति, तथैव वयमपि शालायाः अङ्गप्रत्यङ्गानि पृथक् कुर्मः दृढं च बध्नीम इति तात्पर्यम् ॥ ३ ॥

व॒ंशानां॑ ते नह॑नानां प्रा॒णा॒हस्य॒ तृणं॑स्य च ।
प॒क्षाणां॑ विश्ववारे ते न॒द्धानि॒ वि चृ॑तामसि ॥ ४ ॥

व॒ंशानां॑म् । ते॒ । नह॑नानाम् । प्रा॒णा॒हस्यं॑ । तृणं॑स्य । च॒ ।
प॒क्षाणां॑म् । वि॒श्व॒ऽवा॒रे॒ । ते॒ । न॒द्धानि॑ । वि । चृ॒ता॒म॒सि॒ ॥ ४ ॥

हे **विश्ववारे** ! **ते** तव **वंशानां** वेणुनाम् उत काष्ठदण्डानां **नहनानां** बन्धानां तत्साधनरज्जूनां **प्राणाहस्य** तृणस्य, बन्धनयोग्य-तृणादीनाम्, प्र+आङ् पूर्वकात् 'णह बन्धने' (११६६ दिवा० उ० प०) इत्यस्मात् घञ्। **पक्षाणां च नद्धानि** यत्र तत्र गृहपार्श्वेषु कृतबन्धनानि **विचृतामसि** शालायां निर्मितायां सत्यां विस्रंसयामः ॥ ४ ॥

स॒ंद॒शानां॑ पल॒दा॒नां॒ परि॑ष्वञ्जल्यस्य च ।
इ॒दं मान॑स्य॒ पत्न्या॑ न॒द्धानि॒ वि चृ॑तामसि ॥ ५ ॥

स॒म्ऽद॒ंशानां॑म् । प॒ल॒दानां॑म् । परि॑ऽस्वञ्जल्यस्य । च॒ ।
इ॒दम् । मान॑स्य । पत्न्याः॑ । न॒द्धानि॑ । वि । चृ॒ता॒म॒सि॒ ॥ ५ ॥

**मानस्य पत्न्याः** प्रमाणादीनां रक्षिकायाः यथावश्यकं समुचितं प्रमाणमवधार्य निर्मितायाः शालायाः **संदंशानां** सम्यक्तया दंशनकर्तन-

छिद्रादिकरणसाधनानां यन्त्रविशेषाणां 'कैंची' प्रभृतिनाम्नां **पलदानां** सुवर्णादिधातूनां तोलनयन्त्राणां **परिष्वञ्जल्यस्य** परि-उपसर्गपूर्वात् 'षञ्ज सङ्गे' (९८७ भ्वा० प०) इत्यस्मात् 'मङ्गेरलच्' (उणा० ५.७०) इत्यनेन अलच्। यत्र तत्र संयुक्तस्य कस्यापि कीलकादेः रज्ज्वादेर्वा **नद्धानि** बन्धनानि **विचृतामसि** निवारणयोग्यानि निवारयामः, धारणीयानि च दृढीकुर्मः ॥ ५ ॥

**यानि॑ ते॒ऽन्तः शि॒क्या॒न्या॒बे॒धू र॒ण्या॒य॒ कम् ।**
**प्र ते॒ तानि॑ चृतामसि शि॒वा मा॑नस्य पत्नि न॒ उद्धि॑ता त॒न्वे॒ भव ॥ ६ ॥**

**यानि॑ । ते॒ । अ॒न्तः । शि॒क्या॒नि । आ॒ऽबे॒धुः । र॒ण्या॒य॒ । कम् । प्र । ते॒ । तानि॑ । चृ॒ताम॒सि॒ । शि॒वा । मा॒न॒स्य॒ । प॒त्नि॒ । न॒ः । उद्धि॑ता । त॒न्वे॒ । भ॒व॒ ॥ ६ ॥**

**ते अन्तः** तव मध्ये **यानि शिक्यानि**, 'स्रंसु अधःपतने' (७५४ भ्वा० पर०) इत्यस्मात् यत्, 'स्रंसेः शिः कुट् किच्च' (उणा० ५.१६) इत्यनेन धातोः शिः कित् कुट् च। हर्म्यपृष्ठादधः पात्राद्यवलम्बिकानि 'छींका' इति भाषाभाषितानि। यद्वा–हर्म्यछविवृद्ध्यर्थं काचादि-धातुरचितानेकाकृतीनि 'झाड़फानूस' - प्रभृत्यलङ्करणानि **रण्याय** रमणीयतायै, 'रण्या रमणीयौ संग्रम्यौ वा' (निरु० ६.३३)। **आबेधुः** बद्धानि, **ते** तव **तानि** शिक्यादीनि **प्रचृतामसि** उद्घाटयामः। **शिवा** कल्याणमयी **मानस्य पत्नी** सन्मानस्य रक्षिका शाला **नः उद्धिता** अस्माकमुत्कर्षाय हिता, निहिता, निर्मिता वा **तन्वे भव** सम्पत्ति-सन्तत्यादेर्विस्ताराय भवत्वित्यर्थः ॥ ६ ॥

**ह॒वि॒र्धान॑मग्नि॒शाल॒ं पत्नी॑नां॒ सद॑नं॒ सदः॑ ।**
**सदो॑ दे॒वाना॑मसि देवि शाले ॥ ७ ॥**

**ह॒वि॒ःऽधान॑म् । अ॒ग्नि॒ऽशाल॑म् । पत्नी॑नाम् । सद॑नम् । सद॑ः । सद॑ः । दे॒वाना॑म् । अ॒सि॒ । दे॒वि॒ । शा॒ले॒ ॥ ७ ॥**

**हविर्धानम्** यज्ञयागार्थं हविर्द्रव्यं निधीयते यत्र तत्, अन्नभण्डारादि-स्थानं वा । **अग्निशालम्** यज्ञशाला, पाकशाला वा । **पत्नीनां** स्त्रीणां **सदनम्** अन्तःपुरम्, **सदः** सभास्थानम्, **देवानां सदः** प्रासादः देवपुरुषाणां पूजागृहं वा हे **देवि** ! दिव्यरूपधारिणि शाले ! त्वम् **असि** त्वदन्तः नानाविधानि एतानि स्थानानि निर्मितानि सन्तीति हृदयम् ।। ७ ।।

**अक्षुमोपशं विततं सहस्राक्षं विषूवति ।**
**अवनद्धमभिहितं ब्रह्मणा वि चृतामसि ।। ८ ।।**

**अक्षुम् । आेपशम् । विऽततम् । सहस्रऽअक्षम् । विषुऽवति ।**
**अवऽनद्धम् । अभिऽहितम् । ब्रह्मणा । वि । चृतामसि ।। ८ ।।**

**विषुवति** प्रशस्ता विषुः व्याप्तिर्यस्मिन् तद्वति । 'विष्लृ व्याप्तौ' कुः, मतुप् । विस्तृतगृहे । यद्वा–विषुवति आकाशमध्ये विषुवद्रेखावत् गृहमध्यभागस्थिते समुन्नतस्तम्भगृहे । **अक्षुं** सङ्घातरूपेणाभिव्याप्तम् । **ओपशम्** आ+उप+'शीङ् स्वप्ने' डः अर्श आद्यच्, 'आ समन्तात् उपशेते' इति, समीपस्थितं **विततं** विस्तृतं **सहस्राक्षं** सहस्राणि अक्षाणि गवाक्षा यस्मिन् एतादृशं तत् स्तम्भगृहं **ब्रह्मणा** वेदविदा शिल्पकारेण **अवनद्धं** सुसम्बद्धमिति **अभिहितं** कथितम्, तत् **विचृतामसि** उद्घाटयामः ।। ८ ।।

**यस्त्वा शाले प्रतिगृह्णाति येन चासि मिता त्वम् ।**
**उभौ मानस्य पत्नि तौ जीवतां जरदष्टी ।। ९ ।।**

**यः । त्वा । शाले । प्रतिऽगृह्णाति । येन । च ।**
**असि । मिता । त्वम् । उभौ । मानस्य । पत्नि ।**
**तौ । जीवताम् । जरदष्टी इति जरत्ऽअष्टी ।। ९ ।।**

**शाले ! यः** जनः **त्वा** त्वाम् **प्रतिगृह्णाति** आददाति, स्वकीयां मनुते **येन च** शिल्पिना त्वं **मिता** निर्मिता **असि**, हे **मानस्य पत्नि** ! प्रशंसायाः मान-प्रतिमानस्य वा पालयित्रि, रक्षिके ! **उभौ तौ** गृहस्वामी शिल्पी च **जरदष्टी** जरं वृद्धावस्थापर्यन्तं अष्टिः कार्यव्याप्तिर्ययोस्तौ, पूर्णमायुः अश्नुवाते यौ तौ वा, **जीवताम्** प्राणान् धारयताम् ।। ९ ।।

अमुत्रैनमा गच्छताद् दृढा नद्धा परिष्कृता ।
यस्यास्ते विचृतामस्यङ्गमङ्गं परुष्परुः ॥ १० ॥

अमुत्र । एनम् । आ । गच्छतात् । दृढा । नद्धा । परिष्कृता ।
यस्याः । ते । विऽचृतामसि । अङ्गम्ऽअङ्गम् । परुःऽपरुः ॥ १० ॥

हे **शाले** ! **यस्याः ते** तव **अङ्गम् अङ्गम्** अङ्गोपाङ्गम्, प्रत्यङ्गं **परुः परुः** प्रतिपर्व **विचृतामसि** वयं सुदृढं बबन्धिम । एतादृशी **दृढा** सुस्थिरा **नद्धा** बद्धा **परिष्कृता** परि-उपसर्गपूर्वात् करोतेः क्तः, 'संपरिभ्यां करोतौ भूषणे' (पा० ६.१.१३७) इति सुट् 'परिनिविभ्यः०' (पा० ८.३.७०) इत्यनेन षत्वम् । गृहालङ्करणैरलङ्कृता त्वम् **एनम्** गृहस्थम् **अमुत्र** परलोकेऽपि **आगच्छतात्** प्राप्नुयाः ॥ १० ॥

यस्त्वा शाले निमिमाय संजभार वनस्पतीन् ।
प्रजायै चक्रे त्वा शाले परमेष्ठी प्रजापतिः ॥ ११ ॥

यः । त्वा । शाले । निऽमिमाय । सम्ऽजभार । वनस्पतीन् ।
प्रऽजायै । चक्रे । त्वा । शाले । परमेऽस्थी । प्रजाऽपतिः ॥ ११ ॥

हे **शाले** ! **यः** शिल्पी **त्वा** त्वां **निमिमाय** निर्मितवान् तथा तन्निर्माणाय **वनस्पतीन्** तृणकाष्ठादीन् **संजभार** संगृहीतवान्, हे **शाले** ! **परमेष्ठी** उच्चस्थानस्थः **प्रजापतिः** प्रजापतितुल्योऽसौ शिल्पी **त्वा** त्वां **प्रजायै** लोकानां निवासाय **चक्रे** कृतवान् ॥ ११ ॥

नमस्तस्मै नमो दात्रे शालापतये च कृण्मः ।
नमोऽग्नये प्रचरते पुरुषाय च ते नमः ॥ १२ ॥

नमः । तस्मै । नमः । दात्रे । शालाऽपतये । च । कृण्मः ।
नमः । अग्नये । प्रऽचरते । पुरुषाय । च । ते । नमः ॥ १२ ॥

**तस्मै** शिल्पिने **नमः** । **दात्रे** शालादानं कुर्वते, शालार्थं वृक्षादेर्दात्रे वा **नमः** । **शालापतये** शालायाः स्वामिने **नमः कृण्मः** प्रणमामः । **अग्नये** यज्ञभूमौ पाकशालायां वा प्रज्वलिताय अग्नये **नमः** । **च** उत **प्रचरते** तत्र प्रचारं कुर्वते विहरते च **ते पुरुषाय नमः** ॥ १२ ॥

गोभ्यो अश्वेभ्यो नमो यच्छालायां विजायते ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥ १३ ॥

गोभ्यः । अश्वेभ्यः । नमः । यत् । शालायाम् । विऽजायते ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १३ ॥

**गोभ्यः** धेनुभ्यः **अश्वेभ्यः** वाजिभ्यः **यत्** ये शालायां **विजायते** विजायन्ते, तेभ्यः सर्वेभ्यः **नमः** नमस्कारं कुर्मः । यद्वा–तेभ्यः सर्वेभ्यः 'नमः' अन्नं पोषणाय भूयात् । **विजावति** विविधवस्तूत्पादिके **प्रजावति** सन्ततिमति हे शाले ! वयं **ते पाशान्** निर्माणबन्धनान् **विचृतामसि** विनाशयामः ॥ १३ ॥

अग्निमन्तश्छादयसि पुरुषान् पशुभिः सह ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥ १४ ॥

अग्निम् । अन्तः । छादयसि । पुरुषान् । पशुऽभिः । सह ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १४ ॥

हे शाले ! त्वम् **अग्नि पशुभिः सह** गवाश्वादिभिः सह **पुरुषान्** च **अन्तः** स्वस्मिन् **छादयसि** स्थापयसि । शेषं पूर्ववत् ॥ १४ ॥

अन्तरा द्यां च पृथिवीं च यद् व्यचस्तेन शालां
प्रति गृह्णामि त इमाम् ।

यदन्तरिक्षं रजसो विमानं तत् कृण्वेऽहमुदरं शेवधिभ्यः ।
तेन शालां प्रति गृह्णामि तस्मै ॥ १५ ॥

अन्तरा । द्याम् । च । पृथिवीम् । च । यत् । व्यचः । तेन ।
शालाम् । प्रति । गृह्णामि । ते । इमाम् । यत् । अन्तरिक्षम् ।
रजसः । विऽमानम् । तत् । कृण्वे । अहम् । उदरम् । शेवधिऽभ्यः । तेन । शालाम् । प्रति । गृह्णामि । तस्मै ॥ १५ ॥

**द्यां च पृथिवीं च अन्तरा** द्यावापृथिव्योर्मध्ये **यद् व्यचः** विस्तृतोऽवकाशः, तेन सह इमां शालां **प्रतिगृह्णामि** स्वीकरोमि। **रजसः** लोकानाम् 'लोका रजांस्युच्यन्ते' (निरु० ४.१९), **विमानं** विविधरूपेण निर्मातृ **यत्** अन्तरिक्षं तत्स्थानीयम् ते **उदरं** मध्यभागम् अहं **शेवधिभ्यः** धनधान्यादिसर्वविधनिधीभ्यः कृते, तेषां स्थापनाय **कृण्वे** करोमि, कल्पयामि। **तेन** हेतुना **तस्मै** प्रयोजनाय अहं त्वां गृह्णामि ॥ १५ ॥

ऊर्जस्वती पयस्वती पृथिव्यां निर्मिता मिता ।
विश्वान्नं बिभ्रती शाले मा हिंसीः प्रतिगृह्णतः ॥ १६ ॥

ऊर्जस्वती । पयस्वती । पृथिव्याम् । निऽमिता । मिता ।
विश्वऽअन्नम् । बिभ्रती । शाले । मा । हिंसीः ।
प्रतिऽगृह्णतः ॥ १६ ॥

**ऊर्जस्वती** बलवती, यद्वा—अन्नैः परिपूर्णा "ऊर्वा आपो रसः" (कौ० सू० १२.१) 'अन्नं वा ऊर्ग' (शत० ब्रा० ३.२.१.३३)। **पयस्वती** दुग्धादिभिः सम्पन्ना इयं शाला **पृथिव्यां** भूमौ **मिता** परितः परिमाणेन **निमिता** निर्मिताऽस्ति। अत एव **विश्वान्नं** सर्वविधमन्नं **बिभ्रती** हे **शाले** ! त्वं **प्रतिगृह्णतः** निवासाय त्वामङ्गीकुर्वतः, अङ्गीकुर्वन्तं जनं **मा हिंसीः** मा विनाशय ॥ १६ ॥

तृणैरावृता पलदान् वसाना रात्रीव शाला जगतो निवेशनी ।
मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती ॥ १७ ॥

तृणैः । आऽवृता । पलदान् । वसाना । रात्रीऽइव । शाला ।
जगतः । निऽवेशनी । मिता । पृथिव्याम् । तिष्ठसि ।
हस्तिनीऽइव । पत्ऽवती ॥ १७ ॥

**तृणैः** तृणघासादिभिः **आवृता** आच्छादिता वा **पलदान्** सुवर्णादितोलनयन्त्राणि, कटान् वा **वसाना** धारयन्ती इयं **शाला रात्रीव** निशेव **जगतः** जङ्गमप्राणिनः **निवेशनी** स्वात्मनि निवासाश्रयदात्री, वर्तते इति शेषः। हे शाले ! **पृथिव्यां** भूमौ **मिता** परिमाणादिभिः निर्मिता त्वं

**पद्वती** पादचतुष्टयवती, **हस्तिनी इव** करिणीव स्तम्भचतुष्टयाधृता **तिष्ठसि** विराजसे ॥ १७ ॥

इटस्य ते वि चृताम्यपिनद्धमपोर्णुवन् ।
वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु ॥ १८ ॥

इटस्य । ते । वि । चृतामि । अपिऽनद्धम् । अपऽऊर्णुवन् ।
वरुणेन । सम्ऽउब्जिताम् । मित्रः । प्रातः । वि । उब्जतु ॥ १८ ॥

हे शाले । **ते** तव **इटस्य** स्वेच्छयाऽन्तर्बहिर्गमनसाधनस्य द्वारस्य 'इट गतौ (३१८ भ्वा० प०) **अपिनद्धं** बद्धं कपाटद्वयम् **अपोर्णुवन्** उद्घाटयन् **विचृतामि** पृथक्करोमि । **वरुणेन** रात्र्यभिमानिना देवेन 'वारुणी रात्रिः' (तै० सं० १.७-१०.१), **समुब्जितां** तमसा प्रावृतां त्वां **मित्रः** सूर्यः **प्रातः व्युब्जतु** उद्घाटयतु, त्वयि स्थितं सकलं तमः दूरीकरोतु ॥ १८ ॥

ब्रह्मणा शालां निमितां कविभिर्निमितां मिताम् ।
इन्द्राग्नी रक्षतां शालाममृतौ सोम्यं सदः ॥ १९ ॥

ब्रह्मणा । शालाम् । निऽमिताम् । कविऽभिः । निऽमिताम् । मिताम् । इन्द्राग्नी इति । रक्षताम् । शालाम् । अमृतौ । सोम्यम् । सदः ॥ १९ ॥

**अमृतौ** अमरणधर्माणौ **इन्द्राग्नी** एते द्वे देवते **शालां रक्षताम्** । कीदृशीम् ? **ब्रह्मणा** वेदमन्त्रेण विधिवत् **निमितां** निर्मिताम् । पुनः **कविभिः** मेधाविभिः शिल्पिभिः **मितां** परिमाणानुसारं **निमितां** निर्मिताम् । तथैव या **सोम्यं सदः** अभिषवार्थ समानीतस्य सोमस्य संग्रहस्थानमस्ति, तादृशीं शालामित्यर्थः ॥ १९ ॥

कुलायेऽधि कुलायं कोशे कोशः समुब्जितः ।
तत्र मर्तो वि जायते यस्माद् विश्वं प्रजायते ॥ २० ॥

कुलाये । अधि । कुलायम् । कोशे । कोशः ।

**सम्ऽउंब्जितः । तत्रं । मर्तः । वि । जायते ।**
**यस्मात् । विश्वम् । प्रऽजायते ॥ २० ॥**

यथा स्थूलदेहरूपकुलायान्तः अन्यत् सूक्ष्मशरीररूपं कुलायं भवति, एवमेव अन्नमयकोशाभ्यन्तरन्ये कोशाः सन्तिष्ठन्ते । यथोक्तम्– "प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा" इति । एवमेव **कुलाये** गृहकुलाये **अधि** मातृदेहात्मकं **कुलायं** स्थितं भवति । तस्याः **कोशे** देहकोशे च **कोशः** मातृगर्भरूपः कोशोऽपि **समुब्जितः** सम्यक् प्रकारेण सन्तानोत्पत्त्यै उब्जितः संवृत्तो भवति । **तत्र** मातुः गर्भकोशे **मर्तः विजायते** मनुष्यः जन्म लभते **यस्मात्,** तस्मात् मनुष्यादेव **विश्वं** सकलं प्रजायते । यद्वा–कुलाये नीडे अधि कुलायम् कुलानो पक्षिसमूहानाम् अयो वासस्थानं भवति, यथा वा कोशे धनसञ्चये कोशो निधिः समुब्जितः संवृत्तो भवति तथैव तत्र शालायां मर्तः मानवः वि विविधं जायते प्रादुर्भवति यस्मात् कारणात, तस्मात् विश्वं सर्वमपत्यजातं प्रजायते प्रकर्षेणोत्पद्यत इति ॥ २० ॥

**या द्विपक्षा चतुंष्पक्षा षट्पंक्षा या निर्मीयते ।**
**अष्टापंक्षां दशंपक्षां शालां मानंस्य पत्नींमग्निर्गर्भ इवा शंये ॥२१॥**

**या । द्विऽपंक्षा । चतुःऽपक्षा । षट्ऽपंक्षा । या । निऽमीयते ।**
**अष्टाऽपंक्षाम् । दशंऽपक्षाम् । शालाम् । मानंस्य । पत्नींम् ।**
**अग्निः । गर्भःऽइव । आ । शये ॥ २१ ॥**

**या** शाला **द्विपक्षा** द्वयोर्भागयोर्विभक्ता । यद्वा–द्विकोष्ठवती । **चतुष्पक्षा** चतुर्भागविभक्ता, कोष्ठचतुष्टयोपेता वा **निमीयते** निर्मीयते । एवमेव **अष्टापक्षां** अष्टभागविभक्तां तथैव **दशपक्षां** दशकोष्ठवतीं **मानस्य पत्नीं** कुलगौरवस्य रक्षिकां शालाम् **आ** अधिकृत्य, सुखेन **शये** निवसामि । तत्र दृष्टान्तः–**इव** यथा **गर्भः** जठरे स्थितः **अग्निः** अर्थात् यथा जठरे जाठराग्निः सुखेन प्रतिवसति, तद्वत् शिल्पशास्त्रानुसारं शालानिर्माणप्रसङ्गे द्वि–चतु-ष्षडष्ट-दशपक्षास्तता वर्णिताः यत्र मानवानां पवनस्य आतपस्य च निर्बाधं गमनागमनं स्यादिति सर्वं तत एवावगन्तव्यम् ॥ २१ ॥

प्रतीचीं त्वा प्रतीचीनः शाले प्रैम्यहिंसतीम् ।
अग्निर्ह्य१न्तरापश्चर्तस्य प्रथमा द्वाः ॥ २२ ॥

प्रतीचीम् । त्वा । प्रतीचीनः । शाले । प्र । एमि । अहिंसतीम् । अग्निः । हि । अन्तः । आपः । च । ऋतस्य । प्रथमा । द्वाः ॥ २२ ॥

हे शाले ! **अहिंसन्तीम्** अपीडयन्तीं **प्रतीचीं** या प्रत्यञ्चति, प्राप्नोति तां **त्वां प्रतीचीनः** त्वदभिमुखोऽहं **प्रैमि** प्रविशामि । **हि** यतः अस्याः शालायाः **अन्तः** मध्ये **अग्निः च आपः** जलम् विद्येते ते उभे **ऋतस्य** यज्ञयागादीनां जीवनयज्ञस्य वा **प्रथमा द्वाः** प्रमुखं द्वारं द्वारतुल्ये स्तः ॥ २२ ॥

इमा आपः प्र भरम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥ २३ ॥

इमाः । आपः । प्र । भरामि । अयक्ष्माः । यक्ष्मऽनाशनीः । गृहान् । उप । प्र । सीदामि । अमृतेन । सह । अग्निना ॥ २३ ॥

अहं **इमाः आपः** जलानि **अयक्ष्मा** रोगरहिताः, न केवलं रोगरहिताः प्रत्युत **यक्ष्मनाशनीः** रोगाणां निहन्त्रस्ताः अस्यां शालायां **प्र भरामि** प्रपूरयामि, आहरामि । एवं **अमृतेन** अमृतरूपेण जलेन रसादिना वा, "पयः कीलालममृतं जीवनं भुवनं वनम्" (अमर० १.१०.३) **सह, अग्निना गृहान् उप** उपगम्य **प्रसीदामि** प्रसन्नो भवामि ॥ २३ ॥

**विशेषः**—अस्यैव मन्त्रस्य काण्डान्तर्गतस्य सायणभाष्यं यथावत् इहोपन्यस्यते—**इमाः** कलशस्थाः आपः । शसः स्थाने जस् । **प्र भरामि** प्रहरामि, प्रकर्षेण शालां नयामि । कीदृशीः ? **अयक्ष्माः** यक्ष्मरहिताः । **यक्ष्मनाशनीः** तत्सेवकानां यक्ष्मनाशिनीः । अहमपि **गृहान्** उप प्र सीदामि । कीदृशः सन् ? **अमृतेन** अविनाशिना **अग्निना सह** सहितः सन् । (अथर्व० सं० ३.१२.९)

मा नः पाशं प्रति मुचो गुरुर्भारो लघुर्भव ।
वधूमिव त्वा शाले यत्रकामं भरामसि ॥ २४ ॥

मा । नः । पाशम् । प्रति । मुचः । गुरुः । भारः । लघुः । भव ।
वधूम्ऽइव । त्वा । शाले । यत्रऽकामम् । भरामसि ॥ २४ ॥

हे शाले पाशं शालाबन्धनं नः अस्मान् प्रति मा मुचः मा त्यज, त्वां त्यक्त्वाऽन्यत्र न गच्छेमेत्यर्थः । यद्वा–शालाया आधारभूतं बन्धनम् अस्मान् प्रति दयां विधाय मा मुचः । ते गुरुः भारः लघुः भव भवतु । हे शाले ! त्वा त्वां वधूमिव नवोढां भार्यामिव यत्र कामं यत्रेच्छं यथाकाममित्यर्थः । भरामसि गृहसज्जासाधनैः अन्नादिभिः प्रपूरयामः, पोषयामः, अलङ्कुर्मः ॥ २४ ॥

प्राच्या दिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २५ ॥

प्राच्याः । दिशः । शालायाः । नमः । महिम्ने
स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २५ ॥

शालायाः प्राच्या दिशः पूर्वदिशः महिम्ने नमः अस्माकं नमस्कारोऽस्तु । स्वाह्येभ्यः स्वाहाकारयोग्येभ्यः देवेभ्यः पूर्वदिगधिष्ठातृ-देवेभ्यः स्वाहा सुहुतमस्तु एतत् हविः ॥ २५ ॥

दक्षिणाया दिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २६ ॥

दक्षिणायाः । दिशः । शालायाः । नमः । महिम्ने ।
स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २६ ॥

शालायाः दक्षिणायाः दिशः महिम्ने महनीयतायै । शेषं पूर्ववत् ॥ २६ ॥

प्रतीच्या दिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २७ ॥

प्रतीच्याः । दिशः । शालायाः । नमः । महिम्ने ।
स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २७ ॥

शालायाः प्रतीच्याः दिशः, इत्यादि पूर्ववत् ॥ २७ ॥

उदीच्या दिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २८ ॥

उदीच्याः । दिशः । शालायाः । नमः ।
महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २८ ॥

शालायाः उदीच्याः दिशः, इत्यादि पूर्ववत् ॥ २८ ॥

ध्रुवायाः दिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २९ ॥

ध्रुवायाः । दिशः । शालायाः । नमः । महिम्ने ।
स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २९ ॥

शालाधाः ध्रुवाधाः अधरायाः, दिशः इत्यादि पूर्ववत् ॥ २९ ॥

ऊर्ध्वाया दिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ ३० ॥

ऊर्ध्वायाः । दिशः । शालायाः । नमः । महिम्ने ।
स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३० ॥

शालायः ऊर्ध्वायाः दिशः, इत्यादि पूर्ववत् ॥ ३० ॥

दिशोदिशः शालाया नमो महिम्ने
स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ ३१ ॥

दिशःऽदिशः । शालायाः । नमः । महिम्ने ।
स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३१ ॥

शालायाः दिशः दिशः उपदिशां महिम्ने, इत्यादि पूर्ववत् ॥ ३१ ॥

## चतुर्थं सूक्तम् : ऋषभः

(१-२४) ऋषिः—ऋषभः । देवता—ब्रह्मा । छन्दः—१-५,७,९,२२ त्रिष्टुप्; ८ भूरिक्; ६,१०,२४ जगती; ११-१७,१९,२०,२३ अनुष्टुप्; १८ उपरिष्टाद् बृहती २१ आस्तारपङ्क्तिः ।

**विनियोगः**—अत्र साम्प्रदायिकाः-वृषोत्सर्गे 'साहस्रः' इत्यर्थसूक्तेन ऋषभं संपात्य अभिमन्त्र्य विसृजेत्, 'रेतोधाय' (कौ० सू० २४.२०) इत्यैतैः षड्भिः सौत्रमन्त्रैः । 'एतं वो युवानम्' (अथर्व० ९.४.२४) इत्यृचा च वत्सस्याभिमन्त्रणं कृत्वा प्रोक्षणं कुर्यात् ।

परिशिष्टेऽपि वृषोत्सर्गे एव अस्य सूक्तस्य विनियोगः कृतः । तथा चोक्तम्—"साहस्रस्त्वेषः इति ऋषभं संपातवन्तं कृत्वा" (अथर्वपरि० १८.१.७) इति ।

वयं पुनर्निर्विचिकित्समिदं ब्रूमो यत् सूक्तमिदं वृषभोत्सर्गे एव विनियुक्तम् । तत्र गोवंशाभिवृद्ध्यै हृष्टपुष्टाङ्गः पयस्वान् वृषभ उत्सृज्यते यजमानेन । यद्यपि उत्सर्जनानन्तरमस्योपरि न कस्यापि स्वामित्वम्; तथापि बार्हस्पत्योऽयमुच्यते । तत्रास्त्ययं हेतुः—बृहस्पतिः बृहतां वेदवाचां पतिः ब्राह्मणानामादिस्रोतः वनस्थानां गुरुकुलानामध्यक्षः आचार्यपदभाक् भवति । तत्र कुलगुरोर्ब्रह्मचारिणाञ्च अग्निहोत्र-यज्ञयागादिनिष्पादनाय दोग्ध्रीणां बह्वीनां धेनूनामावश्यकता स्वाभाविकी । ब्रह्मचारिणां शरीरात्ममनसां परिपुष्ट्यै चापि दुग्धाद्यवाप्तये तासामावश्यकता । अत एव उत्सृष्टोऽपि बार्हस्पत्यो वृषभः गुरुकुलाध्यक्षैर्दुग्धप्रदायिनीनां गवां सन्ततिवृद्धये उपयुज्येत चेत् नात्यन्तमनुचितम् । सूक्तस्यास्य मन्त्रेष्वपि वृषोत्सर्गः उच्यते । यथा—"सहस्रं स एकमुखा ददाति यो ब्राह्मण ऋषभमाजुहोति (अथर्व० ९.४.९) इति, 'ब्राह्मणेभ्यः ऋषभं दत्त्वा वरीयः कृणुते मनः' (अथर्व० ९.४.१९) इति ।

**साहस्रस्त्वेष ऋषभः पयस्वान् विश्वा रूपाणि वक्षणासु बिभ्रत् ।**
**भद्रं दात्रे यजमानाय शिक्षन् बार्हस्पत्य उस्रियस्तन्तुमातान् ॥१॥**

साहस्रः । त्वेषः । ऋषभः । पयस्वान् । विश्वा । रूपाणि ।

वक्षणासु । विभ्रत् । भद्रम् । दात्रे । यजमानाय । शिक्षन् ।
बार्हस्पत्यः । उस्रियः । तन्तुम् । आ । अतान् ॥ १ ॥

**साहस्रः** सहस्रबलशाली, वीर्यवान् **त्वेषः** कान्तिमान् **ऋषभः** वृषभः **पयस्वान्** प्रचुरपयःप्रदातृरेतस्कः **वक्षणासु** वक्षःस्थलेषु, कुक्षिषु **विश्वा-रूपाणि** विराडात्मना समस्तरूपाणि **बिभ्रत्** धारयन् **दात्रे** वृषोत्सर्गं कुर्वते यजमानाय **भद्रं** सर्वविधकल्याणं **शिक्षन्** ददत् **बार्हस्पत्यः** बृहस्पतिदेवताकः अयं **उस्रियः** सर्वप्रकारकाः भोगा उत्स्राविणोऽस्मिन् एतादृशः वृषभः **तन्तुम्** प्रजातन्तुं यज्ञतन्तुं वा । **आ अतान्** समन्तात् अतानीत्, विस्तारितवान् । लुङि छान्दसं रूपम् ॥ १ ॥

अपां यो अग्रे प्रतिमा बभूव प्रभूः सर्वस्मै पृथिवीव देवी ।
पिता वत्सानां पतिरघ्न्यानां साहस्रे पोषे अपि नः कृणोतु ॥ २ ॥

अपाम् । यः । अग्रे । प्रतिऽमा । बभूव । प्रऽभूः ।
सर्वस्मै । पृथिवीऽइव । देवी । पिता । वत्सानाम् । पतिः ।
अघ्न्यानाम् । साहस्रे । पोषे । अपि । नः । कृणोतु ॥ २ ॥

**यः** वृषभः विराडात्मना **अग्रे** सृष्ट्यादौ **अपां** रेतसां **प्रतिमा** प्रतिरूपः **बभूव** । 'आपो रेतः प्रजननम्' (तै० ४.३.१०.३), 'वीर्यं वा आपः' (शत० ब्रा० ५.३.४.१, ता० ब्रा० ८.७.९), 'आपो रेतः' (शत० ब्रा० ३.८.४.११;५.१) । यद्वा—अयम् अपाम् अन्नानाम् अन्नादिकस्य कारणभूतानां जलानां वा प्रतिमा आकृतिरूपः 'अन्नं वा आपः' (शत० ब्रा० २.१.१.३), (तै० ब्रा० ३.६.२.१) सूक्ष्मतमं भागवतम् आपस्तत्त्वं रेतोरूपेण वृषभदेहात्मना परिणतम् । पुनः **यः देवी** दिव्यरूपा **पृथिवी इव सर्वस्मै** षष्ठ्यर्थे चतुर्थी, सर्वस्य **प्रभूः** समर्थः पालकः । गोषु रेतसो वर्षणेन कर्षणक्षमानां वत्सानां दुग्धसम्पदश्च जननात् । स वृषभः **वत्सानां** गोवत्सानां **पिता** जनकः, **अघ्न्यानां** धेनूनां च **पतिः** निगद्यते । एतादृशः वृषभ. **नः** अस्मान् अपि **साहस्रे पोषे** सहस्रसंख्याके पोषणे, नैकविधपुष्ट्यै समर्थान् **कृणोतु** करोतु ॥ २ ॥

पुमानन्तर्वान्त्स्थविरः पयस्वान् वसोः कबन्धमृषभो बिभर्ति ।
तमिन्द्राय पथिभिर्देवयानैर्हुतमग्निर्वहतु जातवेदाः ॥ ३ ॥

पुमा॑न् । अ॒न्तः॒ऽवा॑न् । स्थवि॑रः । पय॑स्वान् । वसोः॑ ।
कब॑न्धम् । ऋ॒ष॒भः । बि॒भ॒र्ति॒ । तम् । इन्द्रा॑य । प॒थि॒ऽभिः॑ ।
दे॒व॒ऽयानैः॑ । हु॒तम् । अ॒ग्निः । व॒ह॒तु॒ । जा॒तऽवे॑दाः ॥ ३ ॥

**पुमान्** पुंस्त्वलक्षणवीर्योपेतः पुनः **अन्तर्वान्** सर्वे लोकाः अन्तर्मध्ये यस्य तादृशः सर्वलोकान् प्राणिनो वा स्वान्तर्दधाति, **स्थविरः** स्थिरः, अचलः । 'ष्ठा गतिनिवृत्तौ' 'किरच् अजिरः' (उणा० १.५३), धातोर्वुक् ह्रस्वत्वं च । अपि च, **पयस्वान्** गवां सर्जनद्वारा दुग्धादिजनकः, एवम्भूतोऽयम् **ऋषभः वसोः** निवासहेतोः संसारस्य **कबन्धम्** केन वायुना बध्यते इति **कबन्धम्** उदरम् **बिभर्ति** धारयति । अतः **इन्द्राय** इन्द्रार्थम् ऐश्वर्यप्राप्त्यै वा 'इदि परमैश्वर्ये' (६३ भ्वा० पर०), **हुतम्** दत्तम्, उत्सर्गीकृतम् 'हु दानादानयोः' (१०८३ जुहो० प०) **तम्** वृषभं **जातवेदाः** जातानि कृतानि वेत्तीति जातवेदाः **अग्निः** मृत्योरनन्तरं **देवयानैः पथिभिः** देवयानमार्गैः **वहतु** स्वर्गं प्रापयत्विति ॥ ३ ॥

पि॒ता व॒त्साना॒ं पति॑र॒घ्न्याना॒मथो॑ पि॒ता म॑ह॒तां गर्ग॑राणाम् ।
व॒त्सो ज॒रायु॑ प्रति॒धुक् पी॒यूष॑ आ॒मिक्षा॑ घृ॒तं तद् व॑स्य॒ रेतः॑ ॥ ४ ॥

पि॒ता । व॒त्साना॑म् । पतिः॑ । अ॒घ्न्याना॑म् । अथो॒ इति॑ । पि॒ता ।
म॒ह॒ताम् । गर्ग॑राणाम् । व॒त्सः । ज॒रायु॑ । प्र॒ति॒ऽधुक् । पी॒यूषः॑ ।
आ॒मिक्षा॑ । घृ॒तम् । तत् । ऊँ॒ इति॑ । अ॒स्य॒ । रेतः॑ ॥ ४ ॥

अयम् ऋषभः **वत्सानां** गोशिशूनां **पिता** जनकः **अघ्न्यानाम्** अहन्तव्यानां धेनूनां **पतिः अथो** अपि च **महतां** विशालानां **गर्गराणाम्** मन्थनीपात्राणां (अमरकोष २.९.३४) **पिता** पयःप्रदाने हेतुभूतत्वात् पितृवत् पालकः अस्ति । पयोऽन्तरा दध्नोऽसंभवात् दध्ना विना च नवनीतादेः शशविषाणायितत्वाच्च गोषु पयसामाधायकस्यास्य मथनीपात्रपालकत्वं सुस्थमेवेति भावः । **वत्सः** गोशिशुः **जरायुः** उल्बं **प्रतिधुक्** नवप्रसूतायाः दुग्धं **पीयूषः** अमृतोपमं दुग्धम् पुंवद्भावश्छान्दसः । **आमिक्षा** पक्वे क्षीरे दधियोगतः समुत्पन्नो द्रवपदार्थः, 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद् दधियोगतः' इत्यमरः (१.७.२३) । **घृतम्**

आज्यं **तत्** उ तदेतत् सर्वमेव **अस्य** ऋषभस्य रेतः वीर्यम्, अस्य वीर्येण जातत्वादिति भावः ॥ ४ ॥

**देवानां भाग उपनाह एषो३ऽपां रस ओषधीनां घृतस्य ।**
**सोमस्य भक्षमवृणीत शक्रो बृहन्नद्रिरभवद् यच्छरीरम् ॥ ५ ॥**

**देवानाम् । भागः । उपऽनाहः । एषः । अपाम् । रसः ।**
**ओषधीनाम् । घृतस्य । सोमस्य । भक्षम् । अवृणीत ।**
**शक्रः । बृहन् । अद्रिः । अभवत् । यत् । शरीरम् ॥ ५ ॥**

**देवानाम्** इन्द्रादीनां **भागः** भजनीयः, सेवनीयः, देवा अप्येनं भजन्ते सेवन्ते तस्माद्धेतोः । अपि च **उपनाहः** देवानां बन्धनहेतुः आश्रयभूतः सर्वे देवा अत्र वृषभे वसन्तीति स्मरणात् । **एषः** वृषभः **अपां** जलानां रेतसां वा, **ओषधीनाम् घृतस्य** च **रसः** सारः सारभूतः अस्ति । वृषोत्सर्गावसरे **शक्रः** इन्द्रः **सोमस्य** सोमात्मकस्य अस्य पयसः **भक्षम्** भक्षणं पानम्, **अवृणीत** स्वीकृतवान् । तस्माद्धेतोः **यत्** यस्मात् शक्रस्य **शरीरम्** देहः **बृहन्** महान् पर्वततुल्यः अभवत् ॥ ५ ॥

**सोमेन पूर्णं कलशं बिभर्षि त्वष्टा रूपाणां जनिता पशूनाम् ।**
**शिवास्ते सन्तु प्रजन्व इह या इमा न्य१स्मभ्यं स्वधिते यच्छ या अमूः ॥ ६ ॥**

**सोमेन । पूर्णम् । कलशम् । बिभर्षि । त्वष्टा । रूपाणाम् ।**
**जनिता । पशूनाम् । शिवाः । ते । सन्तु । प्रऽजन्वः ।**
**इह । याः । इमाः । नि । अस्मभ्यम् । स्वऽधिते । यच्छ ।**
**याः । अमूः ॥ ६ ॥**

हे ऋषभ ! त्वं **सोमेन** वीर्येण **पूर्णं** भरितं **कलशम्** अण्डकोशं **बिभर्षि** धारयसि । 'रेतः सोमः' (कौ० सू० १३.७), 'सोमं यजति रेत एव तद् दधाति' (तै० सं० २.६.१०) । हे ऋषभ ! त्वमेव **रूपाणाम्** आकृतीनां **त्वष्टा** विश्वकर्मा च **पशूनां** गवादीनां **जनिता** उत्पादकः असि । **ते** तव **प्रजन्वः** प्रजननशक्तयः, गावः प्रपूर्वकात् 'जनी प्रादुर्भावे'

(११४९ दिवा० आ०) धातोः 'कृषिचमितनि० (उणा० १.८०) इत्यनेन ऊः । **शिवाः** कल्याणकारिण्यः सन्तु । **इह** पृथिव्याम् **या इमाः** प्रत्यक्षदृश्याः च **याः** अमूः दिवि स्थिताः दूरवर्तिन्यः शक्तयः सन्ति, ताः सर्वाः हे **स्वधिते** ! स्वयं धारणकर्तः, स्वेषु आत्मीयेषु धितिः धारणं पोषणं यस्य तत्सम्बुद्धौ, **अस्मभ्यं नियच्छ** प्रदेहि ॥ ६ ॥

**आज्यं॑ बिभर्ति घृ॒तम॑स्य॒ रेतः॑ साह॒स्रः पोष॒स्तमु॑ य॒ज्ञमा॑हुः ।**
**इन्द्र॑स्य रू॒पमृ॑ष॒भो वसा॑नः॒ सो अ॒स्मान् दे॑वाः शि॒व ऐ॑तु द॒त्तः ॥ ७॥**

**आज्य॑म् । बि॒भ॒र्ति॒ । घृ॒तम् । अ॒स्य॒ । रेतः॑ । सा॒ह॒स्रः । पोषः॑ । तम् । ऊँ॒ इति॑ । य॒ज्ञम् । आ॒हुः॒ । इन्द्र॑स्य । रू॒पम् । ऋ॒ष॒भः । वसा॑नः । सः । अ॒स्मान् । दे॒वाः॒ । शि॒वः । आ । ए॒तु॒ । द॒त्तः ॥ ७ ॥**

स ऋषभः **आज्यम्** रेतः **बिर्भात** धारयति । **अस्य** ऋषभस्य **रेतः** एव घृतं घृतरूपेण, परिणमते । तथा च श्रुतिः 'एतद्रेतः यदाज्यम्' (तै० सं० १.१.९.४, शत० ब्रा० १.३.१.१८) । यद्वा—घृतोत्पत्तौ कारणं भवति । कारणे कार्यत्वोपचारः । अयं **साहस्रः पोषः** सहस्रगुणितपोषण-क्षमः, बहुपुष्टिकारकः अस्ति । **तम्** एतादृशं ऋषभम् **उ** नूनं **यज्ञम् आहुः** । यज्ञसाधन-स्वप्रसूत-गवादिघृतसाधनभूतत्वात् तस्मिन् औपचारिकः यज्ञत्वारोपः । हे **देवाः** ! **इन्द्रस्य** सर्वशक्तिमतः सर्वैश्वर्यवतः इन्द्रस्य **रूपं वसानः** धारयन् **दत्तः** उत्सर्गीकृतः **सः** ऋषभः **अस्मान् शिवः** मङ्गलकारी भूत्वा **आ एतु** प्राप्नोतु ॥ ७ ॥

**इन्द्र॒स्यौजो॒ वरु॑णस्य बा॒हू अ॒श्विनो॒रंसौ॑ म॒रुता॑मि॒यं क॒कुत् ।**
**बृह॒स्पतिं॒ संभृ॑तमे॒तमा॑हु॒र्ये धीरा॑सः क॒वयो॒ ये म॑नी॒षिणः॑ ॥ ८ ॥**

**इन्द्र॑स्य । ओजः॑ । वरु॑णस्य । बा॒हू इति॑ । अ॒श्विनोः॑ । अंसौ॑ । म॒रुता॑म् । इ॒यम् । क॒कुत् । बृह॒स्पति॑म् । सम्ऽभृ॑तम् । ए॒तम् । आ॒हुः॒ । ये । धीरा॑सः । क॒वयः॑ । ये । म॒नी॒षिणः॑ ॥ ८ ॥**

अस्मिन् ऋषभे **इन्द्रस्य** देवेन्द्रस्य **ओजः** अष्टमो धातुः अस्ति । **वरुणस्य बाहू** भुजौ, च **अश्विनोः अंसौ** स्कन्धौ स्तः । **इयं ककुत्** स्कन्धे

विशालो मांसपिण्डः **मरुतां** देवानामस्ति । **ये धीरासः** धैर्ययुक्ताः **कवयः** क्रान्तदर्शिनः **ये मनीषिणः** बुद्धिमन्तः अस्मिन् जगति विद्यन्ते, ते **एतम्** ऋषभं **सम्भृतम्** एकत्रीभूतं **बृहस्पतिं** बृहस्पतिदेहात्मना जातम् **आहुः** कथयन्ति ॥ ८ ॥

**दैवीर्विशः पर्यस्वाना तनोषि त्वामिन्द्रं त्वां सरस्वन्तमाहुः ।**
**सहस्रं स एकमुखा ददाति यो ब्राह्मण ऋषभमाजुहोति ॥ ९ ॥**

**दैवीः । विशः । पयस्वान् । आ । तनोषि । त्वाम् । इन्द्रम् ।**
**त्वाम् । सरस्वन्तम् । आहुः । सहस्रम् । सः । एकऽमुखाः ।**
**ददाति । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ ९ ॥**

हे ऋषभ ! **पयस्वान्** दुग्धवान्, दुग्धोत्पत्तौ हेतुभूतः त्वं **दैवीः** दिव्यगुणयुक्ताः **विशः** मानवीयप्रजाः **आतनोषि** विस्तारयसि । विचक्षणाः **त्वाम् इन्द्रं** देवाधिपतिम् च, **त्वाम् सरस्वन्तं** मधुघृतरसानां सागरम् **आहुः** कथयन्ति । 'ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः' इति तैत्तिरीये (तै० सं० २.१.११.३) । **यः** यजमानः **ब्राह्मणे** ब्राह्मणाय **ऋषभम् आजुहोति** उत्सृजति, ददाति **सः सहस्रं** बह्व्यः **एकमुखाः** एकं ब्राह्मणं प्रति मुखानि यासां ताः, गाः **ददाति** प्रयच्छति ॥ ९ ॥

**बृहस्पतिः सविता ते वयो दधौ त्वष्टुर्वायोः पर्यात्मा**
**त आभृतः । अन्तरिक्षे मनसा त्वा जुहोमि**
**बर्हिष्टे द्यावापृथिवी उभे स्ताम् ॥ १० ॥**

**बृहस्पतिः । सविता । ते । वयः । दधौ । त्वष्टुः । वायोः । परि ।**
**आत्मा । ते । आऽभृतः । अन्तरिक्षे । मनसा । त्वा । जुहोमि ।**
**बर्हिः । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ १० ॥**

**बृहस्पतिः सविता** देवश्च **ते** तुभ्यं **वयः** आयुष्यमन्नं वा **दधौ** दत्तवान् । **ते** तव **आत्मा** देहः प्राणो वा **त्वष्टुः** ब्रह्मणः **वायोः** च उभाभ्यां देवाभ्यां **परि** परितः **आभृतः** सम्भृतः । अहं यजमानः **त्वा** त्वाम् **अन्तरिक्षे** अनावृते विस्तृते प्रदेशे, विचरणायेति शेषः । **जुहोमि** उत्सृजामि । **उभे द्यावापृथिवी ते** तव **बर्हिः** आसनं **स्ताम्** भवेताम् ॥ १० ॥

य इन्द्र॑ इ॒व दे॒वेषु॒ गोष्वेति॑ वि॒वाव॑दत् ।
तस्य॑ ऋष॒भस्याङ्गा॑नि ब्र॒ह्मा सं स्तौ॑तु भ॒द्रया॑ ॥ ११ ॥

यः । इन्द्र॑ःऽइव । दे॒वेषु॑ । गोषु॑ । एति॑ । वि॒ऽवाव॑दत् ।
तस्य॑ । ऋ॒ष॒भस्य॑ । अङ्गा॑नि । ब्र॒ह्मा । सम् । स्तौ॒तु । भ॒द्रया॑ ॥ ११ ॥

इव यथा इन्द्रः देवराजः देवेषु देवानां मध्ये विराजते, एवमेव ऋषभोऽयं विवावदत् भृशं विनर्दन् गोषु गोसङ्घेषु एति याति । तस्य ऋषभस्य अङ्गानि सर्वदेवमयानि शरीराङ्गानि अस्मिन् औत्सर्गिकयज्ञे ब्रह्मा चतुर्वेदवित् भद्रया सुशोभनया वाचा संस्तौतु सम्यक्तया प्रशंसतु ॥ ११ ॥

पा॒र्श्वे आ॑स्ता॒मनु॑मत्या॒ भग॑स्यास्तामनू॒वृजौ॑ ।
अ॒ष्ठीवन्ता॑वब्रवीन्मि॒त्रो मम॒ैतौ॑ केव॑ला॒विति॑ ॥ १२ ॥

पा॒र्श्वे इति॑ । आ॒स्ता॒म् । अनु॑ऽमत्याः । भग॑स्य । आ॒स्ता॒म् ।
अ॒नु॒ऽवृजौ॑ । अ॒ष्ठी॒वन्तौ॑ । अ॒ब्र॒वी॒त् । मि॒त्रः । मम॑ । ए॒तौ ।
केव॑लौ । इति॑ ॥ १२ ॥

ऋषभस्य द्वे पार्श्वे अनुमत्याः पूर्णिमाया अधिष्ठातृदेव्याः आस्ताम् अभवताम् । भगस्य भगदेवतायाः अनूवृजौ कुक्षेः वाम-दक्षिणभागौ आस्ताम् । अनु उपसर्गपूर्वात् 'वृजी वर्जने आच्छादने च' (१८१३ चुरा०) इत्यस्मात् क्विप् । अष्ठीवन्तौ एतौ द्वौ जानुभागौ केवलौ मम नूनं ममैवेति मित्रः सविता देवः अब्रवीत् उच्चैर्जुघोष ॥ १२ ॥

भ॒सदा॑सीदादि॒त्याना॑ं श्रोणी॑ आस्तां बृ॒हस्पते॑ः ।
पुच्छं॒ वात॑स्य दे॒वस्य॒ तेन॑ धूनो॒त्योष॑धीः ॥ १३ ॥

भ॒सत् । आ॒सी॒त् । आ॒दि॒त्याना॑म् । श्रोणी॒ इति॑ । आ॒स्ता॒म् ।
बृ॒ह॒स्पते॑ः । पुच्छ॑म् । वात॑स्य । दे॒वस्य॑ । तेन॑ । धू॒नो॒ति॒ ।
ओष॑धीः ॥ १३ ॥

अस्य ऋषभस्य भसत् नाभितलभागः, गुह्यभागः आदित्यानाम्

द्वादशादित्यानाम् आसीत् । **श्रोणी** कटिभागौ **बृहस्पतेः** बृहतां वेदवाचां पतेः देवगुरोः **आस्ताम्** अभवताम् । **वातस्य देवस्य** वायुदेवस्य **पुच्छं** लाङ्गूलम् आसीत्, **तेन** अयमहर्निशम् **ओषधीः** सस्यादिधान्यानि वनस्पत्यादीनि च **धूनोति** कम्पयति । विराडात्मनः वृषभस्य विविधाङ्गेषु सर्वदेवानां वास इति भावः ।। १३ ।।

गुदा आसन्त्सिनीवाल्याः सूर्यायास्त्वचमब्रुवन् ।
उत्थातुरब्रुवन् पद ऋषभं यदकल्पयन् ।। १४ ।।

गुदाः । आसन् । सिनीवाल्याः । सूर्यायाः । त्वचम् ।
अब्रुवन् । उत्थातुः । अब्रुवन् । पदः । ऋषभम् । यत् ।
अकल्पयन् ।। १४ ।।

**यत्** यदा देवाः **ऋषभम् अकल्पयन्** कल्पितवन्तः, तदा ते अस्य **गुदाः** गुदास्थानीया नाड्यः **सिनीवाल्याः** चतुर्दशीयुक्तायाः दृष्टेन्दुमत्याः अमायाः तदधिष्ठात्र्यः देव्याः **आसन्** इति **अब्रुवन्**। सिन्या शुक्लया चन्द्रकलया वल्यते मिश्रयते सा **सिनीवाली** । सिनी+'वल मिश्रणे' घञ् ङीष् । 'सिनीवाली कुहुरिति देवपत्न्याविति नैरुक्ताः । अमावास्ये इति याज्ञिकाः । या पूर्वामावस्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते' (निरु० ११.३१) 'सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः' इत्यमरः (४.९.) । एवमेव ते देवाः ऋषभस्य **त्वचं सूर्यायाः** सूर्यदुहितुः **अब्रुवन्** अवदन् । तथैव तस्य **पदः** पादान् **उत्थातुः** उत्थानशीलस्य भगवतः कालस्य प्राहुः । मन्त्रोक्तानि अस्य सर्वाण्यङ्गानि देवमयानीति तात्पर्यम् ।। १४ ।।

क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृतः ।
देवाः संगत्य यत् सर्व ऋषभं व्यकल्पयन् ।। १५ ।।

क्रोडः । आसीत् । जामिऽशंसस्य । सोमस्य । कलशः ।
धृतः । देवाः । सम्ऽगत्य । यत् । सर्वे । ऋषभम् ।
विऽअकल्पयन् ।। १५ ।।

**यत्** यदा **देवाः सर्वे संगत्य** समितौ मिलित्वा **ऋषभम्** सर्वदेवात्मकं **व्यकल्पयन्** कल्पितवन्तः तदा **अस्य क्रोडः** अङ्कः **जामिशंसस्य आसीत्** अभवत्। जामिषु ज्ञातृषु विद्वत्सु शंसा प्रशंसा यस्य स जामिशंसः, तस्य 'ज्ञा ज्ञाने' मि, आदेर्जत्वम्। 'शसु स्तुतौ' (७२८ भ्वा० पर०) अ-प्रत्ययः, टाप्। एवमस्य **कलशः** अण्डकोशः **सोमस्य धृतः** निर्धारितः तैरिति शेषः॥ १५॥

**ते कुष्ठिकाः सरमायै कूर्मेभ्यो अदधुः शफान्।**
**ऊबध्यमस्य कीटेभ्यः श्ववर्तेभ्यो अधारयन्॥ १६॥**

**ते। कुष्ठिकाः। सरमायै। कूर्मेभ्यः। अदधुः। शफान्।**
**ऊबध्यम्। अस्य। कीटेभ्यः। श्वऽवर्तेभ्यः। अधारयन्॥ १६॥**

हे ऋषभ! **ते** तव **कुष्ठिकाः** (Dew Claws) शफस्याग्रभागः पश्चाद्भागो वा **सरमायै** सरमानामिकायै देवशुन्यै तथा ते **शफान्** खुरान् **कूर्मेभ्यः** कच्छपेभ्यः **अदधुः** ऋषयो निहितवन्तः, उत्सृष्टस्य ते मरणोत्तरमिति शेषः। **अस्य** ऋषभस्य **ऊबध्यम्** अजीर्णमन्नम् दुर्बन्धं दुर्बन्धनीयम्, दुःखेन पचनीयम्, 'दुर्'-उपसर्गपूर्वात् 'बध बन्धने' (९७३ भ्वा० प०) इत्यस्मात् पृषोदरादित्वात् यत्, दकारस्य लोपः, ऊत्वम्, तत् **श्ववर्तेभ्यः** कुक्कुरेषु संलग्नेभ्यः **कीटेभ्यः** कृमिभ्यः **अधारयन्** निर्धारितवन्तः॥ १६॥

**शृङ्गाभ्यां रक्ष ऋषत्यवर्तिं हन्ति चक्षुषा।**
**शृणोति भद्रं कर्णाभ्यां गवां यः पतिरघ्न्यः॥ १७॥**

**शृङ्गाभ्याम्। रक्षः। ऋषति। अवर्तिम्। हन्ति। चक्षुषा।**
**शृणोति। भद्रम्। कर्णाभ्याम्। गवाम्। यः। पतिः।**
**अघ्न्यः॥ १७॥**

**यः अघ्न्यः** अवध्यः **गवां पतिः** अस्ति, स वृषभः **शृङ्गाभ्यां** स्वीयशृङ्गाभ्यां **रक्षः** राक्षसादीन् हिंसकान् **ऋषति** दूरीकरोति, **चक्षुषा** नेत्रज्योतिषा **अवर्तिं** वृत्त्यभावं जीविकाभावं वा **हन्ति** विनाशयति च।

कर्णाभ्यां श्रोत्राभ्यां भद्रं सर्वेषां कल्याणकारिणीं वाचं शृणोति आकर्णयति ॥ १७ ॥

शतयाजं स यजते नैनं दुन्वन्त्यग्नयः ।
जिन्वन्ति विश्वे तं देवा यो ब्राह्मण ऋषभमाजुहोति ॥ १८ ॥

शतऽयाजम् । सः । यजते । न । एनम् । दुन्वन्ति । अग्नयः ।
जिन्वन्ति । विश्वे । तम् । देवाः । यः । ब्राह्मणे । ऋषभम् ।
आऽजुहोति ॥ १८ ॥

**यः** यजमानः **ब्राह्मणे** ब्राह्मणाय **ऋषभं** वृषभं **आजुहोति** ददाति **स** **शतयाजं यजते** शतसंख्यकान् यज्ञान् करोति । वृषोत्सर्गेण ब्राह्मणाय ऋषभं ददता यजमानेन शतं यज्ञानां पुण्यमासादितमिति तात्पर्यम् । **एनम्** वृषोत्सर्गकारिणं यजमानम् **अग्नयः** अग्निहोत्रसम्बद्धाः त्रयः पञ्च वा अग्निदेवाः **न दुन्वन्ति** न उपतापयन्ति, किमु वक्तव्यं लौकिकोऽग्निस्तं प्रपीडयेदिति । **तम्** यजमानं **विश्वे देवाः** सर्वे देवाः विश्वेदेवनामानो वा देवाः **जिन्वन्ति** प्रीणयन्ति, 'जिन्वति गतिकर्मा प्रीतिकर्मा च' ( निरु० ६.२२ ) ॥ १८ ॥

ब्राह्मणेभ्य ऋषभं दत्त्वा वरीयः कृणुते मनः ।
पुष्टिं सो अघ्न्यानां स्वे गोष्ठेऽव पश्यते ॥ १९ ॥

ब्राह्मणेभ्यः । ऋषभम् । दत्त्वा । वरीयः । कृणुते । मनः ।
पुष्टिम् । सः । अघ्न्यानाम् । स्वे । गोऽस्थे । अव । पश्यते ॥ १९ ॥

**ब्राह्मणेभ्यः ऋषभं दत्त्वा** यजमानः **मनः** स्वीयं मनः, अन्तःकरणं वा **वरीयः** अतितरां श्रेष्ठं **कृणुते** करोति । तेन च **स स्वे गोष्ठे** गोशालायाम् **अघ्न्यानाम्** अवध्यानां धेनूनां **पुष्टिं** पोषणं समृद्धिं च **अवपश्यते** अवलोकते । तदीयं गोष्ठं कामदुग्भिः गोभिः सदैव सुसमृद्धं जायत इति भावः ॥ १९ ॥

गावः सन्तु प्रजाः सन्त्वथो अस्तु तनूबलम् ।
तत् सर्वमनु मन्यन्तां देवा ऋषभदायिने ॥ २० ॥

गावः । सन्तु । प्रऽजाः । सन्तु । अथो इति । अस्तु ।
तनूऽबलम् । तत् । सर्वम् । अनु । मन्यन्ताम् । देवाः ।
ऋषभऽदायिने ॥ २० ॥

वृषोत्सर्गं कुर्वतो यजमानस्य समीपे **गावः** बह्व्यो धेनवः **सन्तु**। **प्रजाः** सन्तत्यः **सन्तु**, सन्ततिविस्तारो जायताम्। **अथ** अपि च **तनूबलं** शारीरिकबलं **अस्तु** वर्धतामित्यर्थः। **ऋषभदायिने** वृषोत्सर्गकर्त्रे यजमानाय **तत् सर्वं** पूर्वोक्तं शुभजातं सर्वे **देवाः अनु मन्यन्ताम्** अनुमोदन्ताम् ॥ २० ॥

अयं पिपान इन्द्र इद् रयिं दधातु चेतनीम् ।
अयं धेनुं सुदुघां नित्यवत्सां वशं दुहां विपश्चितं
परो दिवः ॥ २१ ॥

अयम् । पिपानः । इन्द्रः । इत् । रयिम् । दधातु ।
चेतनीम् । अयम् । धेनुम् । सुऽदुघाम् । नित्यऽवत्साम् ।
वशम् । दुहाम् । विपःऽचितम् । परः । दिवः ॥ २१ ॥

**पिपानः** प्रवृद्धः, परिपुष्टः 'ओ प्यायी वृद्धौ' कानच्, छान्दसः यलोपः। **इन्द्रः इत्** परमैश्वर्यवान् इन्द्र एव **अयम्** वृषोत्सर्गे दीयमानो वृषभः दात्रे यजमानाय **चेतनीं** चेतनासम्पन्नां **रयिं** गोरूपां लक्ष्मीं **दधातु** धारयतु, वर्धयत्वित्यर्थः। पुनश्च **सुदुघां** सुष्ठु दोग्ध्रीम्, **नित्यवत्सां** प्रतिवर्षं वत्सप्रदात्रीं **वशं दुहां** दोहनसमये वशवर्तिनीं च **धेनुम्** दधातु इति पूर्वेणान्वयः। अन्यच्च, यजमानाय **परः दिव** 'दिवु परिकूजने' (१७०७ चुरा०) हिंसनात् परिकूजनात् वा परस्तात् 'दिवु मर्दने' (१७२५ चुरा०) हिंसा-परिकूजनादिविरहितम् **विपश्चितम्** अध्यात्म-विद्याविचक्षणम्, करोतु इति शेषः ॥ २१ ॥

**पिशङ्गरूपो नभसो वयोधा ऐन्द्रः शुष्मो विश्वरूपो न आगन् ।**
**आयुरस्मभ्यं दधत् प्रजां च रायश्च पोषैरभि नः सचताम् ॥ २२॥**

पिशङ्गऽरूपः । नभसः । वयःऽधाः । ऐन्द्रः । शुष्मः । विश्वऽरूपः । नः । आ । अगन् । आयुः । अस्मभ्यम् । दधत् । प्रऽजाम् । च । रायः । च । पोषैः । अभि । नः । सचताम् ॥ २२ ॥

**पिशङ्गरूपः** सुवर्णाभः **वयोधाः** जीवनप्रदः, आयुष्यप्रदो वा। **विश्वरूपः** नैकरूपः **ऐन्द्रः** इन्द्रसम्बन्धि **शुष्मः** बलं तेजो वा तद्रूपः अयम् ऋषभः **नभसः** द्युलोकात् **नः** अस्माकं पुरतः **आगन्** समुपस्थितः आस्ते। सोऽयम् **अस्मभ्यम् आयुः** चिरजीवनं **प्रजां** सन्ततिं **च दधत्** धारयन् **रायः** ऐश्वर्यस्य **पोषैः** पुष्टिभिः **च नः** अस्मान् **अभिसचताम्** समवेतान् करोतु॥ २२ ॥

उपेहोपपर्चनास्मिन् गोष्ठ उप पृञ्च नः।
उप ऋषभस्य यद् रेत उपेन्द्र तव वीर्यम् ॥ २३ ॥

उप । इह । उपऽपर्चन । अस्मिन् । गोऽस्थे । उप । पृञ्च । नः । उप । ऋषभस्य । यत् । रेतः । उप । इन्द्र । तव । वीर्यम् ॥ २३ ॥

**उपपर्चन** हे समीपसम्पर्ककर्तः ऋषभ ! 'पृची सम्पर्के (१४६३ रुधा० पर०)। **इह** अत्र **उप** अस्माकं समीपम् आगच्छ। **नः** अस्माकं **अस्मिन् गोष्ठे** अस्यां गोशालायां **उपपृञ्च** समीपस्थ एव सम्पृक्तो भव। **ऋषभस्य** वृषभस्य **उप** समीपे **यद् रेतः** वीर्यमस्ति, हे **इन्द्र** ! तत् **तव उप वीर्यम्** त्वदीयं त्वत्समीपस्थमेव वीर्यं विद्यते, नान्यस्य कस्यापि इति भावः॥ २३ ॥

एतं वो युवानं प्रति दध्मो अत्र तेन क्रीडन्तीश्चरत वशाँ अनु।
मा नो हासिष्ट जनुषा सुभागा रायश्च पोषैरभि नः सचध्वम्॥ २४॥

एतम् । वः । युवानम् । प्रति । दध्मः । अत्र । तेन । क्रीडन्तीः । चरत । वशान् । अनु । मा । नः । हासिष्ट ।

**जनुषा । सुऽभागाः । रायः । च । पोषैः । अभि । नः । सचध्वम् ॥ २४ ॥**

एतावत्पर्यन्तं नैकैः प्रकारैः वृषभं संस्तुत्य उपसंहारे तत्पत्न्यो गावः संस्तुत्य प्रार्थयन्ते—हे गावः ! **युवानं** यौवनोपेतम् **एतम्** अमुम् वृषभम् अत्र गोष्ठे **वः** युष्माकं कृते **प्रतिदध्मः** स्थापयामः । **तेन** वृषभेण **क्रीडन्तीः** क्रीडां कुर्वन्तीः, यूयं **वशान् अनु** यथेच्छं **चरत** इतस्ततः विचरत । **सुभागाः** हे सौभाग्यशालिन्यो गावः ! यूयं **नः** अस्मान् **जनुषा** जन्मना सह, यावज्जन्म इत्यर्थः, **मा हासिष्ट** मा त्यजत । **च रायः पोषैः** ऐश्वर्यस्य अभिवृद्धिभिः **नः** अस्मान् **अभि सचध्वम्** परितः सेवध्वमिति ॥ २४ ॥

## पञ्चमं सूक्तम् : पञ्चौदनः अजः

(१–३८) ऋषिः–भृगुः । देवता–पञ्चौदनोऽजः, मन्त्रोक्ताश्च । छन्दः–१,२,५-९, ११–१३, १५,१९,२५ त्रिष्टुप्, ३ चतुष्पदा पुरोतिशक्वरी जगती, ४, १०, जगती, १४, १७, २७–३० अनुष्टुप् (३० ककुम्मती), १६ त्रिपदानुष्टुप्, १८, ३७ त्रिपदा विराड् गायत्री, २३ पुर उष्णिक् २४ पञ्चपदानुष्टुबुष्णिगगर्भोपरिष्टाद्विराड् जगती, २०–२२, २६ पञ्चपदानुष्टुबुष्णिगगर्भोपरिष्टाद् बार्हता भुरिक् ३१ सप्तपदार्षी, ३२–३५ दशपदा प्रकृतिः, ३६ दशपदाकृतिः, ३८ एकावसाना द्विपदा साम्नी त्रिष्टुप् ।

**विनियोगः**—अत्र साम्प्रदायिका पञ्चौदनसवे 'आ नयैतम्'' इत्यर्थसूक्तस्य विनियोगमाहुः । एतत्सूक्तेन निरुप्तहविरभिमर्शनं संपातं दातृवाचनं दानं च कुर्यात् । तथा च सूत्रम्—"आ नयैतम्" इत्यपराजिताद् अजमानीयमानमनुमन्त्रयते" इत्यादि । "आ नयैतम्' इति सूक्तेन संपातवन्तम् । आञ्जनान्तम्" (कौ० सू० ६४, ६–२८) इत्यन्तम् इति । एवं पशौ अनेन सूक्तेन अपराजिताद् आनीयमानम् अजमनुमन्त्रयेत । तदुक्तं वैताने— "आ नयैतम्' इत्याद्याञ्जानान्तम्" (वैता० श्रौ० १०.१४) इति । तथैव अग्निचयने पुनश्चितौ 'येना सहस्रम्' इत्यनया गार्हपत्ये चीयमाना इष्टका ब्रह्मा अनुमन्त्रयेत । तदुक्तं वैताने– "गार्हपत्य उक्तम् । 'अयमग्निः सत्पतिः' (अथर्व० ७.६४) 'येना सहस्रम्'

(अथर्व० ९.५.१७) इति'' (वैतान० श्रौ० २९.८,९) इति। एवमेव तत्रैव वैश्वकर्मणः होमानुमन्त्रणे तस्या एव विनियोगः। तदुक्तं वैताने–''ये भक्षयन्तः' (अथर्व० २.३५), 'एतं सधस्थाः (अ० ६.१२३) इति द्वे। 'येना सहस्रम्' (अ० ९.५.१७) इति 'वैश्वकर्मण होमान्'' (वैतान० श्रौ० २९.२२.२३) इति।

आ न॑यै॒तमा र॑भस्व सु॒कृतां॑ लो॒कमपि॑ गच्छतु प्रजा॒नन्।
ती॒र्त्वा तमां॑सि बहु॒धा म॒हान्त्य॒जो नाक॒मा क्र॑मतां तृ॒तीय॑म् ॥ १ ॥

आ। न॒य॒। ए॒तम्। आ। र॒भ॒स्व॒। सु॒ऽकृता॑म्। लो॒कम्। अपि॑। ग॒च्छ॒तु॒। प्र॒ऽजा॒नन्। ती॒र्त्वा। तमां॑सि। ब॒हु॒ऽधा। म॒हान्ति॑। अ॒जः। नाक॑म्। आ। क्र॒म॒ता॒म्। तृ॒तीय॑म् ॥ १ ॥

एतम् अजम् अजन्मानं जीवात्मानं आनय गृहाण, स्वमनसि निदेहि, ध्यायेत्। 'ध्यै चिन्तायाम्' (९०८ भ्वा० पर०) ध्यात्वा च आरभस्व यज्ञं कुरु येन यज्ञेन सदुद्योगबलेन वा प्रजानन् संप्रबुद्धो भूत्वा सुकृतां सुकर्मिणां पुण्यशालिनां लोकम् अपि गन्तव्यं स्थानमपि गच्छतु यातु। अयम् अजः अजन्मा जीवात्मा बहुधा नैकैः प्रकारैः महान्ति तमांसि निविडान्धकारप्रचुराणि नीचोच्चजन्मानि मृत्युरूपाणि तीर्त्वा तृतीयं नाकम् अविद्यमानदुःखं परब्रह्मणो लोकम् आक्रमताम् आरोहतु। अजः न जायते यः सः, जीवात्मा। नञ्पूर्वकात् जनेर्डः प्रत्ययः॥ १॥

इन्द्रा॑य भा॒गं परि॑ त्वा नयाम्य॒स्मिन् य॒ज्ञे यज॑मानाय सू॒रिम्।
ये नो॑ द्वि॒षन्त्यनु॒ तान् र॑भ॒स्वाना॑गसो॒ यज॑मानस्य वी॒राः ॥ २ ॥

इन्द्रा॑य। भा॒गम्। परि॑। त्वा॒। न॒या॒मि॒। अ॒स्मिन्। य॒ज्ञे। यज॑मानाय। सू॒रिम्। ये। नः॒। द्वि॒षन्ति॑। अनु॑। तान्। र॒भ॒स्व॒। अना॑गसः। यज॑मानस्य। वी॒राः ॥ २ ॥

**अस्मिन् यज्ञे** प्रकृते नाकप्राप्तिफलके यज्ञे **इन्द्राय** षष्ठचर्थे चतुर्थी, इन्द्रस्य परमात्मनः **भागं** भागरूपम् अंशरूपं **सूरिम्** ज्ञानिनं **त्वा** त्वां **यजमानाय** यजमानसमीपे **परि नयामि** प्रापयामि। **ये नः द्विषन्ति**

येऽस्माकं शत्रवः दुष्कर्मादयः, तान् अनु रभस्व अनुसृत्य आक्रम्य च तद्विनाशोद्योगं कुरु। यतो हि यजमानस्य वीराः वीरपुत्राः अनागसः निष्पापाः सन्ति। निष्पापे सत्येव दुष्कर्मादिशत्रूणां विनाशोद्योगः क्रियते जनैः ॥ २ ॥

प्र प॒दोऽव॑ नेनिग्धि॒ दुश्च॑रितं॒ यच्च॒चार॑
शु॒द्धैः श॒फैरा क्र॑मतां प्रजा॒नन् ।
ती॒र्त्वा तमां॑सि बहु॒धा वि॒पश्य॑न्न॒जो
नाक॒मा क्र॑मतां तृ॒तीय॑म् ॥ ३ ॥

प्र। प॒दः। अव॑। ने॒नि॒ग्धि॒। दुःऽच॑रितम्। यत्। च॒चार॑। शु॒द्धैः। श॒फैः। आ। क्र॒म॒ता॒म्। प्र॒ऽजा॒नन्। ती॒र्त्वा। तमां॑सि। ब॒हु॒ऽधा। वि॒ऽपश्य॑न्। अ॒जः। नाक॑म्। आ। क्र॒म॒ता॒म्। तृ॒तीय॑म् ॥ ३ ॥

हे जीवात्मन्! त्वं यत् यतः निषिद्धस्थलेषु विहरणेन मलादि-संलग्नतारूपं दुश्चरितं पापाचरणं चचार विहितवान्, अतः पदः पादान् अव नेनिग्धि प्रकृष्टतया संमार्जय 'णिजिर् शौचपोषणयोः', लोट्। तात्पर्यमेतत् यद् दुष्टमार्गानुसरणं त्वया न विधातव्यमिति। अन्यच्च, प्रजानन् सम्यक्तया विज्ञाय विचार्य वा शुद्धैः शफैः पादैः आक्रमताम् पादसंचरणं विधीयताम्। निन्द्यं पन्थानं परित्यज्य प्रशस्तेन पथा गन्तव्यमिति तात्पर्यम्। अजः जन्ममरणरहितोऽयं जीवात्मा बहुधा नैकैः प्रकारैः विपश्यन् संसृतिसुलभान् दोषान् कष्टानि च विलोकयन् तमांसि दुष्टकर्माणि तीर्त्वा विहाय, तेषां पारमासाद्य तृतीयं नाकं स्वर्गलोकम् आक्रमताम् प्राप्नुयादिति ॥ ३ ॥

अनु॑ च्छ्य श्या॒मेन॒ त्वच॑मे॒तां वि॑शस्त-
र्यथाप॒र्व॑१॒सिना॒ माभि मं॑स्थाः ।
माभि द्रु॑हः परु॒शः क॑ल्पयैनं
तृ॒तीये॒ नाके॒ अधि॒ वि श्र॑यैनम् ॥ ४ ॥

अनु । छ्य । श्यामेन । त्वचम् । एताम् । विऽशस्तः । यथाऽपरु । असिना । मा । अभि । मंस्थाः । मा । अभि । द्रुहः । परुऽशः । कल्पय । एनम् । तृतीये । नाके । अधि । वि । श्रय । एनम् ॥ ४ ॥

**विशस्तः** शिष्यवर्गेषु संश्लिष्टदोषाणां विच्छेदक गुरो ! त्वं **एताम्** अहङ्कारादि-दोषजनितां **त्वचं** त्वचमिव आच्छादिकाम् अविद्यां पापवृत्ति वा **श्यामेन** श्यामवर्णवत् भयजनकेन **असिना** दृढशासनरूप-वज्रेण **यथापरु** यथापर्व **अनुच्छ्य** अनुक्रमं छिन्धि । हे गुरो ! **मा अभिमंस्थाः** शिष्यसंशोधनकार्येऽस्मिन् अभिमानं मा कुरु । तथा **मा अभिद्रुहः** द्रोहं मा कुरु । **एनं** शिष्यं **परुशः** अङ्गादीनां प्रतिसन्धिमादाय **कल्पय** समर्थं कुरु । तेन च **एनं तृतीये नाके** दुःखरहिते स्वर्गे **अधि विश्रय** संस्थापय । विशस्तः —विपूर्वात् 'शसु हिंसायाम्' इत्यस्मात् तृच्, 'ग्रसितस्कभित०' (पा० ७.२.३४) इत्यनेन इडभावः । श्यामेन —श्यायते दूरं गच्छति मनोऽस्मात्, 'श्यैङ् गतौ' (भ्वादि०) इत्यस्मात् मक्-प्रत्ययः ।

अन्ये त्वेवं व्याचक्षते—**विशस्तः** हे गर्वभरितवचोभिः परहिंसक जीव ! **एतां त्वचम्** स्वकीयाभिमानस्य उपरितनं भागं **श्यामेन असिना यथापरु अनुछ्य** ज्ञानरूपेण कृपाणाग्रेण अङ्गम् अङ्गं छिन्धि । **मा अभिमंस्थाः** सांसारिकेषु पदार्थेषु अभिमानं मा कुरु । **एनम् परुशः कल्पय** अहङ्कृतेरस्याः खण्डं खण्डं विधेहि । **एनं तृतीये नाके अधि विश्रय** तत इत्थं जीवात्मानं सर्वोच्चे विश्रामस्थाने उपवेशयेति ॥ ४ ॥

**ऋचा कुम्भीमध्यग्नौ श्रयाम्या सिञ्चोदकमव धेह्येनम् ।**
**पर्याधत्ताग्निना शमितारः शृतो गच्छतु सुकृतां यत्र लोकः ॥ ५ ॥**

ऋचा । कुम्भीम् । अधि । अग्नौ । श्रयामि । आ । सिञ्च । उदकम् । अव । धेहि । एनम् । परिऽआधत्त । अग्निना । शमितारः । शृतः । गच्छतु । सुऽकृताम् । यत्र । लोकः ॥ ५ ॥

**ऋचा** वेदवाण्या **कुम्भीम्** शिरोद्रवभरितमुखाम् उखाम् **अग्नौ** ब्रह्माग्नौ वागग्नौ तपोऽग्नौ वा, **अधिश्रयामि** संस्थापयामि। 'ब्रह्म ह्यग्निः' (शत० ब्रा० १.५.१.११), 'तपो वा अग्निः' (शत० ब्रा० ३.४.३.२) 'दीक्षायै च त्वा तपसश्च तेजसे जुहोमि' (तै० सं० ३.३.१.१) 'अग्निर्वैवाक्' (का० श्रौ० १८।१९)। गुरोराज्ञया शिष्यः दीक्षामादाय उग्रं तपश्चरति, वेदञ्च अधीते। गुरुस्तु वेदाध्यापनेन तस्य शिरसि समग्रं ज्ञानविज्ञानादिकं सन्धारयति। तदेव कुम्भीपात्ररूपस्य शिरसोऽग्नौऽधिश्रयणं नामेति विवेकः। तस्याम् उखायाम् **उदकं** सोमरसादिकं **आ सिञ्च**। यद्वा दत्तावधानो भूत्वा रक्ष। **एनं** शिष्यं **अवधेहि** अत्र स्थापय। **शमितारः** शमदमादिगुणानां प्रापकाः, यद्वा दोषाणां शमयितारः यूयं गुरवः **एनम् अग्निना परि आधत्त** आच्छादयत। एवं शृतः ज्ञानाग्निद्वारा परिपक्वः सन् एष **सुकृतां** पुण्यशालिनां **यत्र लोकः तत्र गच्छतु** यात्विति भावः॥ ५॥

**उत्क्रा॑मा॒तः परि॑ चे॒दत॑प्तस्त॒प्ताच्च॒रोरधि॒ नाकं॑ तृ॒तीय॑म्।**
**अ॒ग्नेर॒ग्निरधि॒ सं ब॑भूविथ॒ ज्योति॑ष्मन्तम॒भि लो॒कं ज॑यै॒तम्॥ ६॥**

**उत्। क्रा॒म॒। अ॒तः। परि॑। च॒। इ॒त्। अत॑प्तः। त॒प्तात्।**
**च॒रोः। अधि॑। नाक॑म्। तृ॒तीय॑म्। अ॒ग्नेः। अ॒ग्निः। अधि॑। सम्।**
**ब॒भू॒वि॒थ॒। ज्योति॑ष्मन्तम्। अ॒भि। लो॒कम्। ज॒य॒। ए॒तम्॥ ६॥**

**चेत्** यदि त्वं **अतप्तः** 'तप्-धातोः लङि रूपम् भृशं तप्तोऽभवः, **अतः** अस्मात् **तप्तात् चरोः** पचनाधारभूतात् मृत्पात्रात् **परि** सर्वतः **तृतीयं नाकं** स्वर्गम् **अधि** लक्ष्यीकृत्य **उत्क्राम** उत्पत, उद्गच्छ। चरुर्मृत्पात्रम्, 'चरुर्मृच्चयो भवति। चरतेर्वा समुच्चरन्त्यस्मादापः' (निरु० ३.६)। **अग्निः** अग्निरूपः त्वं हे शिष्य! **अग्नेः** अग्निरूपात् गुरोः सकाशात् अग्निरूपं **अधि** अधिकृत्य **संबभूविथ** जज्ञिषे। इत्थम् **एतं ज्योतिष्मन्तं** देदीप्यमानं **लोकं** स्वर्गलोकं **जय** तत्र अधितिष्ठेति भावः॥ ६॥

**अ॒जो अ॒ग्निर॒जमु॒ ज्योति॑राहुर॒जं जीव॑ता ब्र॒ह्मणे॒ देय॑माहुः।**
**अ॒जस्तमां॒स्यप॑ हन्ति दू॒रम॒स्मिँल्लो॒के श्र॒द्दधा॑नेन द॒त्तः॥ ७॥**

अजः । अग्निः । अजम् । ऊं इति । ज्योतिः । आहुः । अजम् । जीवता । ब्रह्मणे । देयम् । आहुः । अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ७ ॥

**अजः** अजन्मा जीवात्मा **अग्निः** अग्निरूपो भवति । तम् एनम् **अजं** जीवात्मानम् उ निश्चयेन विद्वांसः **ज्योतिः** ज्योतिष्मन्तं ज्ञान-विज्ञानादिभिः प्रकाशितं **आहुः** । एतादृशम् एनम् **अजं जीवता** सजीव-रूपेण, न तु मृतरूपेण **ब्रह्मणे** परमपुरुषाय परमात्मने, गुरवे वा वेदाधि-गमाय **देयं** दातव्यम् आहुः वदन्ति विवेकिनः । **अस्मिन् लोके** मनुष्य-समुदाये च **श्रद्दधानेन** श्रद्धावता गुरुणा पित्रा वा **दत्तः** प्रदत्तः समर्पितः अयं **अजः** लोकानां **तमांसि** अज्ञानान्धकारान् **दूरम्** अपहन्ति सर्वथा विनाशयति ॥ ७ ॥

पञ्चौदनः पञ्चधा वि क्रमतामाक्रंस्यमानस्त्रीणि ज्योतींषि ।
ईजानानां सुकृतां प्रेहि मध्यं तृतीये नाके अधि वि श्रयस्व ॥ ८ ॥

पञ्चऽओदनः । पञ्चऽधा । वि । क्रमताम् । आऽक्रंस्यमानः । त्रीणि । ज्योतींषि । ईजानानाम् । सुऽकृताम् । प्र । इहि । मध्यम् । तृतीये । नाके । अधि । वि । श्रयस्व ॥ ८ ॥

**पञ्चौदनः** पञ्चमहाभूतान्येव ओदनरूपाणि यस्येति, तत्रा-प्रतिहतगतिकः । पञ्चधा विभक्तमोदनं यस्येति केचित् । पञ्चजनेभ्यो ( पञ्चजनाः चत्वारो वर्णाः निषादपञ्चमः, तेभ्यो ) दीयमानः ओदनो यस्येति अन्ये । पञ्चेन्द्रियविषयाः शब्दस्पर्शरूपारसगन्धा एव ओदनं यस्येति अपरे । व्रीहि-यव-गोधूम-माष-तिलाख्यानि पञ्चप्रमुखान्नानि एव ओदनं यस्येति, वातादिपोषकपदार्थपञ्चकेन संयुक्तम् ओदनं यस्येति वा केचन । 'पञ्चरङ्गी' इति भाषायाम् । पञ्च प्रपञ्चः ओदनं भक्ष्यो यस्य स पञ्चौदनः । पञ्चशब्दो न संख्यावाची, किं तर्हि प्रपञ्चवाची । यथाह श्रीहर्षः—पञ्चास्यवत् 'पञ्चशरस्य नाम्नि प्रपञ्चवाची खलु

पञ्चशब्दः' इति परे। एवम् 'उन्दी क्लेदने' (१४५८ रुधा० पर०) इत्यस्मात् 'उन्देर्नलोपश्च' (उणा० २.७६) इत्यनेन युच्, उनत्ति क्लेदयति मिश्रयति अन्नादीनीति ओदनम्। एतादृशोऽयम् अजः गतिशीलो जीवात्मा **त्रीणि ज्योतींषि** इन्द्रियमनो-बुद्धिसम्बन्धीनि ज्योतींषि **आक्रंस्यमानः प्राप्तुमिच्छन्** आङ्पूर्वकात् 'क्रमु पादविक्षेपे' (४७३ भ्वा०) इत्यस्मात् लृटः शानच्। **पञ्चधाः** अधस्तनीं विहाय पञ्चसु दिक्षु पञ्चप्रकारेण **विक्रमतां** पादविक्षेपं करोतु। हे अज! **ईजानानां** यजनशीलानाम्, यज्धातोः 'लिटः कानज्वा' (पा० ३.२.१०६) इत्यनेन कानच्, 'वचिस्वपि०' (पा० ६.१.१५) इत्यनेन सम्प्रसारणम्, लिट्त्वात् द्विर्वचने दीर्घः। **सुकृतां** सुकर्मिणां मध्ये **प्रेहि** गच्छ, तत्र वस। तदनन्तरं देहपातकाले **तृतीये नाके** स्वर्गे **अधि विश्रयस्व** विश्रामं कुरु॥ ८ ॥

**अजा रो॑ह सु॒कृतां॒ यत्र॑ लो॒कः श॑र॒भो न च॒त्तोऽति॑ दु॒र्गाण्यैषः।**
**पञ्चौ॑दनो ब्र॒ह्मणे॑ दी॒यमा॑नः स दा॒तारं॒ तृप्त्या॑ तर्पयाति॥ ९॥**

अजं। आ। रो॒ह। सु॒ऽकृता॑म्। यत्र॑। लो॒कः। श॒र॒भः। न। च॒त्तः। अति॑। दुः॒ऽगानि॑। ए॒षः। पञ्च॑ऽओदनः। ब्र॒ह्मणे॑। दी॒यमा॑नः। सः। दा॒तार॑म्। तृप्त्या॑। त॒र्प॒या॒ति॒॥ ९॥

अज हे अजन्मन्! त्वं **सुकृतां** पुण्यशालिनां **यत्र लोकः** तत्र **आरोह** उद्गच्छ। **एषः** अजः **चत्तः** धावमानः, 'चततीति गतिकर्मसु पठितम्' (निघ० २.१४)। **शरभः न** शरभ इव अर्थात् शरभनामकहिंस्रपशु-विशेष इव इत्यर्थः। शृणाति 'शॄ हिंसायाम्' (क्र्या०) इत्यस्मात् 'कृश् शलि०' (उणा० ३.११२) इत्यनेन अभच्। 'अष्टापदे च करभे शरभः स्यान्मृगान्तरे' इति मेदिनी (१०७.२१)। **दुर्गाणि** दुर्गमनानि दुःखेन गन्तुं शक्यान् मार्गान् **अति** अतिक्रम्यं, गच्छतीति शेषः। **एष पञ्चौदनः** गतमन्त्रोक्तपञ्चविधोदनभोक्ता अजो जीवः **ब्रह्मणे** ब्रह्मप्राप्त्यै वेदाध्ययनाय वा **दीयमानः** समर्प्यमाणः **सः** अजो **दातारं** समर्पयितारं मातापित्र्यादिकं **तृप्त्या तर्पयाति** सुखेन आनन्देन च प्रीणयति॥ ९॥

अजस्त्रिनाके त्रिदिवे त्रिपृष्ठे नाकस्य पृष्ठे ददिवांसं दधाति ।
पञ्चौदनो ब्रह्मणे दीयमानो विश्वरूपा धेनुः
कामदुघाऽस्येका ॥ १० ॥

अजः । त्रिऽनाके । त्रिऽदिवे । त्रिऽपृष्ठे । नाकस्य । पृष्ठे ।
ददिऽवांसम् । दधाति । पञ्चऽओदनः । ब्रह्मणे । दीयमानः ।
विश्वऽरूपा । धेनुः । कामऽदुघा । असि । एका ॥ १० ॥

**अजः** अजन्मा जीवात्मा **ददिवांसं** समर्पयितारं स्वात्मानम् । यद्वा अजः परमात्मा ददिवांसं स्वात्मानं समर्पयितारं जीवं **त्रिनाके** त्रिविध-दुःखरहिते **त्रिदिवे** अग्निविद्युदादित्यैस्त्रिभिः ज्योतिभिः युक्ते **त्रिपृष्ठे** पृष्ठत्रययुक्ते 'तिस्रः द्यौः' इति श्रुतिबलात् **नाकस्य पृष्ठे** स्वर्गलोकस्य पृष्ठभागे **दधाति** धारयति । **ब्रह्मणे** ब्रह्मार्थं **दीयमानः** समर्प्यमाणोऽयं **पञ्चौदनः** अजः स्वयं **एका** अद्वितीया **कामदुघा** कामानां दोग्ध्री प्रदात्रीति **विश्वरूपा** विश्वरूपधारिणी **धेनुः असि** पुरुषव्यत्ययः । धेनु-सदृशोऽस्तीति भावः ॥ १० ॥

एतद् वो ज्योतिः पितरस्तृतीयं पञ्चौदनं ब्रह्मणेऽजं ददाति ।
अजस्तमांस्यप हन्ति दूरमस्मिँल्लोके श्रद्दधानेन दत्तः ॥ ११ ॥

एतत् । वः । ज्योतिः । पितरः । तृतीयम् । पञ्चऽओदनम् ।
ब्रह्मणे । अजम् । ददाति । अजः । तमांसि । अप । हन्ति ।
दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ११ ॥

**पितरः** हे मातापितरौ ! **वः** युष्माकं **एतत्** पुत्रात्मना **तृतीयं ज्योतिः** मातापित्र्यनन्तरं पुत्रः तृतीयस्थाने भवति, यत् असौ **पञ्चौदनम्** पञ्चौदनात्मकम् **अजम्** अजन्मानं स्वात्मानं **ब्रह्मणे** परब्रह्मणे **ददाति** समर्पयति, ब्रह्मार्पणं करोतीत्यर्थः । शिष्टं सप्तममन्त्रवत् ॥ ११ ॥

ईजानानां सुकृतां लोकमीप्सन् पञ्चौदनं ब्रह्मणेऽजं ददाति । स
व्याप्तिमभि लोकं जयैतं शिवोऽस्मभ्यं प्रतिगृहीतो अस्तु ॥ १२ ॥

ईजानानाम् । सुऽकृताम् । लोकम् । ईप्सन् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति । सः । विऽआप्तिम् । अभि । लोकम् । जय । एतम् । शिवः । अस्मभ्यम् । प्रतिऽगृहीतः । अस्तु ॥ १२ ॥

हे जीवात्मन् ! **ईजानानां** यज्ञकर्तृणां याजकानां **सुकृतां** शोभन-कर्मकृतां **लोकम् ईप्सन्** प्राप्तुमिच्छन् पुरुषः **पञ्चौदनम् अजम्** स्वात्मानं **ब्रह्मणे** परब्रह्मणे **ददाति** ब्रह्मार्पणं करोति । **सः** त्वं **व्याप्तिम्** सर्वक्षेत्रेषु स्वीयां व्याप्तिम् **अभि** अभिलक्ष्य **एतं** स्वर्गाभिधं तृतीयं **लोकं जय** । एतादृशः **प्रतिगृहीतः** गुरुरूपेण अस्माभिः स्वीकृतस्त्वम् **अस्मभ्यं शिवः अस्तु** कल्याणकारी भयाः ॥ १२ ॥

अजो ह्य१ग्नेरजनिष्ट शोकाद् विप्रो विप्रस्य सहसो विपश्चित् ।
इष्टं पूर्तमभिपूर्तं वषट्कृतं तद् देवा ऋतुशः कल्पयन्तु ॥ १३ ॥

अजः । हि । अग्नेः । अजनिष्ट । शोकात् । विप्रः । विप्रस्य । सहसः । विपःऽचित् । इष्टम् । पूर्तम् । अभिऽपूर्तम् । वषट्ऽकृतम् । तत् । देवाः । ऋतुऽशः । कल्पयन्तु ॥ १३ ॥

**विप्रः** मेधावी **विपश्चित्** विपं बुद्धिं चिनोतीति, बुद्धेश्चयनकर्ता अयम् **अजः** अजन्मा जीवात्मा **सहसः** बलवतः **विप्रस्य** मेधाविनः **अग्नेः** अग्न्यात्मनः परमेश्वरस्य **शोकात्** तेजसा **अजनिष्ट** आविर्बभूव । एतादृशाय अजरूपाय जीवात्मने **देवाः** इन्द्रादयो देवाः **इष्टं** यज्ञयागादिकम् **पूर्तम्** वापीकूपतडागादिकञ्च **अभिपूर्तम्** पूर्तिसाधनं **वषट्कृतं** स्वाहादिभिः यज्ञार्थं प्रदत्तं एतत् सर्वं **ऋतुशः** ऋत्वनुसारं ऋतौ ऋतौ 'संख्यैकवचनाच्च वीप्सायाम्' (पा० ५.४.४३) इत्यनेन ऋतुशब्दात् शस् । प्रथमचरणसाम्यात् अत्रैव अन्यत्र (अथर्व० सं० ४.१४.१) पुनरुक्तवदाभासः ॥ १३ ॥

अमोत वासो दद्याद्धिरण्यमपि दक्षिणाम् ।
तथा लोकान्त्समाप्नोति ये दिव्या ये च पार्थिवाः ॥ १४ ॥

अमाऽउतम् । वासः । दद्यात् । हिरण्यम् । अपि । दक्षिणाम् । तथा । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ॥ १४ ॥

अमोतम् अमा उतम् गृहे निर्मितम्, अमा गृहनाम (निघ० ३.४) उतम् 'वेञ् तन्तुसन्ताने' (१००६ भ्वा०) क्तः, सम्प्रसारणम् । वासः वस्त्रं दद्यात् दानं कुर्यात् । दक्षिणाम् दक्षिणायाम् सप्तम्यर्थे द्वितीया । हिरण्यमपि सुवर्णमपि यथाशक्ति ददातु । तथा तथाकरणेन दाता तान् लोकान् ये दिव्याः दिवि भवाः च ये पार्थिवाः भौमाः, समाप्नोति अधिगच्छति ॥ १४ ॥

एतास्त्वाजोप यन्तु धाराः सोम्या देवीर्घृतपृष्ठा मधुश्चुतः ।
स्तभान पृथिवीमुत द्यां नाकस्य पृष्ठेऽधि सप्तरश्मौ ॥ १५ ॥

एताः । त्वा । अज । उप । यन्तु । धाराः । सोम्याः । देवीः । घृतऽपृष्ठाः । मधुऽश्चुतः । स्तभान । पृथिवीम् । उत । द्याम् । नाकस्य । पृष्ठे । अधि । सप्तऽरश्मौ ॥ १५ ॥

अज हे जीवात्मन् ! एताः इष्टापूर्तादिपुण्यप्रभवाः घृतपृष्ठाः घृतं पृष्ठे यासां ताः, घृतभरिताः मधुश्चुतः मधु मधुरसं च्यावयन्ति ताः, मधुस्राविण्यः देवीः दिव्यशक्तिसम्पन्नाः सोम्याः सोमरससम्बन्धिन्यः धाराः त्वा त्वाम् उपयन्तु प्राप्नुवन्तु । अधि सप्तरश्मौ सूर्यस्य उपरि भागे नाकस्य स्वर्गलोकस्य पृष्ठे स्थितः सन् त्वं पृथिवीम् भूलोकम् उत अपि च द्याम् द्युलोकं स्तभान स्तम्भय धारय, दृढीकुरु ॥ १५ ॥

अजोऽस्यज स्वर्गोऽसि त्वया लोकमङ्गिरसः प्राजानन् ।
तं लोकं पुण्यं प्र ज्ञेषम् ॥ १६ ॥

अजः । असि । अज । स्वःऽगः । असि । त्वया । लोकम् । अङ्गिरसः । प्र । अजानन् । तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् ॥ १६ ॥

हे अज ! त्वं **अजः** वस्तुतः जनिविकाररहितः परमात्मैव **असि** । **स्वर्गः** स्वर्गप्राप्तिसाधनात् त्वम् **स्वर्गः** नाकः **असि** । **त्वया** त्वसाहाय्येन **अङ्गिरसः** अङ्गिरागोत्रोत्पन्नाः महर्षयः **लोकं** स्वर्गलोकं **प्राजानन्** ज्ञातवन्तः । अहमपि **तं पुण्यं लोकम्** पुण्यशीलैः प्राप्यं पवित्रं स्वर्गलोकं **प्रज्ञेषम्** जानीयाम् । प्र-उपसर्गपूर्वात् जानातेर्लेटि 'सिब्बहुलं लेटि' (पा० ३.१.३४) इत्यनेन सिपीटिचः रूपम् ॥ १६ ॥

**येना॑ स॒हस्रं॒ वह॑सि॒ येना॑ग्ने सर्ववेद॒सम् ।**
**तेने॒मं य॒ज्ञं नो॑ वह॒ स्व॑र्दे॒वेषु॒ गन्त॑वे ॥ १७ ॥**

**येन॑ । स॒हस्र॑म् । वह॑सि । येन॑ । अ॒ग्ने॒ । स॒र्व॒ऽवे॒द॒सम् । तेन॑ । इ॒मम् । य॒ज्ञम् । नः॒ । व॒ह॒ । स्वः॑ । दे॒वेषु॑ । गन्त॑वे ॥ १७ ॥**

**अग्ने** ! अग्निवत् तेजस्विन् परमात्मस्वरूप अज ! **येन** प्रयत्नेन त्वं **सहस्रं** अपरिमितसंख्याकं ज्ञानशक्त्यादिकं **वहसि** धारयसि **येन** च **सर्ववेदसम्** सर्वाणि वेदांसि लभ्यानि यस्मिन् तम् । सकलोपलब्धिरूपं यज्ञादिकं प्राप्नोषि **तेन** प्रयत्नेन **देवेषु** देवानां मध्ये **स्वर्गन्तवे** स्वर्गप्राप्त्यै **नः इमं यज्ञं वह** धारय ॥ १७ ॥

**अ॒जः प॒क्वः स्व॒र्गे लो॒के द॑धाति॒ पञ्चौ॑दनो॒ निर्ऋ॑तिं॒ बाध॑मानः ।**
**तेन॑ लो॒कान्त्सूर्य॑वतो जयेम ॥ १८ ॥**

**अ॒जः । प॒क्वः । स्वः॒ऽगे । लो॒के । द॒धा॒ति॒ । पञ्च॑ऽओदनः । निः॒ऽऋ॑तिम् । बाध॑मानः । तेन॑ । लो॒कान् । सूर्य॑ऽवतः । ज॒ये॒म ॥ १८ ॥**

**पक्वः** परिणतबुद्धिः, सर्वतः तपश्चरणादिना वैदिककर्मोपासना-कलापेन ब्रह्माग्नौ परितप्तः, विनष्टमलविक्षेपः, शुद्धान्तःकरणः सन् **पञ्चौदनः अजः** अजन्मा जीवात्मा अयं **निर्ऋतिम्** अपमृत्युं पापदेवतां वा **बाधमानः** अपवारयन् **स्वर्गे लोके** तृतीये नाके स्वात्मानं **दधाति** प्रापयति । वयमपि **तेन** तेनैव मार्गेण **सूर्यवतः लोकान्** सूर्यसम्बन्धिनो लोकान् **जयेम** विजित्य प्राप्नुयाम ॥ १८ ॥

यं ब्राह्मणे निदधे यं च विक्षु या विप्रुष ओदनानामजस्य ।
सर्वं तदग्ने सुकृतस्य लोके जानीतान्नः संगमने पथीनाम् ॥ १९ ॥

यम् । ब्राह्मणे । निऽदधे । यम् । च । विक्षु । याः । विऽप्रुषः । ओदनानाम् । अजस्य । सर्वम् । तत् । अग्ने । सुऽकृतस्य । लोके । जानीतात् । नः । सम्ऽगमने । पथीनाम् ॥ १९ ॥

**यं** यज्ञं **ब्राह्मणे** ब्रह्मविदि यज्ञशीले विप्रे असौ अजन्मा देव. **निदधे** निहितवान्, **च यं** नियमादिकं **विक्षु** सामान्यप्रजासु स्थापितवान्, **अजस्य** अजसम्बन्धिनः **ओदनानां** पृथिव्यादिपञ्चौदनानां **याः विप्रुषः** स्वल्पाः कणाः अत्र पतिताः । **अग्ने** ! अग्निस्वरूप परमात्मन् **पथीनां** 'पथि गतौ' (१५७६ चुरा०) इत्यस्मात् 'सार्वधातुभ्यः इन् (उणा० ४.११८) इत्यनेन इन् । **संगमने** सर्वविधमार्गाणां संगमस्थले **सुकृतस्य** पुण्यशालिनः अस्मिन् **लोके** स्वर्गलोके **नः** अस्माकं **तत् सर्वं जानीतात्** त्वं जानीहि ॥ १९ ॥

अजो वा इदमग्रे व्यक्रमत तस्योर इयमभवद् द्यौः पृष्ठम् ।
अन्तरिक्षं मध्यं दिशः पार्श्वे समुद्रौ कुक्षी ॥ २० ॥

अजः । वै । इदम् । अग्रे । वि । अक्रमत । तस्य । उरः । इयम् । अभवत् । द्यौः । पृष्ठम् । अन्तरिक्षम् । मध्यम् । दिशः । पार्श्वे इति । समुद्रौ । कुक्षी इति ॥ २० ॥

**अजः** अजन्मा परमात्मा **वै** निश्चयेन **अग्रे** सृष्टयादौ **इदम्** चराचरात्मकं जगत् **व्यक्रमत** व्यचरत् । **इयं** पृथिवी **तस्य** अजस्य **उरः** वक्षःस्थानीया **अभवत्** । **द्यौः** द्युलोकः **पृष्ठम्** देहस्य पृष्ठभागः, **अन्तरिक्षं मध्यं** मध्यदेहः कटिभागः, **दिशः** पूर्वादयः दिशः **पार्श्वे** मध्यदेहस्य दक्षिणोत्तरभागौ, **कुक्षी** कुक्षिद्वयं **समुद्रौ**, ऊर्ध्वाधोभागविभक्तं पृथिव्याकाशस्थानद्वयविभक्तसमुद्रद्वयम् **अभवत्** ॥ २० ॥

सत्यं चर्तं च चक्षुषी विश्वं सत्यं श्रद्धा प्राणो विराट् शिरः ।
एष वा अपरिमितो यज्ञो यदजः पञ्चौदनः ॥ २१ ॥

सत्यम् । च । ऋतम् । च । चक्षुषी इति । विश्वम् । सत्यम् । श्रद्धा । प्राणः । विऽराट् । शिरः । एषः । वै । अपरिऽमितः । यज्ञः । यत् । अजः । पञ्चऽओदनः ॥ २१ ॥

भगवतः परमपुरुषस्याभीद्धात् तपसः समुत्पन्नम् ऋतं च सत्यं च एते द्वे अजस्य परमात्मनस्तस्य चक्षुषी नेत्रे विश्वं जगत् तस्य सत्यं सत्तात्मकम्, 'अस् सत्तायाम्' (१०६५ अदा०) शतृ, सते हितं यत् सत्यं यथार्थ-स्वरूपम्, तस्य प्रकटो देहः। श्रद्धा श्रत् सत्यं दधातीति श्रद्धा, प्राणः। विराट् विविधं प्रकाशमाना प्रकृतिस्तस्य शिरः शिरो भवति। यत् पञ्चौदनः अजः पञ्चभूताद्यात्मकस्य ओदनस्य भोक्ता अजन्मा स वै एष अपरिमितः असीमः यज्ञः एव, 'विद्वद्भिः परिकीर्तितः' इति शेषः ॥ २१ ॥

अपरिमितमेव यज्ञमाप्नोत्यपरिमितं लोकमव रुन्द्धे ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २२ ॥

अपरिऽमितम् । एव । यज्ञम् । आप्नोति । अपरिऽमितम् । लोकम् । अव । रुन्द्धे । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २२ ॥

यः पुरुषः अजम् अजन्मानं पञ्चौदनं पञ्चभूतसेचकं परमात्मानं निमित्तीकृत्य दक्षिणाज्योतिषं दक्षिणादाने ज्योतिषं देदीप्यमानं स्वर्ण-रजतादिकं ददाति प्रयच्छति स अपरिमितमेव असीम एव अनन्तमेव यज्ञं यज्ञफलम् आप्नोति प्राप्नोति तथा अपरिमितम् अनन्तं लोकं लोकान् अवरुन्धे स्वायत्तीकुरुते ॥ २२ ॥

नास्यास्थीनि भिन्द्यान्न मज्ज्ञो निर्धयेत् ।
सर्वमेनं समादायेदमिदं प्र वेशयेत् ॥ २३ ॥

न । अस्य । अस्थीनि । भिन्द्यात् । न । मज्ज्ञः । निः । धयेत् । सर्वम् । एनम् । सम्ऽआदाय । इदम्ऽइदम् । प्र । वेशयेत् ॥ २३ ॥

पञ्चौदने अजस्य उत्सर्गाख्येऽस्मिन् क्रतौ उत्सृज्यमानस्य अस्य अजस्य **अस्थीनि न भिन्द्यात्** न विदारयेत्, पुनः अस्य **मज्ज्ञः** अस्थिगत-धातुविशेषान् **न निर्धयेत्** न नितरां पिबेत्, न समापयेदित्यर्थः। एतेन क्रतावस्मिन् अजहिंसापक्षः सर्वथा निरस्यते। **सर्वं** सर्वाङ्गपरिपूर्णं जीवन्तम् **एनम्** अजम् **समादाय** गृहीत्वा **इदम् इदम्** इति कृत्वा अस्थिसारादिकान् प्रत्येकं संस्पृश्य दिव्यतामापाद्य च तस्मिन् अजे परमात्मनि भावनया **प्रवेशयेत्** समर्पयेत्, समर्प्य च अजमुत्सृजेदिति तात्पर्यम् ॥ २३ ॥

इदमिदमेवास्य रूपं भवति तेनैनं सं गमयति ।
इषं मह ऊर्जमस्मै दुहे योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २४ ॥

इदम्ऽइदम् । एव । अस्य । रूपम् । भवति । तेन । एनम् । सम् । गमयति । इषम् । महः । ऊर्जम् । अस्मै । दुहे । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २४ ॥

अस्य अजस्य परमात्मनः **इदम् इदम्** इति अक्षतं परोक्षं **रूपं** स्वरूपं यत् योगिगम्यं देवैर्वा प्रत्यक्षं **भवति**, **तेन** रूपेण **एनम्** अजं **संगमयति** सम्मेलयति। **यः** पुरुषः **अजं पञ्चौदनं** निमित्तीकृत्य **दक्षिणाज्योतिषम्** रूप्यकहिरण्यादिकं दक्षिणात्वेन **ददाति**, **अस्मै** दक्षिणादात्रे **इषम्** अन्नं **महः** तेजः **ऊर्जं** बलं **दुहे** प्रयच्छति, पञ्चौदनोऽजरूपः परमात्मेत्यर्थः ॥ २४ ॥

पञ्च रुक्मा पञ्च नवानि वस्त्रा पञ्चास्मै धेनवः कामदुघा भवन्ति ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २५ ॥

पञ्च । रुक्मा । पञ्च । नवानि । वस्त्रा । पञ्च । अस्मै । धेनवः । कामऽदुघाः । भवन्ति । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २५ ॥

पञ्चौदन-यज्ञस्य पञ्चसंख्यामधिकृत्यैव रुक्मादयोऽपि दक्षिणा-दातारं प्राप्नुवन्तीति अस्मिन् मन्त्रे प्रतिपाद्यते—**पञ्च रुक्मा** पञ्च

स्वर्णाभरणानि **पञ्च नवानि** नूतनानि **वस्त्राणि** पञ्च कामदुघा कामानां दोग्ध्रीः, प्रपूरयित्रीः धेनवः गाः **अस्मै** असौ, प्रथमार्थे चतुर्थी भवन्ति भवति, लभते। छान्दसं बहुवचनम्, प्राप्तिवचनस्य चौरादिकस्य भूधातोरिदरूपम्, णिचः अभावपक्षे। अपि वा तुमर्थे योगे चतुर्थ्येषा, अस्मै इमं पुरुषं उपकर्तुं एते रुक्मादयः **भवन्ति** उत्पद्यन्ते ॥ २५ ॥

पञ्च॑ रु॒क्मा ज्योति॑रस्मै भवन्ति॒ वर्म॑ वासांसि त॒न्वे॑ भवन्ति।
स्व॒र्गं लो॒कम॑श्नुते॒ यो॒३॒॑ऽजं पञ्चौ॑दनं॒ द॒क्षिणाज्योतिषं ददा॑ति ॥ २६ ॥

पञ्च॑। रु॒क्मा। ज्योतिः॑। अ॒स्मै॒। भ॒व॒न्ति॒। वर्म॑। वासांसि।
त॒न्वे॑। भ॒व॒न्ति॒। स्वः॒ऽगम्। लो॒कम्। अ॒श्नु॒ते॒। यः।
अ॒जम्। पञ्च॑ऽओदनम्। द॒क्षिणाऽज्योतिषम्। ददा॑ति ॥ २६ ॥

**यः** पुरुषः **अजम्** अजन्मानं परमात्मानं **पञ्चौदनं** लक्ष्यीकृत्य **दक्षिणाज्योतिषं** रूप्यकसुवर्णादिकं दक्षिणायां **ददाति** सः **स्वर्गं लोकं** नाकलोकम् **अश्नुते** प्राप्नोति। **अस्मै ज्योतिः** भास्वन्ति **पञ्च रुक्मा** पञ्च संख्यकानि सुवर्णाभरणानि **भवन्ति, वर्म** कवचं **वासांसि** वस्त्राणि च **तन्वे** शरीराय भवन्ति ॥ २६ ॥

या पूर्वं॒ पतिं॑ वि॒त्त्वाऽथा॒न्यं वि॒न्दतेऽप॑रम्।
पञ्चौ॑दनं च॒ ताव॒जं ददा॑तो॒ न वि यो॑षतः ॥ २७ ॥

या। पूर्व॑म्। पति॑म्। वि॒त्त्वा। अथ॑। अ॒न्यम्। वि॒न्दते॑।
अप॑रम्। पञ्च॑ऽओदनम्। च॒। तौ। अ॒जम्। ददा॑तः। न।
वि। यो॒ष॒तः ॥ २७ ॥

**या** वाग्दत्ता स्त्री **पूर्वं पतिं वित्त्वा** वचनमात्रेण लब्ध्वा **अथ** पश्चात् केनापि कारणेन यथाह पराशरः—'नष्टे मृते प्रव्रजिते' इत्यादि (४.३०), पूर्वं पतिं विहाय **अन्यम्** अपरं द्वितीयं पतिं **विन्दते** कुरुते तदा **तौ** दम्पती स्वात्मानम् **अजम्** अजन्मानं **पञ्चौदनं** भक्ष्यरूपेण पञ्चभूतात्मकं जगदिदं धारयन्तं प्रभुं **ददातः** समर्पयतः, तदा तौ **न वियोषतः** न कदापि वियुक्तौ भवतः ॥ २७ ॥

समानलोको भवति पुनर्भुवाऽपरः पतिः ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २८ ॥

समानऽलोकः । भवति । पुनःऽभुवा । अपरः । पतिः । यः । अजम् ।
पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २८ ॥

अपरः द्वितीयः पतिः पुनर्भुवा द्विरूढया पत्न्या सह पुनःपूर्वात्, 'भू सत्तायाम्' (भ्वा०) क्विप्, 'पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषूः पतिः' इत्यमरः (अमरकोष २.६.२३) **समानलोकः** समानलोकवास्तव्यो **भवति, यः अजम्** इत्यादि पूर्ववत् ॥ २८ ॥

अनुपूर्ववत्सां धेनुमनड्वाहमुपबर्हणम् ।
वासो हिरण्यं दत्त्वा ते यन्ति दिवमुत्तमाम् ॥ २९ ॥

अनुपूर्वऽवत्साम् । धेनुम् । अनड्वाहम् । उपऽबर्हणम् ।
वासः । हिरण्यम् । दत्त्वा । ते । यन्ति । दिवम् । उत्ऽतमाम् ॥ २९ ॥

**अनुपूर्ववत्साम्** यथाक्रमं यथापूर्वं वा वत्सप्रदात्रीम्, सदा प्रस्रवित्रीं **धेनुं** गाम् **अनड्वाहं** भारवहनक्षमं बलीवर्दम् च **उपबर्हणं वासः** प्रावरकं वस्त्रम्, **हिरण्यं** सुवर्णम्, तत्सहितम्, **दत्त्वा** ये वेदविदे ब्राह्मणाय ददति, तथा कृत्वा **ते** दातारः **उत्तमां दिवम्** सर्वोत्कृष्टं द्युलोकं **यन्ति** प्राप्नुवन्ति ॥ २९ ॥

आत्मानं पितरं पुत्रं पौत्रं पितामहम् ।
जायां जनित्रीं मातरं ये प्रियास्तानुप ह्वये ॥ ३० ॥

आत्मानम् । पितरम् । पुत्रम् । पौत्रम् । पितामहम् । जायाम् ।
जनित्रीम् । मातरम् । ये । प्रियाः । तान् । उप । ह्वये ॥ ३० ॥

भोः भोः सम्बन्धिनः ! शृणुत, अस्मिन् दानयज्ञे अहम् **आत्मानम्** स्वकीयात्मानम् **पितरम्, पितामहम्, जनित्रीम्** जन्मप्रदायिनीं **मातरम् जायाम् पुत्रम्, पौत्रम् ये** च अन्ये मम **प्रियाः** सुहृदादयः, **तान्** सर्वान् अहं क्रतौ अस्मिन् **उपह्वये** आह्वयामि ॥ ३० ॥

यो वै नैदाघं नामर्तुं वेद । एष वै नैदाघो नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ ३१ ॥

यः । वै । नैदाघम् । नाम । ऋतुम् । वेद । एषः । वै ।
नैदाघः । नाम । ऋतुः । यत् । अजः । पञ्चऽओदनः ।
निः । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । दहति ।
भवति । आत्मना । यः । अजम् । पञ्चऽओदनम् ।
दक्षिणाऽज्योतिषम् । ददाति ॥ ३१ ॥

**यः** पुरुषः **वै** निश्चयेन **नैदाघं नाम ऋतुं** ग्रीष्मर्तुं **वेद** जानाति, कोऽसौ नैदाघो नाम ? तदाह **यद् पञ्चौदनः अजः एषः वै** निश्चयेन, नूनं स पञ्चौदनः, अज एव **नैदाघः नाम ऋतुः** ज्ञेयः । नितरां दह्यतेऽस्मिन्निति निदाघः 'दह भस्मीकरणे' 'हलश्च' (          ) इति घञ् न्यङ्क्वादित्वात् इत्यनेन कुत्वम् । निदाघस्यायं नैदाघः । अजन्मा पञ्चौदनो जीवात्मा यदा सुतप्तो भवति, तपश्चरणादिना भृशं दह्यते तदा स 'नैदाघ' इत्युच्यते । स पुमान् **अप्रियस्य** अप्रियाचरणकर्तुः **भ्रातृव्यस्य** शत्रोः **श्रियं** लक्ष्मीं **निर्दहति** निःशेषेण भस्मसात् करोति तथा **आत्मना भवति** आत्मबलेन श्रिया सह तिष्ठति **यः पञ्चौदनम् अजम्** इत्यादि द्वाविंशतितममन्त्रस्य उत्तरार्धवत् ॥ ३१ ॥

यो वै कुर्वन्तं नामर्तुं वेद । कुर्वतीं कुर्वतीमेवाप्रियस्य भ्रातृव्यस्य
श्रियमा दत्ते । एष वै कुर्वन्नामर्तुर्यदजः ० । ० । ॥ ३२ ॥

यः । वै । कुर्वन्तम् । नाम । ऋतुम् । वेद । कुर्वतीम्-
ऽकुर्वतीम् । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । आ ।
दत्ते । एषः । वै । कुर्वन् । नाम । ० ॥ ३२ ॥

**यः** पुमान् **वै** निश्चयेन **कुर्वन्तं नाम ऋतुं** कर्तृशक्तिमन्तं क्रियाशक्तिमन्तं वा वर्षर्तुम् कुर्वन्तमिति अपराख्यया **वेद** जानाति, स **अप्रियस्य** अहितकारिणः **भ्रातृव्यस्य** शत्रोः **कुर्वतीम् कुर्वतीम्** प्रत्येकां

रचनाशक्तियुतां श्रियं लक्ष्मीं शोभां वा आदत्ते गृह्णाति, अपहरति। एष वै 'कुर्वन्' नाम ऋतुः, इत्यादि पूर्ववत् ॥ ३२ ॥

यो वै संयन्तं नामर्तुं वेद। संयतींसंयतीमेवाप्रियस्य
भ्रातृव्यस्य श्रियमा दत्ते।
एष वै संयन्नाम। ०। ०। ०॥ ३३ ॥

यः। वै। सम्ऽयन्तम्। नाम। ऋतुम्। वेद।
संयतीम्ऽसंयतीम्। एव। ०। एषः। वै। सम्ऽयन्।
नाम। ०॥ ३३ ॥

यः पुरुषः संयन्तम् नाम 'संयन्' नामकं शरदत्वेपरपर्यायम् ऋतुम् वेद जानाति, सः अप्रियस्य भ्रातृव्यस्य संयतीं संयतीं संयमवतीं प्रत्येकां श्रियम् आदत्ते। एष वै अजः पञ्चौदनः संयत् नाम ऋतुः नूनं पञ्चौदनः अज एव संयन्नामकः इत्यादि शिष्टं पूर्ववत् ॥ ३३ ॥

यो वै पिन्वन्तं नामर्तुं वेद। पिन्वतींपिन्वतीमेवा-
प्रियस्य भ्रातृव्यस्य श्रियमा दत्ते।
एष वै पिन्वन्नाम ०। ०। ०॥ ३४ ॥

यः। वै। पिन्वन्तम्। नाम। ०। पिन्वतीम्ऽपिन्वतीम्।
एव। ०। एषः। वै। पिन्वन्। नाम। ०॥ ३४ ॥

यः पुमान् पिन्वन्तं सिञ्चन्तम् अतितरां पोषयन्तं वा 'हेमन्ता'-परपर्यायम् ऋतुं वेद सः अप्रियस्य भ्रातृव्यस्य पिन्वतीं पिन्वतीं सुभृशं सिञ्चन्तीं, पोषयन्तीं वा श्रियम् आदत्ते हरति। एष वै पिन्वन् नाम इत्यादि यथापूर्वम् ॥ ३४ ॥

यो वा उद्यन्तं नामर्तुं वेद। उद्यतीमुद्यतीमेवाप्रियस्य
भ्रातृव्यस्य श्रियमा दत्ते।
एष वा उद्यन्नाम ०। ०। ०॥ ३५ ॥

यः । वै । उत्ऽयन्तम् । नाम । ० । उद्यतीम्ऽउद्यतीम् ।
एव । ० । एषः । वै । उत्ऽयन् । नाम । ० ॥ ३५ ॥

यः वै उद्यन्तं नाम उद्गच्छन्तम् उत्तरायणगामिसूर्यकं 'शिशिरा-पर पर्यायम् 'उद्यन्तं' नामानाम् ऋतुं वेद अमित्रस्य भ्रातृव्यस्य 'उद्यतीम् उद्यतीम्' अतितराम् उदयं प्राप्नुवतीं श्रियम् इत्यादि शिष्टं समानम् ॥ ३५ ॥

यो वा अभिभुवं नामर्तुं वेद ।
अभिभवन्तीमभिभवन्तीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वा अभिभूर्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ ३६ ॥

यः । वै । अभिऽभुवम् । नाम । ऋतुम् । वेद । अभिभवन्तीम्ऽअभिभवन्तीम् एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । आ । दत्ते । एषः । वै । अभिऽभूः । नाम । ऋतुः । यत् । अजः । पञ्चऽओदनः । निः । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । दहति । भवति । आत्मना । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ ३६ ॥

यः अभिभुवं नाम शीतस्य अभिभवितारं 'वसन्ता'परपर्यायं अभिभूनामानम् ऋतुं वेद स अमित्रस्य भ्रातृव्यस्य अभिभवन्तीम् अभिभवन्तीम् भूयोभूयः परपराभवकारिणीं प्रत्येकां श्रियम् आदत्ते हरति । यः पञ्चौदनः अजः, एष वै अभिभूः नाम ऋतुः इत्यादि यथापूर्वम् ॥ ३६ ॥

अजं च पचत पञ्च चौदनान् ।
सर्वा दिशः संमनसः सध्रीचीः सान्तर्देशाः प्रति गृह्णन्तु त एतम् ॥ ३७ ॥

अजम् । च । पचत । पञ्च । च । ओदनम् । सर्वाः । दिशः । सम्ऽमनसः । सध्रीचीः । सऽअन्तर्देशाः । प्रति । गृह्णन्तु । ते । एतम् ॥ ३७ ॥

अजं जन्मादिषड्विकाररहितं परमात्मानमुद्दिश्य **अजम्** अजन्मानं गतिशीलं जीवात्मानं **पचत** परिपक्वं कुरुते च **पञ्चओदनान्** जीवात्मनस्तस्य उपभोगसाधनभूतान् पञ्चसंख्यकान् ओदनान् अपि सहैव परिपक्वान् कुरुते । **सान्तर्देशाः** उपदिशाभिः सहिताः **सर्वा दिशः** प्राच्यादयः सकलाः दिशः **संमनसः** समानमनस्काः **सध्रीचीः** सह वर्तमानाः, सह गच्छन्तीर्वा **ते** तुभ्यं परमात्मनः कृते **एतम्** अजं जीवात्मानं **प्रतिगृह्णन्तु** स्वीकुर्वन्तु ॥ ३७ ॥

तास्ते रक्षन्तु तव तुभ्यमेतं ताभ्य आज्यं हविरिदं जुहोमि ॥ ३८ ॥

ताः । ते । रक्षन्तु । तव । तुभ्यम् । एतम् । ताभ्यः । आज्यम् । हविः । इदम् । जुहोमि ॥ ३८ ॥

**ताः** पूर्वोक्ताः प्राच्यादयः दिशः । यद्वा **ताः** नराः नार्यश्च **ते** तव **तुभ्यं** त्वत्कल्याणाय **एतम् यज्ञम्** अजोत्सर्गाख्यमिति यावत्, **रक्षन्तु** पान्तु । **ताभ्यः** दिग्भ्यः **इदम् आज्यं हविः** इमां घृताहुतिं **जुहोमि** प्रददामीति ॥ ३८ ॥

## षट्पर्यायं षष्ठं सूक्तम् : अतिथिसत्कारः (प्रथमः पर्यायः)

(१–६२) (षट्पर्यायाः) ऋषिः—ब्रह्मा। देवता—अतिथिः, विद्या। छन्दः—(प्रथमपर्यायस्य १–१७ मन्त्राणाम्) १ त्रिपदा गायत्री; २ त्रिपदार्षी गायत्री; ३,७ साम्नी त्रिष्टुप्; ४,९ आर्च्यनुष्टुप्; ५ आसुरी गायत्री; ६ त्रिपदा साम्नी जगती; ८ याजुषी त्रिष्टुप्; १० साम्नी भूरिग्बृहती; ११,१४–१६ साम्न्यनुष्टुप्, १२ विराड् गायत्री; १३ साम्नी निचृत्पङ्क्तिः; १७ त्रिपदा विराड् भूरिग्गायत्री।

साम्प्रदायिकास्तु—"यो विद्याद्' इति सूक्तेन जपं करोति स्वर्गकामः" इति विनियोगमाला। वस्तुतस्तु 'यो विद्याद्' इत्यारभ्य

'यत्क्षत्तारम्' इत्यन्तेषु षट्सु पर्यायेषु अतिथेर्माहात्म्यम्, तत्सभाजनं तस्य च यज्ञवत्फलमिति आतिथ्यस्य गौरवो वर्ण्यते ।

यो वि॒द्याद् ब्रह्म॑ प्र॒त्यक्षं॒ परूं॑षि॒ यस्य॑ संभा॒रा ऋचो॒ यस्या॑नू॒क्य॑म् ॥ १ ॥

सामा॑नि॒ यस्य॒ लोमा॑नि॒ यजु॒र्हृद॑यमु॒च्यते॑ परि॒स्तर॑ण॒मिद्ध॒विः ॥ २ ॥

यः । वि॒द्यात् । ब्रह्म॑ । प्र॒ति॒ऽअ॒क्षम् । परूं॑षि । यस्य॑ । स॒म्ऽभा॒राः । ऋचः॑ । यस्य॑ । अ॒नू॒क्य॑म् । सामा॑नि । यस्य॑ । लोमा॑नि । यजुः॑ । हृद॑यम् । उ॒च्यते॑ । प॒रि॒ऽस्तर॑णम् । इत् । ह॒विः ॥ १-२ ॥

यः पुरुषः ब्रह्म किमस्तीति जिज्ञासायां तत्स्वरूपं **प्रत्यक्षं विद्यात्** विजानीयात्, विजानाति । **यस्य** ब्रह्मणः **परूंषि** मर्मस्थलानि, यद्वा अङ्गानां पर्वाणि **सम्भाराः** यज्ञसामग्रीरूपाः, **ऋचः** ऋग्वेदमन्त्राः **यस्य अनूक्यम्** पृष्ठवंशास्थीनि सन्ति । **यस्य लोमानि** रोमाणि **सामानि** सामतुल्यानि, यस्य **हृदयं** हृत्-प्रदेशः **यजुः** यजुःसदृशम् उच्यते, **परिस्तरणं** पर्यङ्के आस्तरणादिकम् **इत्** एव **हविः** यज्ञाहुतिः, उच्यते इति पूर्वेणान्वयः ॥ १-२ ॥

यद् वा अति॑थिप॒ति॒रति॑थीन् प्र॒ति॒पश्य॑ति दे॒वयज॑नं॒ प्रेक्ष॑ते ॥ ३ ॥

यद॑भि॒वद॑ति दी॒क्षामु॒पैति॒ यदु॑द॒कं याच॑त्य॒पः प्र ण॑यति ॥ ४ ॥

यत् । वै । अति॑थिऽपतिः । अति॑थीन् । प्र॒ति॒ऽपश्य॑ति । दे॒व॒ऽयज॑नम् । प्र । ई॒क्ष॒ते । यत् । अ॒भि॒ऽवद॑ति । दी॒क्षाम् । उप॑ । ए॒ति॒ । यत् । उ॒द॒कम् । याच॑ति । अ॒पः । प्र । न॒य॒ति॒ ॥ ३-४ ॥

**वै** निश्चयेन **यत्** यदा **अतिथिपतिः** अतिथीनां गृहेऽभ्यागतानां पालकः **अतिथीन्** अभ्यागतमहानुभावान् **प्रतिपश्यति** सादरम् अवलोकते **देवयजनं** यज्ञभूमिं **प्रेक्षते** पश्यतीति मन्तव्यम् । **यत्** यदा च तान् **अभिवदति** अभिवादयते, प्रणमति तद् **दीक्षाम् उपैति** यज्ञदीक्षां प्राप्नोति,

यज्ञे दीक्षत इति मन्तव्यम् । यत् यदा उदकं जलं **याचति** जलग्रहणाय प्रार्थयते तदा **अपः** जलानि **प्रणयति** प्रणीतापात्रे निदधातीति ॥ ३-४ ॥

**या एव यज्ञ आपः प्रणीयन्ते ता एव ताः ॥ ५ ॥**
**यत् तर्पणमाहरन्ति य एवाग्नीषोमीयः पशुर्बध्यते स एव सः ॥ ६ ॥**

**याः । एव । यज्ञे । आपः । प्रऽनीयन्ते । ताः । एव । ताः । यत् । तर्पणम् । आऽहरन्ति । यः । एव । अग्नीषोमीयः । पशुः । बध्यते । सः । एव । सः ॥ ५-६ ॥**

**यज्ञे याः एव आपः** जलानि ऋत्विग्भिः **प्रणीयन्ते** प्रोक्षणार्थम् आनीयन्ते, **ता एव ताः** आपः विद्यन्ते याः अतिथये हस्तपादादीनां प्रक्षालनाय दीयन्ते । **यत्** यदा अतिथये **तर्पणं** तृप्तिकरं दुग्धादिद्रव्यम् **आहरन्ति** आनयन्ति अतिथिपतयः तदा यः यज्ञे **अग्नीषोमीयः** अग्नीषोमाभ्यां हितः, अग्नि-सोमदेवयोः प्रीतये **पशुः बध्यते** यूपे **सः एव सः** अर्थात् अतिथये दीयमानं दुग्धादिद्रव्यं यज्ञीयपशुसदृशमेव । अग्नीषोमीयः, अग्निश्च सोमश्च अग्नीषोमौ ताभ्यां हितः, 'तस्मै हितम्' (पा० ५.१.५) इत्यनेन छप्रत्ययः ॥ ५-६ ॥

**यदावसथान् कल्पयन्ति सदोहविर्धानान्येव तत् कल्पयन्ति ॥ ७ ॥**
**यदुपस्तृणन्ति बर्हिरेव तत् ॥ ८ ॥**

**यत् । आऽवसथान् । कल्पयन्ति । सदःऽहविर्धानानि । एव । तत् । कल्पयन्ति । यत् । उपऽस्तृणन्ति । बर्हिः । एव । तत् ॥ ७-८ ॥**

**यत्** यदा **आवसथान्** अतिथये निवासस्थानानि **कल्पयन्ति** कुर्वन्ति, शयन-विश्रामादिकरणाय स्थानादिव्यवस्थां कुर्वन्ति **तत्** तदा **सदोहविर्धानान्येव** यज्ञशालायां तत्सम्बद्धान्नादिसम्भारस्थानानि एव **कल्पयन्ति** निर्मिमते इति मन्तव्यम् । आवसथान् इत्यत्र आङ् पूर्वकात् 'वस निवासे' ( १००५ भ्वा० ) इत्यस्मात् 'अथ'प्रत्ययः । एवम्

अतिथेरुपवेशनाय **यत्** आसनादिकम् **उपस्तृणन्ति** प्रसारयन्ति, **बर्हिः एव** तत् यज्ञशालायां समास्तीर्णं कुशासनमेव तदिति बोध्यम् ॥ ७-८ ॥

**यदु॑परिश॒य॒नमा॒हर॑न्ति स्व॒र्गमे॒व तेन॑ लो॒कमव॑ रुन्द्धे ॥ ९ ॥**
**यत् क॑शिपूपबर्ह॒णमा॒हर॑न्ति प॒रि॒धय॑ ए॒व ते ॥ १० ॥**

यत् । उ॒प॒रि॒ऽश॒य॒नम् । आ॒ऽहर॑न्ति । स्वः॒ऽगम् । ए॒व ।
तेन॑ । लो॒कम् । अव॑ । रु॒न्द्धे॒ । यत् । क॒शि॒पु॒ऽउ॒प॒ब॒र्ह॒णम् ।
आ॒ऽहर॑न्ति । प॒रि॒ऽधय॑ः । ए॒व । ते । ॥ ९-१० ॥

**यत्** यदा अतिथये अतिथिपतयः **उपरिशयनं** पर्यङ्के आस्तरणाय वस्त्राणि **आहरन्ति** आनयन्ति **तेन** असौ अतिथिपतिः **स्वर्गं लोकं** नाकलोकम् **एव अवरुन्धे** स्वायत्तीकरोतीत्यूह्यम् । **यत्** यदा **कशिपूपबर्हणम्** आच्छादनं ग्रीवोपधानं च **आहरन्ति** आनयन्ति अतिथिपतयः तदा **ते परिधयः एव** यज्ञवेद्याः प्रान्तभूमय एव, परितः रेखा एव वा । 'कषति (६८५ भ्वा० पर०) दुःखं' 'कष्टे वा शास्ति' नियच्छतीति कशिपुः 'मृगय्वादित्वात्' (उणा० १.३७) साधुः । 'कसि गतिशासनयोः' (१०२४ अदा० आत्म०) । अयमनिडित्येके । तालव्यातोऽप्यनिडित् । कष्टे इति सिद्धान्तकौमुदी । उपबृह्यतेऽनेनेति उपबर्हणम्, 'बृह वृद्धौ' (७३५ भ्वा० पर०) घञ् (पा० ३.३.१९), 'बृहू उद्यमने' (१३४८ तुदा० पर०) इति वा ॥ ९-१० ॥

**यदा॑ञ्जनाभ्यञ्ज॒नमा॒हर॒न्त्याज्य॑मे॒व तत् ॥ ११ ॥**
**यत् पु॒रा प॑रिवे॒षात् खा॒दमा॒हर॑न्ति पु॒रो॒डाशा॑वे॒व तौ ॥ १२ ॥**

यत् । आ॒ञ्ज॒न॒ऽअ॒भ्य॒ञ्ज॒नम् । आ॒ऽहर॑न्ति । आज्य॑म् । ए॒व ।
तत् । यत् । पु॒रा । प॒रि॒ऽवे॒षात् । खा॒दम् । आ॒ऽहर॑न्ति ।
पु॒रो॒डाशौ॑ । ए॒व । तौ ॥ ११-१२ ॥

**यत्** यदा **अञ्जनाभ्यञ्जनम्** कज्जलं मर्दनाय च चन्दनतैलाद्यभ्यङ्गद्रव्यम् **आहरन्ति** ददति अतिथये अतिथिपतयः **तत् आज्यम् एव** इति ज्ञेयम् । **यत् पुरा** प्रथमं **परिवेषात्** मध्याह्नकाले भोजनात् पूर्वं प्रातराशं

**समाप्य खादं** मध्याह्नभोजनं भक्ष्यम् **आहरन्ति** ददति अतिथिपतयः **तौ** उभौ **पुराडाशौ** एव पुरोडाशतुल्यावेव । परिवेषः प्रातराशः, परि+'विष्लृ व्याप्तौ' (१०९५ जुहो०) घञ्, पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् (वा० २.३.२८) इत्यनेन ल्यब्लोपे कर्मणि पञ्चमी । परिवेषं प्रातराशं समाप्य पश्चात् खादं भोजनमित्यर्थः । पुरोडाशः—"वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशाँश्चरूँश्चैव विधिवन्निर्वपेत् पृथक्" (मनु० ६.११) इति स्मरणात् ।। ११-१२ ।।

**यदशनकृतं ह्वयन्ति हविष्कृतमेव तद्ध्वयन्ति ।। १३ ।।**
**ये व्रीहयो यवा निरुप्यन्तेंऽशव एव ते ।। १४ ।।**
**यान्युलूखलमुसलानि ग्रावाण एव ते ।। १५ ।।**

यत् । अशनऽकृतम् । ह्वयन्ति । हविःऽकृतम् । एव । तत् । ह्वयन्ति । ये । व्रीहयः । यवाः । निःऽउप्यन्ते । अंशवः । एव । ते । यानि । उलूखलऽमुसलानि । ग्रावाणः । एव । ते ।। १३–१५ ।।

**यत् अशनकृतम्** अशनं भोजनं करोति पचतीति, पाचकं **ह्वयन्ति** आकारयन्ति **तत् हविष्कृतम् एव** हविषां चरूणां यज्ञसम्भाराणां वा कर्तारं निर्मातारमेव **ह्वयन्ति** आह्वयन्ति । एवम् **ये व्रीहयः** तण्डुलानि **यवाः** च **निरूप्यन्ते** 'डुवप् बीजसन्ताने' (१००३ भ्वा०) कुट्टन-पेषणादिना सज्जीक्रियन्ते, ते सोमस्य **अंशवः** खण्डा **एव** । **यानि उलूखल-मुसलानि** धान्यानां मर्दनकुट्टनसाधनानि प्रयुज्यन्ते, 'उलूखलमुरूकरं वोर्क्करं वोर्ध्वरवं वा' (निरु० ९.२०) 'मुसलं मुहुः सरम्' (निरु० ९.३५) तानि **ग्रावाणः एव** सोमाभिषवार्थमुपयुज्यमानाः पाषाणा एव ज्ञेयाः ।। १३–१५ ।।

**शूर्पं पवित्रं तुषा ऋजीषाभिषवणीरापः ।। १६ ।।**

शूर्पम् । पवित्रम् । तुषाः । ऋजीषा । अभिऽसवनीः । आपः ।। १६ ।।

**शूर्पम्** प्रस्फोटनं धान्यस्फोटनपात्रं 'सूप' इति भाषाभाषितम्, **पवित्रम्** 'तितउः' एव, 'चालनी' इति भाषायाम्। **तुषाः** धान्यत्वचः **ऋजीषा** सोमस्य निस्सारो भाग एव। 'यत्सोमस्य पूयमानस्यातिरिच्यते ऋजीषमपार्जितं भवति' इति निरुक्तम् (५.१२)। **अभिषवणीः** अतिथेः स्नानपानार्थं प्रयुज्यमानानि जलानि एव **आपः** सोमरसे सम्मेलनीयं 'वसतीवरी'जलं भवति ॥ १६ ॥

**स्रुग् दर्विर्नेक्षणमायवनं द्रोणकलशाः कुम्भ्यो वायव्यानि पात्राणीयमेव कृष्णाजिनम् ॥ १७ ॥**

**स्रुक् । दर्विः । नेक्षणम् । आऽयवनम् । द्रोणऽकलशाः । कुम्भ्यः । वायव्यानि । पात्राणि । इयम् एव । कृष्णऽअजिनम् ॥ १७ ॥**

**दर्विः** सूपादिपरिवेषणपात्रम् एव **स्रुक्** होमार्थं घृतप्रक्षेपकं पात्रम्। **आयवनम्** पाकसाधनपात्रं 'कटाह' एव **नेक्षणम्** सोमरसमिश्रणदण्डः। **कुम्भ्यः** जलघटा एव **द्रोणकलशाः** यज्ञघटाः। **पात्राणि** अतिथेः भोजन-पात्राणि **वायव्यानि** यज्ञे सोमरसपानसाधनानि 'वायव्य'नामकानि पात्राणि, **इयम् एव** अतिथेरावासार्था प्रसिद्धा भूमिरेव **कृष्णाजिनम्** कृष्णमृगचर्म। इत्थम् अतिथौ समागते सति तदभिवादनमारभ्य आसन-स्नान-भोजनादीनि सर्वविधानि तत्समाराधनसाधनानि सर्वाणि वस्तूनि तत्सम्बद्धाश्च सर्वाः क्रियाः सोमयागीयसर्वविधवस्तुक्रियारूपाः इति विस्तरशो निरूपयता भगवता वेदेन अतिथिसेवा सोमयागरूपैव समाख्याता। तेन च निष्कर्षोऽयं यदतिथिसेवया तदेव पुण्यमाप्यते यद्धि सोमयागेन लभ्यते। अतोऽतितरां प्रशस्तमिदं कर्मेति ॥ १७ ॥

## द्वितीयः पर्यायः

छन्दः—(द्वितीय पर्यायस्य १८–३० मन्त्राणाम्) १ विराट् पुरस्ताद् बृहती; २, १२ साम्नी त्रिष्टुप्; ३ आसुरी अनुष्टुप्; ४ साम्नी उष्णिक्; ५, ११ साम्नी बृहती (११ भुरिक्); ६ आर्च्यनुष्टुप्; ७ त्रिपदा स्वराडनुष्टुप्; ८ आसुरी गायत्री; ९ साम्नी अनुष्टुप्; १० त्रिपदार्ची

त्रिष्टुप्; १३ त्रिपदार्ची पङ्क्तिः; (७ पञ्चपदा विराट् पुरस्ताद् बृहती; ८ साम्यनुष्टुप् इति वा)।

यजमानब्राह्मणं वा एतदतिथिपतिः कुरुते यदाहार्याणि प्रेक्षत इदं भूया३ इदा३मिति ॥ १ ॥ (१८)

यजमानऽब्राह्मणम् । वै । एतत् । अतिथिऽपतिः । कुरुते । यत् । आऽहार्याणि । प्रऽईक्षते । इदम् । भूया३ः । इदा३म् । इति ॥ १ ॥

अतिथिपतिः अतिथिसेवापरायणो गृहस्थः यत् यदा अतिथये शय्यासनाशनपानयोग्यानि वस्तूनि **प्रेक्षते** निरीक्षते यत् **इदं भूयाः** इदं वस्तु आनय, **इदा३म्** इदमपि अन्यद् वस्तु अधिकतरं संग्राह्यमिति, **एतत् वै** नूनं **यजमानब्राह्मणं कुरुते** एतादृशनिरीक्षणेन स यजमानः ब्राह्मणवदेव आचरति ॥ १ ॥

यदाह भूय उद्धरेति प्राणमेव तेन वर्षीयांसं कुरुते ॥ २ ॥ (१९)
उप हरति हवींष्या सादयति ॥ ३ ॥ (२०)

यत् । आह । भूयः । उत् । हर । इति । प्राणम् । एव । तेन । वर्षीयांसम् । कुरुते । उप । हरति । हवींषि । आ । सादयति ॥ २-३ ॥

**यत्** यदा यजमानः एवम् **आह भूयः उद्धर इति** इतोऽप्यधिकम् आनयेति **तेन** स **प्राणमेव** स्वकीयं प्राणमेव **वर्षीयांसं** प्रवृद्धतरं **कुरुते**, विदधाति, स्वास्थ्यं दीर्घायुष्यञ्च आप्नोतीत्यर्थः। **उपहरति** सोऽतिथये यत्किञ्चित् उपहाररूपेण प्रयच्छति, यद्वा तत्सन्निधौ दधाति तेन मन्ये **हवींषि** यज्ञयोग्यद्रव्याणि **आसादयति** तत्र स्थापयति ॥ २-३ ॥

तेषामासन्नानामतिथिरात्मन् जुहोति ॥ ४ ॥ (२१)
स्रुचा हस्तेन प्राणे यूपे स्रुक्कारेण वषट्कारेण ॥ ५ ॥ (२२)

तेषाम् । आऽसन्नानाम् । अतिथिः । आत्मन् । जुहोति ।

स्रुचा । हस्तेन । प्राणे । यूपे । स्रुक्ऽकारेण । वषट्-कारेण ॥ ४-५ ॥

आसन्नानाम् समीपस्थितानां तेषां सर्वेषां द्रव्याणाम् अतिथिः आत्मन् आत्मनि शरीराङ्गे मुखे जुहोति आहुतिं ददाति । कथम् ? हस्तेन कररूपेण स्रुचा स्रुगाभिधेन यज्ञपात्रविशेषेण प्राणे प्राणात्मके यूपे यूपस्तम्भे स्रुक्कारेण स्रुक्कार इति शब्दानुकरणं पायसादितरलपदार्थाशनवेलायां जायमानेन 'स्रुक् स्रुक्' इति, तेन स्रुक्कारध्वनिरूपेण वषट्कारेण 'वषट्' इत्युच्चारणेन । अतिथेरेतत् भक्षणं होम एवेति तात्पर्यम् ॥ ४-५ ॥

एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः ॥ ६ ॥ (२३)

स य एवं विद्वान् न द्विषन्नश्नीयान्न द्विषतोऽन्नमश्नीयान्न मीमांसितस्य न मीमांसमानस्य ॥ ७ ॥ (२४)

एते । वै । प्रियाः । च । अप्रियाः । च । ऋत्विजः । स्वःऽगम् । लोकम् । गमयन्ति । यत् । अतिथयः । सः । यः । एवम् । विद्वान् । न । द्विषन् । अश्नीयात् । न । द्विषतः । अन्नम् । अश्नीयात् । न । मीमांसितस्य । न । मीमांसमानस्य ॥ ६-७ ॥

वै नूनम् एते प्रियाः च परिचिताः वा अप्रियाः च अपरिचिताः वा यत् ये अतिथयः अभ्यागताः ते आतिथ्ययज्ञस्य ऋत्विजः ऋत्विक्कल्पाः यजमानं स्वर्गं लोकं नाकलोकं गमयन्ति प्रापयन्ति । यः एवं विद्वान् आतिथ्ययज्ञस्य रहस्यमिदं जानाति स द्विषन् द्वेषभावं दधानः न अश्नीयात् न भक्षयेत् । एवम् द्विषतः द्वेषभावं धारयतो यजमानस्यापि अन्नं न अश्नीयात् न भक्षयेत् । तथैव न मीमांसितस्य शङ्कितचारित्र्यस्य पुरुषस्य उत न मीमांसमानस्य अतिथेश्चारित्र्यं शङ्कमानस्यापि पुंसोऽन्नं नाश्नीयादिति भावः ॥ ६-७ ॥

सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति ॥ ८ ॥ (२५)

सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति ॥ ९ ॥ (२६)

सर्वः । वै । एषः । जग्धऽपाप्मा । यस्य । अन्नम् । अश्नन्ति ॥
सर्वः । वै । एषः । अजग्धऽपाप्मा । यस्य । अन्नम् । न । अश्नन्ति ॥ ८-९ ॥

विद्वांसः अतिथयो **यस्य अन्नम् अश्नन्ति**, भक्षयन्ति, **वै** नूनं, **सर्वः एषः** गृहस्थो यजमानः **जग्धपाप्मा** पापनिर्मुक्तो भवति। पक्षान्तरे अतिथयो **यस्य** यजमानस्य **अन्नं न अश्नन्ति** न भक्षयन्ति **वै** नूनं **सर्वः एषः** स यजमानः **अजग्धपाप्मा** अविनष्टपापः एव तिष्ठति। जग्धपाप्मा' 'अद भक्षणे' क्तः। 'अदो जग्धिर्ल्यप्ति' किति (पा० २.४.३६) इति जग्धादेशः। 'पा पाने', 'पा रक्षणे' वा, मनिन् 'नामन् सीमन् व्योमन्' (उणा० ४०१५१) इत्यनेन युक्। भक्षितं नाशितं पापं येन स जग्धपाप्मा ॥ ८-९ ॥

सर्वदा वा एष युक्तग्रावार्द्रपवित्रो विततध्वर आहृतयज्ञक्रतुर्य उपहरति ॥ १० ॥ (२७)

सर्वदा । वै । एषः । युक्तऽग्रावा । आर्द्रऽपवित्रः । विततऽअध्वरः । आहृतऽयज्ञक्रतुः । यः । उपऽहरति ॥ १० ॥

**वै** नूनम् **एषः** अतिथिसत्कर्ता यजमानः **सर्वदा** सन्ततं **युक्तग्रावा** युक्ताः प्रयुक्ताः ग्रावाणः सोमाभिषवणीयप्रस्तराः 'ग्रावा' इति विशेषसंज्ञां दधाना यस्य स तादृशो भवति। तद्गृहे सदैव ग्रावभिः सोमोऽभिषूयते इति भावः। सः **आर्द्रपवित्रः** सदैव आर्द्रीकृतसोमरसशोधनवस्त्रो भवति। **विततध्वरः** विततः सदैव प्रसृतः अध्वरः सोमयागो यस्य तादृशः, एवम् **आहृतयज्ञक्रतुः** आहृतः साफल्येन स्वायत्तीकृतं यज्ञस्य क्रतुः कर्म येन स तादृशो भवति। सञ्चितसोमयागफलो भवति, **यः** अतिथये **उपहरति** भोजनादिकं समर्पयति ॥ १० ॥

प्राजापत्यो वा एतस्य यज्ञो विततो य उपहरति ॥ ११ ॥ (२८)
प्रजापतेर्वा एष विक्रमाननुविक्रमते य उपहरति ॥ १२ ॥ (२९)

प्राजाऽपत्यः । वै । एतस्य । यज्ञः । विऽततः । यः । उपऽहरति । प्रजाऽपतेः । वै । एषः । विऽक्रमान् । अनुऽविक्रमते । यः । उपऽहरति ॥ १२ ॥

यः यजमानः अतिथये भोजनादिकम् उपहरति प्रयच्छति वै नूनं एतस्य यजमानस्य प्राजापत्यः यज्ञः प्रजापतिदैवत्यो यागो विततः प्रसृतो भवति यः यजमानः भोज्यपानादि अतिथये उपहरति समर्पयति । स एषः वै नूनं प्रजापतेः प्रजापतिदेवस्य, त्वष्टुः विक्रमान् पराक्रमान् अनुविक्रमते अनुसृत्य पराक्रमं करोति, तदीयं शौर्यमनुकरोतीति भावः ।। ११-१२ ।।

योऽतिथीनां स आहवनीयो यो वेश्मनि स गार्हपत्यो
यस्मिन् पचन्ति स दक्षिणाग्निः ॥ १३ ॥ (३०)

यः । अतिथीनाम् । सः । आऽहवनीयः । यः । वेश्मनि । सः । गार्हऽपत्यः । यस्मिन् । पचन्ति । सः । दक्षिणऽअग्निः ॥ १३ ॥

अतिथीनां यः जाठराग्निः सः आहवनीयः अग्निहोत्रीयाग्नित्रयमध्ये प्रथमः 'आहवनीय'नामा अग्निः। यः अतिथिसत्कृतिरूपः अग्निः वेश्मनि गृहे, गृहिणः परिवारे सः गार्हपत्यः द्वितीयो 'गार्हपत्य'नामा अग्निः । यस्मिन् अग्नौ अतिथिभ्योऽन्नादिकं पचन्ति सः दक्षिणाग्निः । सुस्वादुसरसपाकरूप-दाक्षिण्यवान् तृतीयो 'दक्षिणाग्नि'नामा भवति। इत्थमतिथिसत्कारेण त्रयाणाम् अग्नीनां यजनं समग्रः अग्निहोत्रयागो वा अकामेनापि तस्य सम्पद्यत इति तात्पर्यम् ।। १३ ।।

## तृतीयः पर्यायः

[३१-३९] छन्दः—१-६,९ त्रिपदा पिपीलिकमध्या गायत्री; ७ साम्नी बृहती; ८ पिपीलकमध्य उष्णिक् ।

इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः
पूर्वोऽतिथेरश्नाति ॥ १ ॥ (३१)

इष्टम् । च । वै । एषः । पूर्तम् । च । गृहाणाम् । अश्नाति ।
यः । पूर्वः । अतिथेः । अश्नाति ॥ १ ॥

यः गृहस्थः अतिथेः अभ्यागतस्य पूर्वः सन् आदौ अश्नाति अन्नादिकं भक्षयति स गृहाणाम् सम्बन्धे षष्ठी, गृहसम्बन्धि इष्टं च यज्ञयागादींश्च पूर्तं च वापीकूपतडागादींश्च च, तन्निर्माणेन तदनुष्ठानेन वा जायमानं सर्वं पुण्यफलम् अश्नाति भक्षयति, विनाशयतीत्यर्थः । अतः अतिथेः पूर्वम् अन्नादिकं न कदापि भक्षयितव्यमित्येष वेदस्य प्रभुसम्मित आदेशः ॥ १ ॥

पयश्च वा एष रसं च गृहाणामश्नाति यः
पूर्वोऽतिथेरश्नाति ॥ २ ॥ (३२)

पयः । च । वै । एषः । रसम् । च । गृहाणाम् । अश्नाति ।
यः । पूर्वः । अतिथेः । अश्नाति ॥ २ ॥

तमेव विवृणोति—वै नूनं सः गृहाणाम् गृहसम्बन्धि पयः दुग्धम्, तन्निष्पादितं पयोविकारजातम् आज्यादिकमिति यावत् । रसं च रसमयं वस्तुजातञ्च अश्नाति भक्षयति यः अतिथेः अभ्यागतस्य पूर्वः सन् अश्नाति इति भावः ॥ २ ॥

ऊर्जां च वा एष स्फातिं च गृहाणामश्नाति यः
पूर्वोऽतिथेरश्नाति ॥ ३ ॥ (३३)

ऊर्जाम् । च । वै । एषः । स्फातिम् । च । गृहाणाम् ।
अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ३ ॥

यः अतिथेः पूर्वः सन् पूर्वमित्यर्थः, अश्नाति एष गृहाणाम् गृहस्थितानाम् ऊर्जाम् बलं तन्निष्पादकं पराक्रमजातम् स्फातिं समृद्धिं च अश्नाति ॥ ३ ॥

प्रजां च वा एष पशूंश्च गृहाणामश्नाति यः
पूर्वोऽतिथेरश्नाति ॥ ४ ॥ (३४)

प्रऽजाम् । च । वै । एषः । पशून् । च । गृहाणाम् । अश्नाति ।
यः । पूर्वः । अतिथेः । अश्नाति ॥ ४ ॥

यः अतिथेः पूर्वः अश्नाति वै एषः गृहाणाम् प्रजाम् सन्तति पशून् गवाश्वादीन् च अश्नाति भक्षयतीत्यर्थः ॥ ४ ॥

कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः
पूर्वोऽतिथेरश्नाति ॥ ५ ॥ (३५)

कीर्तिम् । च । वै । एषः । यशः । च । गृहाणाम् । अश्नाति ।
यः । पूर्वः । अतिथेः । अश्नाति ॥ ५ ॥

कीर्तिम् प्रसिद्धि गुणादिकीर्तनरूपाम् 'कृत संशब्दने' (१६५४ चरादि०) इत्यस्मात् 'ऊतियूति०' इत्यनेन निपातितम्। यशः च गुणादीनां प्रसारः आध्यात्मिकीं प्रख्याति च, यशः अश्नाति व्याप्नोति, 'अशू व्याप्तौ संघाते च' (१२६५ स्वा०) इत्यस्मात् 'अशेर्देवने युट् च' (उणा० ४.१९१) इत्यनेन युट्। शेषं पूर्ववत् ॥ ५ ॥

श्रियं च वा एष संविदं च गृहाणामश्नाति यः
पूर्वोऽतिथेरश्नाति ॥ ६ ॥ (३६)

श्रियम् । च । वै । एषः । सम्ऽविदम् । च । गृहाणाम् ।
अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ६ ॥

श्रियं शोभां सेवनीयां सम्पदं वा, संविदम् सौहार्दं ज्ञानादिकं वा। 'संवित् सम्भाषणे ज्ञाने संग्रामे नाम्नि तोषणे। क्रियाकारे प्रतिज्ञायां संकेताचारयोरपि' इति हैमः (२.२३९)। शेषं पूर्ववत् ॥ ६ ॥

एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात् पूर्वो नाश्नीयात् ॥ ७ ॥ (३७)

एषः । वै । अतिथिः । यत् । श्रोत्रियः । तस्मात् । पूर्वः । न ।
अश्नीयात् ॥ ७ ॥

अतिथिः कः ? इति जिज्ञासायामाह—**यत्** यः **श्रोत्रियः** वेदज्ञः वेदानामध्येता पुरुषः 'श्रोत्रियश्छन्दोऽधीते' (पा० ५.२.८४) छन्दस् घन्। **वै** नूनम् **एषः अतिथिः। तस्मात्** वेदज्ञात् पूर्वः सन् अन्नं **न अश्नीयात्** इत्युपसंहरति ॥ ७ ॥

**अशितावत्यतिथावश्नीयाद् यज्ञस्य सात्मत्वाय यज्ञस्याविच्छे-दाय तद् व्रतम् ॥ ८ ॥** (३८)

**अशितऽवति । अतिथौ । अश्नीयात् । यज्ञस्य । सात्मऽत्वाय । यज्ञस्य । अविऽछेदाय । तत् । व्रतम् ॥ ८ ॥**

**अतिथौ** अभ्यागते **अशितावति** भुक्तवती, भोजनं कृतवती, सांहितिको दीर्घः **अश्नीयात्** स्वयं भोजनं कुर्यात्, **यज्ञस्य** अतिथियज्ञस्य **सात्मत्वाय** सजीवनाय, साङ्गतायै वा **यज्ञस्य अविच्छेदाय** नैरन्तर्याय, सातत्याय । **तद् व्रतम्** गृहस्थस्येदं व्रतमस्तीति भावः ॥ ८ ॥

**एतद् वा उ स्वादीयो यदधिगवं क्षीरं वा मांसं वा तदेव नाश्नीयात् ॥ ९ ॥** (३९)

**एतत् । वै । ऊं इति । स्वादीयः । यत् । अधिऽगवम् । क्षीरम् । वा । मांसम् । वा । तत् । एव । न । अश्नीयात् ॥ ९ ॥**

**वै** नूनम् **एतत्** द्रव्यम् **उ** एव **स्वादीयः** अतितरां स्वादु प्रीतिकरं रोचकं **यत् अधिगवम्** गवि भवं **क्षीरं** दुग्धम्, **वा** समुच्चये, **मांसम्** मननसाधकं बुद्धिवर्धकं तदतिरिक्तं वा वस्तु। 'मन ज्ञाने' (११७६ दिवा०) सप्रत्ययो दीर्घश्च। 'मांसं माननं वा मानसं वा, मनोऽस्मिन्त्सीदतीति वा' (निरु० ४.३) । यद्वा—गोदुग्धेन समुत्पन्नं सारभूतं तत्त्वं नवनीत-घृतादिकम् । तत् सर्वं पूर्वोक्तम् अतिथेः पूर्वं **न एव अश्नीयात्** नैव भक्षयेत्। यद्वा नशब्दः संप्रत्यर्थे इति सायणः (ऋ० ७.१०३.७) इदानीम्, अतिथेर्भोजनस्य पश्चादेव तत् सर्वम् अश्नीयादिति ॥ ९ ॥

## चतुर्थः पर्यायः

[४०–४४] छन्दः—१.३.५.७ प्राजापत्यानुष्टुप्; ९ भुरिक् २, ४, ६ त्रिपदा गायत्री; ९ भुरिक् प्राजापत्या गायत्री; १० चतुष्पदा प्रस्तारपङ्क्तिः।

स य एवं विद्वान् क्षीरमुपसिच्योपहरति ॥ १ ॥
यावदग्निष्टोमेनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥ २ ॥ (४०)

सः। यः। एवम्। विद्वान्। क्षीरम्। उपऽसिच्य। उपहरति। यावत्। अग्निऽस्तोमेन। इष्ट्वा। सुऽसमृद्धेन। अवऽरुन्द्धे। तावत्। एनेन। अव। रुन्द्धे ॥ १-२ ॥

सः यः एव विद्वान् अतिथिसेवारहस्यं विजानन् यजमानः अतिथये क्षीरम् गोदुग्धम् उपसिच्य पात्रे निधाय उपहरति समर्पयति; सुसमृद्धेन अतिसम्पत्सम्पन्नेन अग्निष्टोमेन अग्निष्टोमाख्येन सोमयागेन इष्ट्वा यजनं विधाय यावत् फलं अवरुन्द्धे प्राप्नोति तावत् सुसमृद्धं फलम् एनेन अतिथिसत्कारेण सः अवरुद्धे प्राप्नोति ॥ १-२ ॥

स य एवं विद्वान्त्सर्पिरुपसिच्योपहरति ॥ ३ ॥
यावदतिरात्रेणेष्ट्वा० ॥ ४ ॥ (४१)

सः। यः। एवम्। विद्वान्। सर्पिः। उपऽसिच्य। उपऽहरति। यावत्। अतिऽरात्रेण। इष्ट्वा ॥ ० ॥ ३-४ ॥

सूप-शाकादिषु सर्पिः धृतम्, शेषं पूर्ववत्। सुसमृद्धेन अतिरात्रेण अतिरात्रनामकेन सोमयागविशेषेण। शेषं पूर्ववत् ॥ ३-४ ॥

स य एवं विद्वान् मधूपसिच्योपहरति ॥ ५ ॥
यावत् सत्रसद्येनेष्ट्वा० ॥ ६ ॥ (४२)

सः । यः । एवम् । विद्वान् । मधु । उपऽसिच्य । उपऽहरति ।
यावत् । सत्त्रऽसद्येन । इष्ट्वा । ० ॥ ५-६ ॥

**मधु** माक्षिकम्, शेषं पूर्ववत् । **सुसमृद्धेन सत्रसद्येन** सत्रनामकेन यज्ञेन । शेषं पूर्ववत् ॥ ५-६ ॥

**स य एवं विद्वान् मांसमुपसिच्योपहरति ॥ ७ ॥**

**यावद् द्वादशाहेनेष्ट्वा सुसंमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥ ८ ॥ (४३)**

सः । यः । एवम् । विद्वान् । मांसम् । उपऽसिच्य । उपऽहरति ॥
यावत् । द्वादशऽअहेन । इष्ट्वा । सुऽसंमृद्धेन । अवऽरुन्द्धे ।
तावत् । एनेन । अव । रुन्द्धे ॥ ७-८ ॥

**मांसम्** मननसाधकं बुद्धिवर्धकं गोविकारातिरिक्तं सरसं वस्तु, गोक्षीरप्रसूतसारभूतं नवनीत-घृतादिकं वा । शेषं पूर्ववत् । **द्वादशाहेन** द्वादशदिवससाध्येन सत्र-अहीन-उभयात्मकेन यागविशेषेण । शेषं पूर्ववत् ॥ ७-८ ॥

**स य एवं विद्वानुदकमुपसिच्योपहरति ॥ ९ ॥**
**प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति य एवं विद्वानुदकमुपसिच्योपहरति ॥ १० ॥ (४४)**

सः । यः । एवम् । विद्वान् । उदकम् । उपऽसिच्य । उपऽहरति ।
प्रऽजानाम् । प्रऽजननाय । गच्छति । प्रतिऽस्थाम् । प्रियः ।
प्रऽजानाम् । भवति । यः । एवम् । विद्वान् । उदकम् ।
उपऽसिच्य । उपऽहरति ॥ ९-१० ॥

**विद्वान्** अतिथिसेवारहस्यं विजानन् **स यः** गृहस्थः अतिथये केवलम् **उदकं** जलं **उपसिच्य** पात्रे निधाय **उपहरति** प्रयच्छति, स **प्रजानां** सन्ततीनां **प्रजननाय** उत्पादनाय **प्रतिष्ठां** स्थिरतां **गच्छति** प्राप्नोति, प्रजानां सन्ततीनां **प्रियः** प्रीतिपात्रं च **भवति** । अन्यत् पूर्ववत् ॥ ९-१० ॥

## पञ्चमः पर्यायः

[४५-४८] छन्दः-१ साम्नी उष्णिक्; २ पुरोष्णिक्; ३.५.७ (अनयोः पञ्चमसप्तममन्त्रयोरुत्तरार्धः), १० साम्नी भरिग्बृहती; ४, ६, ९ साम्नी अनुष्टुप्; ५ (पूर्वार्द्धः) त्रिपदा विराड्विषमा गायत्री; ८ त्रिपदा विराडनुष्टुप् ।

तस्मा॑ उ॒षा हिङ्कृ॑णोति सवि॒ता प्र स्तौ॑ति ॥ १ ॥

बृ॒हस्पति॑रू॒र्जयोद्गा॑यति॒ त्वष्टा॒ पुष्ट्या॒ प्रति॑ हरति॒ विश्वे॑ दे॒वा नि॒धन॑म् ॥ २ ॥

नि॒धनं॒ भूत्या॑ः प्र॒जाया॑ः प॒शूनां॒ भ॑वति॒ य ए॒वं वेद॑ ॥ ३ ॥(४५)

तस्मै॑ । उ॒षाः । हिङ् । कृ॒णो॒ति॒ । स॒वि॒ता । प्र । स्तौ॒ति॒ ।
बृ॒ह॒स्पति॑ः । ऊ॒र्जया॑ । उत् । गा॒य॒ति॒ । त्वष्टा॑ । पुष्ट्या॑ । प्रति॑ ।
ह॒र॒ति॒ । विश्वे॑ । दे॒वाः । नि॒ऽधन॑म् । नि॒ऽधन॑म् । भूत्या॑ः ।
प्र॒ऽजाया॑ः । प॒शूना॑म् । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥१-३॥

तस्मै अतिथिसेविने यजमानाय **उषा** व्युष्टिः, **हिङ्कृणोति** हिङ्कारं कुरुते 'हिम्' इति शब्दयति । **सविता** सर्वप्रेरकः स सूर्यः **प्रस्तोति** प्रस्तावं करोति । **बृहस्पतिः ऊर्जया** प्राणबलेन **उद्गायति** उच्चैः उद्गानं करोति, **त्वष्टा** प्रजापतिः त्वष्टृदेवः **पुष्ट्या** पोषणकर्मणा **प्रतिहरति** प्रतिहारं करोति । **विश्वेदेवाः** विश्वदेवनामका अन्ये वा सर्वे देवाः **निधनम्** अस्य निधनस्थानं भवति । निधनं अन्तिमा सीमा पराकाष्ठा वा । पुरुषः अतिथिसत्कारस्य **एवम्** इत्थं माहात्म्यं रहस्यं वा **वेद** विजानाति सः **भूत्याः** ऐश्वर्यस्य **प्रजायाः** सन्ततेः **पशूनां** च **निधनं** निधानं भवति तेषां चरमां कोटिमाटीकते ।

अयमभिसन्धिः—यज्ञेषु यानि सामानि गीयन्ते तेषां साम्नां पञ्च अवयवाः-१. हिङ्कारः, २. प्रस्तावः, ३. उद्गीथः, ४. प्रतिहारः, ५. निधनश्चेति । स्वीकृतिसूचको हिंशब्दो हिङ्कारः । अत्र नासिकाभ्यां 'हिङ्' इति ध्वनिना सह वायोर्बहिर्निष्क्रमणं क्रियते । 'वायुरेव हिङ्कारः' (जैमि० उ० १.३६.९) । 'प्राणो हि वै हिङ्कारस्तस्मादपि गृह्यः नासिकेन हिङ्कर्तुं शक्नोति' (शत० ब्रा० १.४.१.२) ॥ १-३ ॥

तस्मा उद्यन्त्सूर्यो हिङ्कृणोति संगवः प्र स्तौति ॥ ४ ॥
मध्यन्दिन उद्गायत्यपराह्णः प्रति हरत्यस्तंयन्निधनम् ।
निधनं० ॥ ५ ॥ (४६)

तस्मै । उत्ऽयन् । सूर्यः । हिङ् । कृणोति । सम्ऽगवः । प्र । स्तौति । मध्यन्दिनः । उत् । गायति । अपरऽअह्नः । प्रति । हरति । अस्तम्ऽयन् । निऽधनम् । निधनम् ॥ ० ॥ ४-५ ॥

उद्यन् उद्गच्छन् सूर्यः दिवाकरः **तस्मै** यजमानाय **हिङ्कृति** हिङ्कारं करोति । **संगवः** गोभिः किरणैः संगतो मध्याह्नकालात् पूर्वभाविसूर्यः **प्रस्तौति** प्रस्तावं कुरुते । **मध्यन्दिनः** मध्याह्नकालिकः सूर्यः **उद्गायति** उद्गानं करोति । **अपराह्णः** अपराह्णकालिकः सूर्यः **प्रतिहरति** प्रतिहारं करोति । **अस्तंयन्** अस्तं गच्छन् सूर्यः **निधनम्** निधनाख्यमङ्गं सम्पादयति, अन्तिमा सीमाभवति । शेषं पूर्ववत् ॥ ४-५ ॥

तस्मा अभ्रो भवन् हिङ्कृणोति स्तनयन् प्र स्तौति ॥ ६ ॥
विद्योतमानः प्रति हरति वर्षन्नुद्गायत्युद्गृह्णन् निधनम् ।
निधनम् ॥ ० ॥ ७ ॥ (४७)

तस्मै । अभ्रः । भवन् । हिङ् । कृणोति । स्तनयन् । प्र । स्तौति । विऽद्योतमानः । प्रति । हरति । वर्षन् । उत् । गायति । उत्ऽगृह्णन् । निऽधनम् । निऽधनम् ॥ ० ॥ ६-७ ॥

अतिथियज्ञानुष्ठात्रे यजमानाय **अभ्रः भवन्** उद्यन्मेघः **हिङ्करोति** । **स्तनयन्** गर्जन् स **प्रस्तोति** प्रस्तावं करोति । **विद्योतमानः** विद्युता देदीप्यमानः **प्रतिहरति** प्रतिहारं करोति । **वर्षन्** वृष्टिं कुर्वन् स **उद्गायति** उद्गानं कुरुते । **उद्गृह्णन्** जलानामूर्ध्वमुत्थापनं कुर्वन् **निधनम्** निधनं करोति । शेषं पूर्ववत् ॥ ६-७ ॥

अतिथीन् प्रति पश्यति हिङ्कृणोत्यभि वदति प्र स्तौत्युदकं याचत्युद्गायति ॥ ८ ॥

उप हरति प्रति हरत्युच्छिष्टं निधनम् ॥ ९ ॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ १० ॥ (४८)

अतिथीन् । प्रति । पश्यति । हिङ् । कृणोति । अभि । वदति । प्र । स्तौति । उदकम् । याचति । उत् । गायति । उप । हरति । प्रति । हरति । उत्ऽशिष्टम् । निऽधनम् । निऽधनम् । भूत्याः । प्रऽजायाः । पशूनाम् । भवति । यः । एवम् । वेद ॥ ८–१० ॥

यदा यजमानः अतिथीन् अभ्यागतान् प्रति पश्यति विलोकयति, मन्ये हिङ्कृणोति हिङ्कारं कुरुते । यदा स तस्मै अभिवदति अभिवादनं करोति, नमस्करोति प्रस्तौति स प्रस्तावः । उदकं जलं याचति ग्रहणाय प्रार्थयते, उद्गायति सोऽयं तस्य उद्गीथः । उपहरति—शय्यासनाशन-पानादिद्रव्याणि समर्पयति प्रतिहारः स प्रतिहार एव । उच्छिष्टं भोजनान्तरं यत किञ्चिदवशिष्टं पात्रे तत् निधनम् निधनमिति गीयते । शेषं पूर्ववत् ॥ ८–१० ॥

## षष्ठः पर्यायः

[४९–६२] छन्दः—१ आसुरी गायत्री; २ साम्नी अनुष्टुप्; ३, ५ त्रिपदार्ची पङ्क्तिः; ४ एकपदा प्राजापत्या गायत्री; ६–११ आर्ची बृहती; १२ एकपदा आसुरी जगती; १३ याजुषी त्रिष्टुप् १४ एकपदासुरी उष्णिक् ।

यत् क्षत्तारं ह्वयत्या श्रावयत्येव तत् ॥ १ ॥ (४९)
यत् प्रतिशृणोति प्रत्याश्रावयत्येव तत् ॥ २ ॥ (५०)

यत् । क्षत्तारम् । ह्वयति । आ । श्रावयति । एव । तत् । यत् । प्रतिऽशृणोति । प्रतिऽआश्रावयति । एव । तत् ॥ १-२ ॥

यजमानः यत् यदा क्षत्तारं भोजनागारस्य अध्यक्षं ह्वयति आह्वयति, आकारयति तत् आश्रावयत्येव तदाह्वानम् आश्रावणं नाम अध्वर्युकर्म

एवेति मन्तव्यम्। **यत् स क्षत्ता** यजमानस्यादेशं **प्रति शृणोति** अङ्गीकरोति **तत् प्रत्याश्रवणं** नाम याज्ञिकं कर्मैव भवति ॥ १-२ ॥

**यत् परिवेष्टारः पात्रहस्ताः पूर्वे चापरे च**
**प्रपद्यन्ते चमसाध्वर्यव एव ते ॥ ३ ॥** (५१)

**यत् । परिऽवेष्टारः । पात्रऽहस्ताः । पूर्वे । च । अपरे । च ।**
**प्रऽपद्यन्ते । चमसऽअध्वर्यवः । एव । ते ॥ ३ ॥**

**यत् परिवेष्टारः** भोजनस्य परिवेषणकर्तारः **पात्रहस्ताः** हस्ते भोजनपात्राणि धृत्वा भोजनपात्रयुक्ता वा **पूर्वे च** अपरे **च प्रपद्यन्ते** पूर्वापरं यथा स्यात् तथा क्रमशः गच्छन्ति, आगच्छति च, ते **चमसाध्वर्यव** एव चमसधारिणः अध्वर्युविशेषा एव सन्ति ॥ ३ ॥

**तेषां न कश्चनाहोता ॥ ४ ॥** (५२)

**तेषाम् । न । कः । चन । अहोता ॥ ४ ॥**

**तेषां** यजमानानां गृहे **न कश्चन** कोऽपि **अहोता** होतृनामकर्त्विक्त्व-शून्यः कोऽपि न भवति। अतिथये आहुतिप्रदानेन सर्वे एव पारिवारिका यज्ञेऽस्मिन् होतारो भवन्तीति तात्पर्यम् ॥ ४ ॥

**यद् वा अतिथिपतिरतिथीन् परिविष्य गृहानुपो-**
**दैत्यवभृथमेव तदुपावैति ॥ ५ ॥** (५३)

**यत् । वै । अतिथिऽपतिः । अतिथीन् । परिऽविष्य । गृहान् ।**
**उपऽउदैति । अवऽभृथम् । एव । तत् । उपऽअवैति ॥ ५ ॥**

यदा **अतिथिपतिः** अतिथिसेवको गृहपतिः **अतिथीन्** अभ्यागतान् **परिविष्य** भोजनं परिवेश्य गृहान् **उपोदेति** परावृत्य गृहमागच्छति तस्य **तत्** कर्म मन्ये **अवभृथमेव** यज्ञान्ते क्रियमाणम् अवभृथस्नानमेव। अवभृथस्नानं कृत्वा स **उप अवैति** गृहं समायाति ॥ ५ ॥

**यत् संभागयति दक्षिणाः सभागयति यदनुतिष्ठत**
**उदवस्यत्येव तत् ॥ ६ ॥** (५४)

यत् । सभागयंति । दक्षिणाः । सभागयति । यत् । अनुऽतिष्ठंते । उत्ऽअवंस्यति । एव । तत् ॥ ६ ॥

**यत्** यदा गृहस्थो यजमानो विसर्जनकाले सौप्रास्थानिक्यां वेलायामतिथिं **सभागयति** भागशो दक्षिणां ददाति, मन्ये **दक्षिणाः सभागयति** यज्ञसमाप्तौ दक्षिणां ददातीति मन्तव्यम् । **यत्** यदा यजमानः अतिथिम् **अनुतिष्ठते** प्रत्यावर्तनकालेन सह किञ्चिदध्वानमनुगच्छति अस्य **तत्** तत्कर्म **उदवस्यति एव** यज्ञशालातः तस्य गृहे प्रतिगमनरूपम् उदवसानकर्मैव ज्ञेयम् ॥ ६ ॥

स उपंहूतः पृथिव्यां भंक्षयत्युपंहूतस्तस्मिन् यत् पृथिव्यां विश्वरूपम् ॥ ७ ॥ (५५)

सः । उपंऽहूतः । पृथिव्याम् । भक्षयति । उपंऽहूतः । तस्मिंन् । यत् । पृथिव्याम् । विश्वऽरूंपम् ॥ ७ ॥

**पृथिव्याम्** निमित्तसप्तमी, पृथिवीनिमित्तम् पार्थिववस्तूपयोग-निमित्तमिति यावत् । **उपहूतः** यजमानेन भोजनार्थम् आहूतः अतिथिः परार्थजातं **भक्षयति,** तत्फलरूपेण यजमानः **पृथिव्यां** भूमौ **यत् विश्वरूपम्** सर्वविधं भक्ष्यभोज्यद्रव्यम् । तस्मिन् तेषामुपभोगाय **उपहूतः** आमन्त्रितो भवति ॥ ७ ॥

स उपंहूतोऽन्तरिंक्षे भक्षयत्युपंहूतस्तस्मिन् यदन्तरिंक्षे विश्वरूंपम् ॥ ८ ॥ (५६)

सः । उपंऽहूतः । अन्तरिंक्षे । भक्षयति । उपऽहूतः । तस्मिन् । यत् । अन्तरिंक्षे । विश्वऽरूंपम् ॥ ८ ॥

**अन्तरिक्षे** निमित्तसप्तमी अन्तरिक्षनिमित्तम्, अन्तरिक्षस्थित-वस्तूपभोगनिमित्तमिति यावत् । **सः** अतिथिः **उपहूतः** यजमानेन निमन्त्रितः **भक्षयति,** तत्फलरूपेण यजमानोऽपि मृत्योरनन्तरम् **अन्तरिक्षे यद् विश्वरूपम्** सर्वविधं भक्ष्यभोज्योपभोग्यं वस्तु जातम् **तस्मिन्** तेषामुपभोगाय **उपहूतो** भवति ॥ ८ ॥

स उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन् यद् दिवि विश्वरूपम् ॥ ९ ॥ (५७)

सः । उपऽहूतः । दिवि । भक्षयति । उपऽहूतः । तस्मिन् । यत् । दिवि । विश्वऽरूपम् । ॥ ९ ॥

**दिवि** द्युलोकनिमित्तम्, द्युलोकस्थवस्तूपभोगनिमित्तं यजमानेन **उपहूतः** अतिथिः **भक्षयति,** मृत्योरनन्तरं स यजमानः पितृरूपेण द्युलोके स्थितः तत्रस्थभोगःजाताय **उपहूतः** भवतीति पूर्ववत् व्याख्येयम् ॥ ९ ॥

स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन् यद् देवेषु विश्वरूपम् ॥ १० ॥ (५८)

सः । उपऽहूतः । देवेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । देवेषु । विश्वऽरूपम् ॥ १० ॥

यदि **देवेषु** देवोद्देश्येन **उपहूतः** इत्यादि पूर्ववत् । दिवि देवा दिविश्रिताः—देवेषु तत्फलरूपेण यजमानः मध्ये देवलोके स्थितानां सर्वविधपदार्थानामुपभोगायेति ॥ १० ॥

स उपहूतो लोकेषु भक्षयत्युपहूतस्तस्मिन् यल्लोकेषु विश्वरूपम् ॥ ११ ॥ (५९)

सः । उपऽहूतः । लोकेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । लोकेषु । विश्वऽरूपम् ॥ ११ ॥

यदा **लोकेषु** लोकलोकान्तरीयपदार्थानां भोगेषु **सः** अतिथिः आतिथेयद्वारा **उपहूतः** आमन्त्रितो भवति तदा आतिथेयोऽपि **लोकेषु** लोकलोकान्तरेषु **यत्** विश्वरूपम् विविधरूपवद्भोग्यभोज्यपदार्थजातं भवति, तेषु **उपहूतः** आमन्त्रितो भवति, तत्र आतिथेयोऽपि अंशभाग् भवतीत्यर्थः ॥ ११ ॥

स उप॑हूत उप॒हूतः ॥ १२ ॥ (६०)

सः । उप॑ऽहूतः । उप॑ऽहूतः ॥ १२ ॥

सः अतिथिः यदि सर्वत्र **उपहूतः** यजमानेन भवति तदा यजमानोऽपि नूनं सर्वत्र **उपहूतो** भवतीति निश्चप्रचम् ॥ १२ ॥

आप्नोतीमं लोकमाप्नोत्यमुम् ॥ १३ ॥ (६१)

आप्नोति । इमम् । लोकम् । आप्नोति॑ । अमुम् ॥ १३ ॥

**एवम्** अतिथिसत्कर्ता यजमानः **इमम्** पृथिवीलोकम् **आप्नोति** प्राप्नोति । एवमेव **अमुम्** अन्तरिक्षं द्युलोकादिसर्वलोकम् **आप्नोति** प्राप्नोति । तत्रस्थान् सर्वान् भोगान् भुङ्क्ते इति तत्त्वम् ॥ १३ ॥

ज्योति॑ष्मतो लोकान् जय॑ति य एवं वेद॑ ॥ १४ ॥ (६२)

ज्योति॑ष्मतः । लोकान् । जयति । यः । एवम् । वेद॑ ॥ १४ ॥

**यः एवम्** अतिथिरहस्यं सम्यक्तया **वेद** विजानाति, तदनुसारमाचरति च, स **ज्योतिष्मतः** देदीप्यमानान् लोकान् **जयति** सर्वोत्कर्षेण प्राप्नोतीति भावः ॥ १४ ॥

## सप्तमं सूक्तम् : विश्वरूपा गौः

[१–२६] (एकः पर्यायः) ऋषिः–ब्रह्मा । देवता–गौः । छन्दः—१ आर्ची बृहती; २ आर्च्युष्णिक्; ३, ५ आर्च्यनुष्टुप्; ४, १४, १५-१६ साम्नी बृहती; ६, ८ आसुरी गायत्री; ७ त्रिपदा पिपीलिकमध्या निचृद्-गायत्री; ९,१३ साम्नी गायत्री; १० पुरोष्णिक् ११, १२,१७, २५ साम्न्युष्णिक्; १८, २२ एकपदासुरी जगती; १९ एकपदासुरी पङ्क्तिः; २० याजुषी जगती; २१ आसुर्यनुष्टुप्; २३ एकपदासुरी बृहती; २४ साम्नी भुरिग्बृहती; २६ साम्नी त्रिष्टुप्; ७, १८, १९, २२, २३ द्विपदा ।

'प्रजापतिश्च' इति सूक्तस्य गोष्ठकर्मणि विनियोगः । 'प्रजापतिः' इति गोष्ठकर्मणि' (कौ० सू० १९.१४) इत्यादिसूत्रात् । विस्तरस्तु 'एह यन्तु पशवः' (अर्थव० २.२६) इति सूक्ते द्रष्टव्यः । तथा अन-

डुत्सवे अनेन सूक्तेन निरुप्तहविरभिमर्शनं संपातं दातृवाचनं दानं च कुर्यात्, "प्रजापतिश्च इत्यनड्वाहम्' (कौ० सू० ६६.१९) इति सूत्रात् ।

**प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं यमः कृकाटम् ॥ १ ॥**

**सोमो राजा मस्तिष्को द्यौरुत्तरहनुः पृथिव्यधरहनुः ॥ २ ॥**

**प्रजाऽपतिः । च । परमेऽस्थी । च । शृङ्गे इति । इन्द्रः । शिरः । अग्निः । ललाटम् । यमः । कृकाटम् । सोमः । राजा । मस्तिष्कः । द्यौः । उत्तरऽहनुः । पृथिवी । अधरऽहनुः ॥ १-२ ॥**

अस्मिन् सूक्ते गोः कस्मिन्नङ्गे का देवता निहितेति रूपकशैल्या वर्ण्यते । तेन च गोः विराट्रूपता सिद्ध्यति । **प्रजापतिः च परमेष्ठीः** एते द्वे देवते **शृङ्गे** गोः शृङ्गद्वयरूपे स्तः । **इन्द्रः** देवाधिपतिः **शिरः** शिरोरूपः **अग्निः ललाटं** भालपट्टरूपः **यमः** मृत्युदेवता **कृकाटं** ग्रीवायाः पश्चाद् भागरूपः 'घाटा' इति । **राजा** देदीप्यमानः **सोमः मस्तिकः** मस्तिष्क-रूपः गोः **उत्तरः** हनुः ओष्ठमूलयोरुपरिभागः **द्यौः** द्युलोकरूपा, **अधरहनुः** ओष्ठमूलयोर्निम्नभागः पृथिवीरूप इति । अत्रायमभिसन्धिः—देहस्य नियन्त्रणं ग्रीवायाः पश्चात् भागस्थितेन सुषुम्णाशीर्षकेन जायते । अत एव 'कृकाटम्' ग्रीवायाः पश्चाद्भाग इति । किन्तु केचन विद्वांसः कण्ठमेव कृकाटं वदन्ति, यश्च भाषायां 'घेंटुआ' इति आख्यायते । किन्तु स्वामि-मुकुटौ ग्रीवायाः पश्चाद्भागमेव कृकाटं मन्वाते । 'वेदेऽत्र 'यमः कृकाटमिति' कथनादपि इदमेव सिद्ध्यति । यतो हि यमो यमयति, नियन्त्रणं कुरुते जीवनीयाङ्गेषु । जीवनीयाङ्गं (vital organs) इति । जीवनीयाङ्गस्यास्य नियन्त्रणस्थानं ग्रीवायाः पश्चाद् भाग एव । अतो मृत्युदेवतायाः यमस्यापि स्थानं तदेवेतिविवेकः ॥ १-२ ॥

**विद्युज्जिह्वा मरुतो दन्ता रेवतीर्ग्रीवाः कृत्तिका स्कन्धा घर्मो वहः ॥ ३ ॥**

**विश्वं वायुः स्वर्गो लोकः कृष्णद्रं विधरणी निवेष्यः ॥ ४ ॥**

विऽद्युत् । जिह्वा । मरुतः । दन्ताः । रेवतीः । ग्रीवाः । कृत्तिकाः । स्कन्धाः । घर्मः । वहः । विश्वम् । वायुः । स्वऽर्गः । लोकः । कृष्णऽद्रम् । विऽधरणी । निऽवेष्यः ॥ ३-४ ॥

विद्युत् तडित् विश्वरूपायाः गोः **जिह्वा** जिह्वारूपा, **मरुतः दन्ताः** रेवती नक्षत्रं **ग्रीवाः**, **कृत्तिका** कृत्तिकानक्षत्रसमूहः स्कन्धाः, **घर्मः** सूर्यतापः, **वहः** गोः स्कन्धप्रदेशरूपः भारवाहनस्थानमित्यर्थः । **विश्वं** जगत् एव गोः **वायुः** प्राणवायुः, **स्वर्गो लोकः कृष्णद्रम्** ग्रीवास्थान्नाकर्षिका नाडी, कण्ठो वा, **विधरणी** विविधपदार्थधारणकर्त्री शक्तिः **निवेष्यः** निवेशनस्थानम् गोःपृष्ठवंशस्य सीमास्थानम् ॥ ३-४ ॥

श्येनः क्रोडो३ऽन्तरिक्षं पाजस्यं१ बृहस्पतिः ककुद् बृहतीः कीकसाः ॥ ५ ॥

देवानां पत्नीः पृष्ठय उपसदः पर्शवः ॥ ६ ॥

श्येनः । क्रोडः । अन्तरिक्षम् । पाजस्यम् । बृहस्पतिः । ककुत् । बृहतीः । कीकसाः । देवानाम् । पत्नीः । पृष्ट्यः । उपऽसदः । पर्शवः ॥ ५-६ ॥

**श्येनः** श्येनचितिः यागो वा सर्वदेवमय्या गोः **क्रोडः** अङ्कः, **अन्तरिक्षं पाजस्यं** बलस्थानम्, ( हृदयम् ), 'पाजसे बलाय हितम्' इति व्युत्पत्तेः । **बृहस्पतिः ककुद्** स्कन्धोपरिस्थो मांसपिण्डः, **बृहतीः** विशाला दिशः **कीकसाः**, उरोऽस्थीनि तल्लग्नमांसञ्च । **देवानां पत्नीः पृष्टयः** पृष्ठास्थीनि **उपसदः** उपसदिष्टयः **पर्शवः** पार्श्वास्थीनि । स्पृशतेः संस्पृष्टा पृष्ठदेशम् (निरु० ४.३)। 'स्पृश संस्पर्शे' (१४२३ तुदा० पर०) 'स्पृशेः श्वण्शुनौ पृ च' (उणा० ५.२७) इति शुन् प्रत्ययः, स्पृश इत्यस्य पृ इत्यादेशः ॥ ५-६ ॥

मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू ॥ ७ ॥

इन्द्राणी भसद् वायुः पुच्छं पवमानो वालाः ॥ ८ ॥

मि॒त्रः । च॒ । वरु॑णः । च॒ । अंसौ॑ । त्वष्टा॑ । च॒ । अ॒र्य॒मा । च॒ । दो॒षणी॒ इति॑ । म॒हा॒ऽदे॒वः । बा॒हू इति॑ । इ॒न्द्रा॒णि । भ॒सत् । वा॒युः । पुच्छ॑म् । पव॑मानः । बाला॑ः ॥ ७-८ ॥

**मित्रः च वरुणः च** उभौ देवौ सर्वदेवमय्याः गोः **अंसौ** स्कन्धद्वयस्थानीयौ । **त्वष्टा च अर्यमा च** एतेऽपि द्वे देवते **दोषणी** भुजानामग्रभागौ, 'दशु उपक्षये' (१२१४ दिवा० पर०) 'डमेर्डोसिः' (उणा० २.६९) इत्यनेन डोसिः, 'पद्दन्नोमास्हृन्निश' (पा० ६.१.६३) इति दोषन् आदेशः, 'नपुंसकाच्च' (पा० ७.१.१९) इत्यनेन औङः शी। **महादेवः बाहू** भुजदण्डौ । **इन्द्राणी** इन्द्रपत्नी **भसद्** गुह्यस्थानम्, **वायुः** प्राणवायुः **पुच्छम्** पुच्छस्थानीयः, **पवमानः** प्रवहमानः संशोधकश्च वायुः **बालाः** पुच्छकेशाः । सप्तममन्त्रे प्रतीकसाम्यात् पुनरुक्तवदाभासः ( अथर्व० ३.२२.२ ) ॥ ७-८ ॥

ब्रह्म॑ च क्ष॒त्रं च॒ श्रोणी॒ बल॑मू॒रू ॥ ९ ॥

धा॒ता च॑ सवि॒ता चा॑ष्ठी॒वन्तौ॒ जङ्घा॑ गन्ध॒र्वा अ॒प्स॒रस॒ः

कुष्ठि॑का॒ अदि॑तिः श॒फाः ॥ १० ॥

चेतो॒ हृद॑यं॒ यकृ॑न्मे॒धा व्र॒तं पु॑री॒तत् ॥ ११ ॥

ब्रह्म॑ । च॒ । क्ष॒त्रम् । च॒ । श्रोणी॒ इति॑ । बल॑म् । ऊ॒रू इति॑ । धा॒ता । च॒ । स॒वि॒ता । च॒ । अ॒ष्ठी॒वन्तौ॑ । जङ्घा॑ः । ग॒न्ध॒र्वाः । अ॒प्स॒रस॑ः । कुष्ठि॑काः । अदि॑तिः । श॒फाः । चेत॑ः । हृद॑यम् । यकृ॑त् । मे॒धा । व्र॒तम् । पु॒रि॒ऽतत् ॥ ९-११ ॥

**ब्रह्म च क्षत्रं च** शक्तिद्वयमेतत् सर्वदेवमय्याः गोः **श्रोणी** कटिप्रदेशौ, **बलम्** सैन्यबलम् **ऊरू** जान्वोः उपरिभागौ । **धाता च सविता च** इति देवताद्वयं **अष्ठीवन्तौ** जानुनी, **गन्धर्वाः जङ्घाः** जङ्घास्थानीयाः, **अप्सरसः कुष्ठिकाः** शफयोः पश्चाद्भागाः, **अदितिः** देवमाता **शफाः** शफस्थानीयास्य । **चेतः** चित्तं **हृदयम्, यकृत् मेधा** रञ्जकपित्तश्मस्थानं मेधातुल्यम् **व्रतं पुरीतत्** आन्त्रस्थानीयमिति । पुरिं शरीरं तनोतीति

पुरीतत् सूक्ष्मान्त्रम् । 'पॄ पालनपूरणयोः (१०८६ जुहो० पर०) इत्यस्मात् इ, 'तनु विस्तारे' (१४६४ तना० पर०) इत्यस्माच्च 'कृगॄ शॄपॄकुटि०' (उणा० ४.१४३) इत्यनेन क्विप् ॥ ९-११ ॥

क्षुत् कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशयः ॥ १२ ॥

क्रोधो वृक्कौ मन्युराण्डौ प्रजा शेपः ॥ १३ ॥

नदी सूत्री वर्षस्य पतय स्तना स्तनयित्नुरूधः ॥ १४ ॥

क्षुत् । कुक्षिः । इरा । वनिष्ठुः । पर्वताः । प्लाशयः । क्रोधः । वृक्कौ । मन्युः । आण्डौ । प्रऽजा । शेपः । नदी । सूत्री । वर्षस्य । पतयः । स्तनाः । स्तनयित्नुः । ऊधः ॥ १२-१४ ॥

क्षुत् क्षुधा कुक्षिः सर्वदेवमय्याः गोः जठरपार्श्वः, इरा अन्नं वनिष्ठुः रसरक्तादिसम्मार्जकः आन्त्रविशेषः । पर्वताः प्लाशयः प्लीहा आन्त्र-विशेषो वा । क्रोधः कोपः वृक्कौ कुक्षिस्थाङ्गविशेषौ 'गुर्दे' इति भाषायाम् । मन्युः सात्त्विककोपः आण्डौ अण्डकोशौ । प्रजाः शेपः प्रजननाङ्गम् । नदी सरित् सूत्री नाड्यः । वर्षस्य पतयः वृष्टेः स्वामिनः मेघाः स्तनाः, स्तनयित्नुः गर्जनम् ऊधः दुग्धाधाराङ्गम्, आपीनमिति ॥ १२-१४ ॥

विश्वव्यचाश्चर्मौषधयो लोमानि नक्षत्राणि रूपम् ॥ १५ ॥

देवजना गुदा मनुष्या आन्त्राण्यत्रा उदरम् ॥ १६ ॥

रक्षांसि लोहितमितरजना ऊवध्यम् ॥ १७ ॥

अभ्रं पीवो मज्जा निधनम् ॥ १८ ॥

विश्वऽव्यचाः । चर्म । ओषधयः । लोमानि । नक्षत्राणि । रूपम् । देवऽजनाः । गुदाः । मनुष्याः । आन्त्राणि । अत्राः । उदरम् । रक्षांसि । लोहितम् । इतरऽजनाः । ऊवध्यम् । अभ्रम् । पीवः । मज्जा । निऽधनम् ॥ १५-१८ ॥

**विश्वव्यचाः** विश्वस्मिन् व्यचो व्याप्तिर्यस्य तत् अन्तरिक्षम्, आकाशो वा 'अन्तरिक्षं विश्वव्यचाः' (तै० ब्रा० ३.२.३.७) सर्वदेवमय्या गोः **चर्म** त्वक् । **ओषधयः लोमानि**, रोमाणि **नक्षत्राणि** ताराः **रूपम्** सौन्दर्यावृत्तिः । **देवजनाः गुदाः** गुदास्थानीयाः, **मनुष्याः आन्त्राणि** उदरनाड्यः, **अत्राः** अदनशीलाः **उदरं** जठरम् **रक्षांसि** राक्षसाः हिंसकाः **लोहितं** रक्त-विकारः, **इतरजनाः** नीचाः दुष्टाः, **ऊबध्यम्** अजीर्णमन्नम् गोमयं वा । **अभ्रं** मेघः **पीवः** स्थौल्यं 'ओप्यायी वृद्धौ (४८८ भ्वा० आत्म०) 'प्यायः पी' (पा० ६.१.२८), **मज्जा निधनम्** धनादीनां पराकाष्ठाः निधिर्वा ॥ १५–१८ ॥

**अग्निरासीन उत्थितोऽश्विना ॥ १९ ॥**

**इन्द्रः प्राङ् तिष्ठन् दक्षिणा तिष्ठन् यमः ॥ २० ॥**

**अग्निः । आसीनः । उत्थितः । अश्विना । इन्द्रः । प्राङ् । तिष्ठन् । दक्षिणा । तिष्ठन् । यमः ॥ १९-२० ॥**

**आसीनः** उपविष्टो भूमौ वृषभोऽयम् **अग्निः** अग्निरूपः **उत्थितः** च **अश्विनौ** । **प्राङ्** पूर्वाभिमुखी भूत्वा **तिष्ठन्** स वृषभः **इन्द्रः** इन्द्ररूपः, **दक्षिणा** दक्षिणस्यां दिशि **तिष्ठन् यमः** यमो भवति ॥ १९-२० ॥

**प्रत्यङ् तिष्ठन् धातोदङ् तिष्ठन्त्सविता ॥ २१ ॥**

**तृणानि प्राप्तः सोमो राजा ॥ २२ ॥**

**मित्र ईक्षमाण आवृत्त आनन्दः ॥ २३ ॥**

**प्रत्यङ् । तिष्ठन् । धाता । उदङ् । तिष्ठन् । सविता । तृणानि । प्रऽआप्तः । सोमः । राजा । मित्रः । ईक्षमाणः । आऽवृत्तः । आऽनन्दः ॥ २१–२३ ॥**

**प्रत्यङ् तिष्ठन्** पश्चिमस्यां दिशि **तिष्ठन्** तिष्ठन्नसौ वृषभः **धाता**, **उदङ्** च उत्तरस्यां दिशि **तिष्ठन् सविता** जायते । **तृणानि प्राप्तः** भक्षणाय घासादिकं सम्प्राप्तः अनड्वान् **सोमा राजा** भवति । **ईक्षमाणः**

प्रेम्णा लोकान् पश्यन् **मित्रः** मित्रनाम्ना उच्यते, च **आवृत्तः** इतस्ततः परिभ्रमन् **आनन्दः** आनन्दरूपो भवति ॥ २१-२३ ॥

**युज्यमा॑नो वैश्वदे॒वो यु॒क्तः प्र॒जाप॑तिर्वि॒मु॑क्तः सर्व॑म् ॥ २४ ॥**

**ए॒तद् वै वि॒श्वरू॑पं सर्व॑रूपं गोरू॒पम् ॥ २५ ॥**

युज्यमा॑नः । वै॒श्व॒ऽदे॒वः । यु॒क्तः । प्र॒जाऽप॑तिः । विऽमु॑क्तः । सर्व॑म् । ए॒तत् । वै । वि॒श्वऽरू॑पम् । सर्व॑ऽरूपम् । गोऽरू॒पम् ॥ २४-२५ ॥

**युज्यमानः** रथादिषु नियुज्यमानः सन्नसौ अनड्वान् **वैश्वदेवः** वैश्वदेवात्मको जायते । **युक्तः** नियुक्तः सन् **प्रजापतिः** प्रजापतिरूपः, **विमुक्तः** कार्यात् विमुक्तः सन् **सर्वम्** सर्वदेवात्मको भवति । **वै** नूनम् **एतत् गोरूपम् विश्वरूपम्**, जगदात्मकं, विराड्रूपं ज्ञेयम् ॥ २४-२५ ॥

**उपै॑नं वि॒श्वरू॑पाः सर्व॑रूपाः प॒शव॑स्तिष्ठन्ति॒ य ए॒वं वेद॑ ॥ २६ ॥**

उप॑ । ए॒न॒म् । वि॒श्वऽरू॑पाः । सर्व॑ऽरूपाः । प॒शव॑ः । ति॒ष्ठ॒न्ति॒ । यः । ए॒वम् । वेद॑ ॥ २६ ॥

**यः** जनः **एवं** गोरहस्यं **वेद** विजानाति **उप** तस्य समीपे **विश्वरूपाः** विविधरूपाः **सर्वरूपाः** **पशवः** गवादयः **तिष्ठन्ति** । तस्य पशुशक्तिरक्षीणा समजायते इति भावः ॥ २६ ॥

## अष्टमं सूक्तम् : यक्ष्म-निवारणम्

[१-२२] ऋषिः—भृग्वङ्गिराः । देवता—**सर्वशीर्षामयाद्यपाकरणम्** । छन्दः—**१-११, १३, १४, १६-२० अनुष्टुप्; १२ अनुष्टुब्गर्भा ककुम्मती चतुष्पदोष्णिक्; १५ विराडनुष्टुप्; २१ विराट् पथ्याबृहती; २२ पथ्यापङ्क्तिः** ।

**विनियोगः**—शिरोरोगादि सर्वभैषज्ये कर्मणि 'शीर्षक्तिम्' इत्यर्थसूक्तेन व्याधितशरीरम् अभिमशति । ततः 'पादाभ्यां ते' (अथर्व० २१.

२२) इति द्वाभ्याम् ऋग्भ्याम् आदित्यम् उपतिष्ठते। तथा च सूत्रम्—"शीर्षक्तिम्' इत्यभिमृशति। उत्तमाभ्याम् आदित्यमुपतिष्ठते" (कौ० सू० ३२. १८. १९) इति। तथा अस्य सूत्रस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य यत्र यत्र सर्वव्याधिभैषज्यादिषु विनियोग उक्त-स्तत्र सर्वत्रास्य विनियोगोऽनुसन्धेयः। विस्तरस्तु 'अक्षीभ्याम्' इति सूक्ते (अथर्व० २.३३) द्रष्टव्यः।

शीर्षक्तिं शीर्षामयं कर्णशूलं विलोहितम्।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ॥ १ ॥

शीर्षक्तिम्। शीर्षऽआमयम्। कर्णऽशूलम्। विऽलोहितम्।
सर्वम्। शीर्षण्यम्। ते। रोगम्। बहिः। निः। मन्त्रयामहे ॥ १ ॥

हे व्याधित! **शीर्षक्तिं** शिरसः पीडाम्, शीर्षक्ति—शिरसि अकतिताम्, 'अक कुटिलायां गतौ' (७९२ भ्वा० पर०) क्तिन् प्रत्ययः। यद्वा—शिरसि अञ्चति व्याप्नोतीति, क्तिन् प्रत्ययः। **शीर्षामयं** शीर्षणसम्बद्धान् इतरान् रोगान् **कर्णशूलं** कर्णपीडाकरं रोगं **विलोहितं** रक्तविकारप्रभवं रोगजातम् एवं **ते** तव **सर्वम्** अखिलं **शीर्षण्यम्** शिरसि भवम्, **रोगं** शिरःसम्बद्धं रोगजातं **बहिः निर्मन्त्रयामहे** मन्त्रबलेन बहिर्निष्कासयाम इति ॥ १ ॥

कर्णाभ्यां ते कङ्कूषेभ्यः कर्णशूलं विसल्पकम्। सर्वं० ॥ २ ॥

कर्णाभ्याम्। ते। कङ्कूषेभ्यः। कर्णऽशूलम्। विऽसल्पकम् ॥ सर्वं० ॥ २ ॥

**ते** तव **कर्णाभ्यां** श्रोत्राभ्यां, **कङ्कूषेभ्यः** कर्णान्तर्गतनाडीभ्यः, **कर्णशूलम्** कर्णपीडाम् एवं **विसल्पकम्** विसर्परोगं तथा **सर्वं शीर्षण्यम्** इत्यादि पूर्ववत् ॥ २ ॥

यस्य हेतोः प्रच्यवते यक्ष्मः कर्णत आस्यतः। सर्वं० ॥ ३ ॥
यस्य। हेतोः। प्रऽच्यवते। यक्ष्मः। कर्णतः। आस्यतः। ० ॥ ३ ॥

**यस्य** रोगस्य **हेतोः** कारणात् **कर्णतः** श्रोत्रात् **आस्यतः** मुखात् च **यक्ष्मः** रोगजनितदोषः, यक्षयते यक्ष्यते वा 'यक्ष पूजायाम्' (१६९३ चुरा० आ०) इत्यस्मात् 'अर्तिस्तुसुहुसृधृ' (उणा० ४.१४५) इत्यनेन मनिन्, रोगेषु पूज्यो श्रेष्ठो राजरोगो रोगराजो वेति यावत्, **प्रच्यवते** प्रवहति, शेषं पूर्ववत् ॥ ३ ॥

यः कृणोति प्रमोतमन्धं कृणोति पूरुषम् । सर्वं० ॥ ४ ॥

यः । कृणोति । प्रऽमोतम् । अन्धम् । कृणोति । पुरुषम् । ० ॥ ४ ॥

**यः** रोगः **पूरुषं** मनुष्यं **प्रमोतं** प्र+'मूङ् बन्धने', मूयते बध्यते वाक् कर्णौ वा येन । 'मुट् आक्षेपमर्दनयोः', घञ्, टस्य तः । प्रकृष्टतया मूकं बधिरं वा **कृणोति** करोति, तथा **अन्धं** दृष्टिहीनं **कृणोति**, शेषं पूर्ववत् ॥ ४ ॥

अङ्गभेदमङ्गज्वरं विश्वाङ्ग्यं विसल्पकम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ॥ ५ ॥

अङ्गऽभेदम् । अङ्गऽज्वरम् । विश्वऽअङ्ग्यम् । विऽसल्पकम् । सर्वम् । शीर्षण्यम् । ते । रोगम् । बहिः । निः । मन्त्रयामहे ॥ ५ ॥

**अङ्गभेदं** गात्राणां त्रुटनं गात्रपीडाम् **अङ्गज्वरं** प्रत्यङ्गोपतापं **विश्वाङ्ग्यं** सर्वाङ्गपीडाकरं **विसल्पकं** विसर्परोगम् । शेषं पूर्ववत् ॥ ५ ॥

यस्य भीमः प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं विश्वशारदं बहिर्निर्मन्त्रयामहे ॥ ६ ॥

यस्य । भीमः । प्रतिऽकाशः । उत्ऽवेपयति । पुरुषम् ।
तक्मानम् । विश्वऽशारदम् । बहिः । निः । मन्त्रयामहे ॥ ६ ॥

**यस्य** रोगस्य **भीमः** भयङ्करः **प्रतीकाशः** स्वरूपोद्गमः, दर्शनं वा **पूरुषम् उद्वेपयति** कम्पयति, एतादृशं **विश्वशारदं** प्रतिशरदृतौ समुत्पन्नं सर्वशरीरे कर्बुरवर्णकचिह्नकरं वा तादृशं **तक्मानं** ज्वरादिरोगम्

'तक्मेत्युष्ण नाम' 'तकत' इति सतः' (निरु० ११.२५)। शेषं पूर्ववत् ॥ ६ ॥

य ऊरू अनुसर्पत्यथो एति गवीनिके ।
यक्ष्मं ते अन्तरङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ७ ॥

यः । ऊरू इति । अनुऽसर्पति । अथो इति । एति । गवीनिके इति ।
यक्ष्मम् । ते । अन्तः । अङ्गेभ्यः । बहिः । निः । मन्त्रयामहे ॥ ७ ॥

**यः** रोगः **ऊरू** जान्वोः **अनुसर्पति** अनुक्रमशः प्रसरति **अथो** ततश्च प्रसर्पणात् **गवीनिके** मूत्राशयस्थनाड्यौ स रोगः **एति** प्राप्नोति तं रोगं **ते** तव **अङ्गेभ्यः**, अन्तः अङ्गानां मध्यात् च, शेषं पूर्ववत् ॥ ७ ॥

यदि कामादपकामाद्धृदयाज्जायते परि ।
हृदो बलासमङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ८ ॥

यदि । कामात् । अपऽकामात् । हृदयात् । जायते । परि ।
हृदः । बलासम् । अङ्गेभ्यः । बहिः । निः । मन्त्रयामहे ॥ ८ ॥

**यदि** चेत् **कामात्** ऐच्छिकोपभोगवशात् **अपकामात्** वायुप्रदूषणादि-प्रकृतिजन्यदोषात् वा **बलासः** बलम् = शरीरबलम् अस्यति = प्रक्षिपति प्रदूष्य बहिर्निस्सारयति यस्तम्, शरीरबलविनाशकः श्लेष्म-विकारः कफरोगः **हृदयात् परिजायते** हृदयस्य परितः प्रादुर्भवति, तदा **हृदः** हृदयात् **अङ्गेभ्यः** गात्रेभ्यश्च तं—**बलासं** कफादिरोगम्। शेषं पूर्ववत् ॥ ८ ॥

हरिमाणं ते अङ्गेभ्योऽप्वामन्तरोदरात् ।
यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे ॥ ९ ॥

हरिमाणम् । ते । अङ्गेभ्यः । अप्वाम् । अन्तरा । उदरात् ।
यक्ष्मःऽधाम् । अन्तः । आत्मनः । बहिः । निः । मन्त्रयामहे ॥ ९ ॥

**ते** तव **अङ्गेभ्यः** शरीरावयवेभ्यः **हरिमाणम्** हरिद्वर्ण कामला-रोगम्, **उदरात्** जठरात् **अन्तरा** मध्यात् **अप्वां** वायुशूलम् 'अप्वा

यदेनया विद्धोऽपवीयते, व्याधिर्वा भयं वा' (निरु० ६.१२)। अप-पूर्वात् 'वी गतिः व्याप्तिः' इत्यतः असनार्थो गृह्यते, 'शेवायह्व' (उणा० १.१५४) इत्यनेन वन् प्रत्ययो निपात्यते। यतो हि व्याधिना भयेन वा मनुष्योऽपवीयते, अपास्यते स्वास्थात् शान्तितो वा। तथा **आत्मनः अन्तः** शरीराभ्यन्तरतः **यक्ष्मोधाम्** यक्ष्मादिधारकं क्षयादि-व्याधिहेतुम् यक्ष्मं दधाति, कः, सकारोपसर्जनं क्षयधारकमित्यर्थः। शेषं पूर्ववत् ॥ ९ ॥

**आसो बलासो भवतु मूत्रं भवत्वामयत्।**
**यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १० ॥**

**आसः। बलासः। भवतु। मूत्रम्। भवतु। आमयत्। यक्ष्माणाम्। सर्वेषाम्। विषम्। निः। अवोचम्। अहम्। त्वत् ॥ १० ॥**

**बलासः** बलविनाशको कफरोगः **आसः** शरीराद् बहिः प्रक्षिप्तो भवतु। 'असु क्षेपणे' (१२१० दिवा० पर०) घञ्। **आमयत्** 'अम रोगे' (१७२१ चुरा० पर०) शतृप्रत्ययः। पुरुषं रुग्णं कुर्वन् आमरोगः **मूत्रं भवतु** मूत्रं भूत्वा बहिर्निर्गच्छतु। यद्वा—बलासः बलनाशकः सन्निपातः कफादिरोगो यदि आसः धनुर्दिर्भङ्गरोगतां परिणमेत्, तेन च मूत्रम् **आमयत्** पीडाकारं भवेत्तर्हि इत्यपि केचन आहुः। एवं सति अहं वैद्यः **सर्वेषां यक्ष्माणां** सर्वेषां व्याधीनां **विषम् त्वत्** त्वत्तः **निरवोचम्** निर्गन्तुं निस्सारयितुं कथितवानस्मि ॥ १० ॥

**बहिर्बिलं निर्द्रवतु काहाबाहं तवोदरात्। यक्ष्माणां० ॥ ११ ॥**

**बहिः। बिलम्। निः। द्रवतु। काहाबाहम्। तव। उदरात्। ०॥११॥**

**काहाबाहम्** 'काहा' इति पीडाधिक्यात् उच्चार्यमाणं शब्दं वहति-वहतीति तम्, तादृशनामधेयम् **बिलम्** बिलवत् अतितराम् अनर्थाधायकं रोगविशेषं गुल्मादिकं वा **उदरात् बहिः** मलमूत्रद्वाराभ्यां **निर्द्रवतु** द्रवीभूय निर्गच्छतु। केचित्तु—**बिलम्** भेदनरोगः, 'बिल भेदने' **निर्द्रवतु**। तथा **काहाबाहम्** कासावाहम्, कासरोगोत्पादकं विकृति-

जातम्, कास + आङ्पूर्वात् 'वह प्रापणे' (१००४ भ्वा०) इत्यस्मात् अण्, सस्य हः, वस्य च बः। उदरात् उदरप्रदेशात् निर्द्रवतु द्रवीभूय निर्गच्छत्विति व्याचिख्यासुः ॥ ११ ॥

उदरा॑त् ते क्लो॒म्नो नाभ्या॒ हृद॑या॒दधि॑ ।
यक्ष्मा॑णां॒ सर्वे॑षां वि॒षं निर॑वोच॒मह॒ं त्वत् ॥ १२ ॥

उ॒दरा॑त् । ते॒ । क्लो॒म्नः । नाभ्याः॑ । हृद॑यात् । अधि॑ । यक्ष्मा॑णाम् । सर्वे॑षाम् । वि॒षम् । निः । अ॒वो॒च॒म् । अ॒हम् । त्वत् ॥ १२ ॥

ते उदरात् तथा क्लोम्नः फुफ्फुसात्, क्लोमनलिकातः नाभ्याः, हृदयात् अधि नाभितः हृदयाच्च, सर्वेषां यक्ष्माणाम् इत्यादि पूर्ववत् ॥ १२ ॥

याः सी॒मान॑ं वि॒रु॒जन्ति॑ मू॒र्धान॒ं प्रत्य॑र्ष॒णीः ।
अहि॑ंसन्तीरनाम॒या निर्द्र॑वन्तु व॒हिर्बिल॑म् ॥ १३ ॥

याः । सी॒मान॑म् । वि॒ऽरु॒जन्ति॑ । मू॒र्धान॑म् । प्रति॑ । अ॒र्ष॒णीः । अहि॑ंसन्तीः । अ॒ना॒म॒याः । निः । द्र॒व॒न्तु॒ । व॒हिः॒ बिल॑म् ॥ १३ ॥

याः पीडाः मूर्धानं प्रति शिरःकपालं प्रति अर्षणीः गन्त्र्यः सीमानं कपालयोः सन्धिभागं 'जोड' इति भाषाभाषितम्, विरुजन्ति विदारयन्ति, ताः अहिंसन्तीः हिंसां त्यजन्त्यः अनामयाः व्याधिरहिताः भूत्वा वहिर्बिलं निर्द्रवन्तु शरीरबिलात् बहिर्निगच्छन्तु ॥ १३ ॥

या हृद॑यमु॒प॒र्षन्त्य॑नु॒त॒न्वन्ति॒ कीक॑साः । अहिं० ॥ १४ ॥

याः । हृद॑यम् । उ॒प॒ऽऋ॒षन्ति॑ । अ॒नु॒ऽत॒न्वन्ति॑ । कीक॑साः ।०॥१४॥

याः रोगवेदनाः हृदयम् उपऋषन्ति हृदयाभिमुखं गच्छन्ति, कीकसाः जत्रुवक्षोगतास्थीनि अनुतन्वन्ति विस्तारयन्ति, कासादिरोगजनिताः । शेषं पर्ववत् ॥ १४ ॥

या: पार्श्वे उपर्षन्त्यनुनिक्षन्ति पृष्टीः । अहिं० ॥ १५ ॥

याः । पार्श्वे इति । उपऽऋषन्ति । अनुऽनिक्षन्ति । पृष्टीः । ० ॥१५॥

याः पीडाः पार्श्वे शरीरस्य पार्श्वद्वयम् उपर्षन्ति उपगच्छन्ति, पृष्टीः पार्श्वास्थीनि अनुनिक्षन्ति अनुचुम्बन्ति, 'णिक्ष चुम्बने' (६५९ भ्वा० पर०) । शेषं पूर्ववत् ॥ १५ ॥

यास्तिरश्चीरुपर्षन्त्यर्षणीर्वक्षणासु ते । अहिं० ॥ १६ ॥

याः । तिरश्चीः । उपऽऋषन्ति । अर्षणीः । वक्षणासु । ते । ० ॥१६॥

याः पीडाः ते तव वक्षणासु वक्षःस्थलेषु अर्षणीः प्रसर्पिण्यः सत्यः तिरश्चीः तिर्यग्गामिन्यो भूत्वा उपर्षन्ति उपधावन्ति, शेषं पूर्ववत् ॥ १६ ॥

या गुदा अनुसर्पन्त्यान्त्राणि मोहयन्ति च । अहिं० ॥ १७ ॥

याः । गुदाः । अनुऽसर्पन्ति । आन्त्राणि । मोहयन्ति । च । ० ॥१७॥

याः पीडाः गुदाः गुदनाडीः अनुसर्पन्ति अनुलक्ष्य सर्पन्ति, प्रसरन्ति आन्त्राणि पाचनसूत्राणि च मोहयन्ति मूर्च्छितानि कुर्वन्ति, निष्क्रियतां प्रापयन्ति । शेषं पूर्ववत् ॥ १७ ॥

या मज्ज्ञो निर्धयन्ति परूंषि विरुजन्ति च ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥ १८ ॥

याः । मज्ज्ञः । निःऽधयन्ति । परूंषि । विऽरुजन्ति । च ।
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम् ॥१८॥

याः पीडाः मज्ज्ञः अस्थिगतस्निग्धधातुविशेषान् निर्धयन्ति नितरां पिबन्ति, विनाशयन्तीत्यर्थः । निः + 'धेट् पाने' (९०२ भ्वा०) परूंषि पर्वभागान् विरुजन्ति भञ्जन्ति च । शेष पूववत् ॥ १८ ॥

ये अङ्गानि मदयन्ति यक्ष्मासो रोपणास्तव ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १९ ॥

ये । अङ्गानि । मदयन्ति । यक्ष्मासः । रोपणाः । तव । यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १९ ॥

ये रोपणाः विमोहकाः 'रुप लुप विमोहने' 'सुयुरु वृञो युच्' इति युच्, यक्ष्मासः शरीरक्षयकारिणो राजरोगादयः तव अङ्गानि शरीरावयवान् मदयन्ति उन्माद-विक्षेपादियुक्तान् कुर्वन्ति, तेषां सर्वेषां यक्ष्माणाम् रोगाणां विषम् त्वत् त्वत्तः अहम् वैद्यः निरवोचम् बहिर्निगन्तुं कथितवानस्मि ॥ १९ ॥

विसल्पस्य विद्रधस्य वातीकारस्य वालजेः ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ २० ॥

विऽसल्पस्य । विऽद्रधस्य । वातीऽकारस्य । वा । अलजेः । यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ २० ॥

विसल्पस्य विसर्पणशीलस्य विसर्परोगस्य विद्रधस्य भगन्दरादि-प्रस्फोटस्य वातीकारस्य वातरोगस्य, सन्धिपीडादेः वा अलजेः चक्षुरोगविशेषस्य, 'रोहे' इति भाषाख्यातस्य । तेषां सर्वेषाम् इत्यादि पूर्ववत् ॥ २० ॥

पादाभ्यां ते जानुभ्यां श्रोणिभ्यां परि भंससः ।
अनूकादर्षणीरुष्णिहाभ्यः शीर्ष्णो रोगमनीनशम् ॥ २१ ॥

पादाभ्याम् । ते । जानुऽभ्याम् । श्रोणिऽभ्याम् । परि । भंससः । अनूकात् । अर्षणीः । उष्णिहाभ्यः । शीर्ष्णः । रोगम् । अनीनशम् ॥ २१ ॥

ते पादाभ्यां पद्भ्यां जानुभ्यां ऊर्वोः पर्वभ्यां श्रोणीभ्यां कटि-प्रदेशाभ्याम्, नितम्बाभ्यां वा परि सर्वतः भंससः गुह्यस्थानात् अनूकात् मेरुदण्डात् उष्णिहाभ्यः ग्रीवानाडीभ्यः शीर्ष्णः मूर्धातः अर्षणीः जायमानाः, प्रसरन्त्यो वा महतीः पीडाः रोगं च अनीनशम् व्यनाशयम् ॥ २१ ॥

सं ते॑ शी॒र्ष्णः क॒पाला॑नि हृद॑यस्य च॒ यो वि॒धुः ।
उ॒द्यन्ना॑दित्य र॒श्मिभिः॑ शी॒र्ष्णो रोग॑मनीनशो॒ऽङ्ग॒भे॒द॑-
मशीशमः ॥ २२ ॥

सम् । ते॒ । शी॒र्ष्णः । क॒पाला॑नि । हृद॑यस्य । च॒ । यः ।
वि॒धुः । उ॒त्ऽयन् । आ॒दि॒त्य॒ । र॒श्मिऽभिः॑ । शी॒र्ष्णः ।
रोग॑म् । अ॒नी॒न॒शः॒ । अ॒ङ्ग॒ऽभे॒दम् । अ॒शी॒श॒मः॒ ॥ २२ ॥

ते तव **शीर्ष्णः** शिरसः **कपालानि** अस्थीनि तेषाम्, **हृदयस्य च यः** विधुः पीडा वर्तते ताम्, हे **उद्यन् आदित्य** ! उद्गच्छन् सूर्यदेव ! त्वं रश्मिभिः स्वकिरणैः **शीर्ष्णोः रोगम्** शिरोरोगजातम् **अनीनशः** व्यनाशयः नाशितवानसि । तथा **अङ्गभेदं** गात्रपीडां वा अन्यांश्च सर्वान् रोगान् **अशीशमः** अशमयः शमितवानसि ॥ २२ ॥

## नवमं सूक्तम् : आत्मा

[१–२२] ऋषिः—ब्रह्मा । देवता—वामः, अध्यात्मम्, आदित्यः । छन्दः—(अनुल्लिखित संख्याः मन्त्राः) त्रिष्टुप्; १२, १४, १६, १८ जगती ।

अ॒स्य वा॒मस्य॑ पलि॒तस्य॒ होतु॒स्तस्य॒ भ्राता॑ मध्य॒मो अ॒स्त्यश्नः॑ ।
तृ॒तीयो॒ भ्राता॑ घृ॒तपृ॑ष्ठो अ॒स्यात्रा॑पश्यं वि॒श्पतिं॑ स॒प्तपु॑त्रम् ॥ १ ॥
( ऋ० १.१६४.१ )

अ॒स्य । वा॒मस्य॑ । प॒लि॒तस्य॑ । होतुः॑ । तस्य॑ । भ्राता॑ । म॒ध्य॒मः ।
अस्ति॑ । अश्नः॑ । तृ॒तीयः॑ । भ्राता॑ । घृ॒तऽपृ॑ष्ठः । अ॒स्य॒ । अत्र॑ ।
अ॒प॒श्य॒म् । वि॒श्पति॑म् । स॒प्तऽपु॑त्रम् ॥ १ ॥

अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्य-क्रियार्थसम्बद्धो यच्छब्दोऽध्याहार्यः । योऽयं दिवि द्योतते तस्य **अस्य वामस्य** वननीयस्य संभजनीयस्य आरोग्यार्थिभिः सर्वैः सेवनीयस्य **पलितस्य** पालयितुः प्रकाश-वृष्ट्यादिप्रदानेन पालकस्य तथा योऽयं दिवि द्योतते **तस्य** अस्य **होतुः** ह्वातव्यस्य आह्वानार्हस्य आदित्यस्य

**मध्यमः** मध्यमस्थानः। मध्ये भवो वायुरुच्यते। आदित्याग्नी अपेक्ष्य अस्य मध्यमत्वम्। स च **अश्नः** सर्वत्र व्याप्तः। नहि वायुरहितः कश्चित्प्रदेशोऽस्ति। तादृशः **भ्राता** अस्ति भ्रातृस्थानीयो भवति। यथा लोके भ्राता पितृधनस्य भागं हरति, तद्वत्। मध्यस्थानम् अन्तरिक्ष-लोकं हरतीति वा। वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्यच्यते। पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता। मध्यमो वायुरपि वृष्टचर्थं रसैः भर्तव्यो भवति। किञ्च, **घृतपृष्ठः** घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशः **भ्राता** तस्य **तृतीयः** अस्ति भवति। त्रयाणां पूरणस्तृतीयः। उक्तोभयापेक्षया तृतीयत्वम्। भ्रातृत्वं प्रतिपादितप्रकारेण अत्रापि द्रष्टव्यम्। रात्रौ सवितुस्तेजो-भागस्य हरणात् दिवा स्वकीयतेजसो भागस्य तदर्थमेव भर्तव्यत्वात् वा भ्रातृत्वम्। अत्र एषु भ्रातृषु मध्ये पुरोदेशे वा **विश्पतिं** विशां प्रजानां पालयितारं **सप्तपुत्रम्** सर्पणरश्मिपुत्रोपेतम्।

ऐतिहासिकपक्षे—'अदितिः पुत्रकामा' इति प्रस्तुते मित्रावरुणादिषु अदितिपुत्रेषु अस्य आदित्यस्य सप्तमपुत्रत्वम्। ईदृशं महानुभाव-मादित्यम् अपश्यम् अद्राक्षम्, भावनया आत्मत्वेन साक्षात्करोमीत्यर्थः। 'तद् योऽहं सोऽसौ, योऽसौ सोऽहम्' इति श्रुतिः।

एवं वा—अस्य वामस्य विश्वस्योद्गरितुः स्रष्टुरित्यर्थः। पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः स्वस्मिन् संहर्तु-रित्यर्थः। परमेश्वरस्य सृष्ट्यादिकर्तृत्वं श्रुति-स्मृति-पुराणादिषु प्रसिद्धम्। तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति, जगद्धारकत्वेन वर्तते। स च अश्नः व्यापनशीलः, 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संरब्धानि' (बृ० उ० ३.७.२) इति श्रुतेः। वक्ष्यमाण-विराडपेक्षया वा मध्यमत्वम्। किञ्च, अस्य परमेश्वरस्य तृतीयो घृतपृष्ठः। घृतमित्युदकनाम। तेन तत्कार्यं शरीरमुच्यते। तदेव पृष्ठं स्पर्शकं वा यस्य स तादृशः। 'पृष्ठं स्पृशतेः' (निरु० ४.३) इति निरुक्तम्। यद्वा—प्रदीप्तपृष्ठः। पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः। प्रकाशितशरीराभिमानीत्यर्थः। न त्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत् स्पर्शनाविषयो भवति। अत्र एषु मध्ये विश्पतिं विशां प्रजानां पतिम्। उपलक्षणमेतत्। सर्वस्य पतिमित्यर्थः, 'सर्वस्य पतिः

सर्वस्येशानः' इति श्रुतेः। सप्तपुत्रम् सप्त लोकाः पुत्रा यस्य तादृशम्। स्वमायया सृष्टसर्वलोकमित्यर्थः। अपश्यं पश्येयम्, साक्षात्करोमीत्यर्थः। अयमर्थः—स्वाधीनमायो जगत्कारणभूतः परमेश्वर एकः। तत उत्पन्नौ स्थूल-सूक्ष्मशरीराभिमानिनौ द्वौ विराट्-सूत्रात्मानौ। तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्टयादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवण-मननादिसाधनेन साक्षात्करोमीत्यर्थः। एवमुत्तरत्रापि अध्यात्म-परतया योजयितुं शक्यम्। तथापि स्वरसत्वाभावात् ग्रन्थविस्तरभयाच्च न लिख्यते। यत्र 'द्वा सुपर्णा' इत्यादौ स्फुटमाध्यात्मिकोऽर्थः प्रतीयते, स तत्र तत्र प्रतिपादयामः। अयं मन्त्रो यास्केन व्याख्यातः–'अस्य वामस्य वननीयस्य पलितस्य पालयितुः' (निरु० ४.२६) इत्यादिना॥ १॥

**स॒प्त यु॑ञ्जन्ति॒ रथ॒मेक॑चक्र॒मेको॒ अश्वो॑ वहति स॒प्तना॑मा।**
**त्रि॒नाभि च॒क्रम॒जर॑मन॒र्वं यत्रे॒मा विश्वा॒ भुव॒नाधि॑ त॒स्थुः॥ २॥**

**स॒प्त। यु॒ञ्ज॒न्ति॒। रथ॑म्। एक॑ऽचक्रम्। एकः॑। अश्वः॑।**
**व॒ह॒ति॒। स॒प्तऽना॑मा। त्रि॒ऽना॒भि॑। च॒क्रम्। अ॒जर॑म्।**
**अ॒न॒र्वम्। यत्र॑। इ॒मा। विश्वा॑। भुव॑ना। अधि॑। त॒स्थुः॥ २॥**

**एकचक्रम्** एकरथाङ्गोपेतम्। यद्यपि त्रीणि चक्राणि; तथापि तेषामेकरूपत्वात् एकचक्रमित्युच्यते। **रथम्** रंहणस्वभावं सूर्यस्य सम्बन्धिनम् **सप्त** एतत्संख्याका अश्वाः युञ्जन्ति अनुबध्नन्ति वहन्ति अहोरात्रनिर्वाहाय। किं वस्तुतः सप्त ? नेत्याह—**एकः अश्वः सप्तनामा** एक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा। एक एव वायुः सप्तरूपं धृत्वा वहतीत्यर्थः, वाय्वधीनत्वात् अन्तरिक्षसञ्चारस्य। एकचक्रमित्युक्तम्, कीदृशं तदित्यत आह—**त्रिनाभि** वलयत्रयमध्य-स्थितनाभिस्थानीयच्छिद्रत्रयोपेतम्। **अजरम्** अमरणधर्मकम् **अनर्वम्** अशिथिलम्। पुनस्तदेव विशेष्यते—**यत्र** यस्मिन् चक्रे **इमा विश्वा भुवना** इमानि प्रसिद्धानि सर्वाणि भूतजातानि **अधि** आश्रित्य **तस्थुः** तिष्ठन्ति। यद्वा—एकचक्रम् एकचारिणम्, असाहाय्येन सञ्चरन्तं रथम् आदित्य-मण्डलं सप्त युञ्जन्ति। सर्पणस्वभावाः सप्तसंख्या वा रश्मयः सप्तप्रकारकार्याः असाधारणाः परस्परविलक्षणाः षड् ऋतवः। एकः साधारण इत्येवम्। अथवा—मासद्वयात्मकाः षट्, अपरः अधिक-

मासात्मक इत्येवं सप्तर्तवो युञ्जन्ति, एतस्य कार्यं निर्वहन्तीत्यर्थः। स चैकः असहायः अश्वो व्यापनशीलः आदित्यः सप्तनामा सप्तरसानां सनमयितारो रश्मयो यस्य तादृशः, सप्तर्षिभिः स्तूयमानो वा आदित्यो वहति धारयति भ्रमयतीत्यर्थः। किम्? त्रिनाभि चक्रम्। तिस्रो नाभिस्थानीयाः सन्ध्याः सम्बद्धा वा त्रय ऋतवो यस्य तत्तादृशम्। के ते? ग्रीष्म-वर्षा-हेमन्ताख्याः। यद्वा—भूत-भविष्यद्-वर्तमानाख्यास्त्रयः कालाः त्रिनाभयः। तद्विशिष्टं चक्रं चक्रवत् पुनः पुनः परिभ्रममाणं संवत्सराख्यं चक्रम्। अजरं मरणरहितम्। नहि कदाचिदपि कालो म्रियते, 'अनादिनिधनः कालः' इति स्मृतेः। अनर्वम् अप्रतिहतम्। ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतम् अयमादित्यः पुनरावर्तयति। संवत्सरादर्वाचीनानां तत्रैव अन्तर्भावात्, ततो युगादीनां तदावृत्तिसाध्यत्वात् संवत्सरस्य चक्रत्वेन निरूपणम्। पुनः कीदृशं तत्? यत्र यस्मिन् चक्रे इमा विश्वा भुवना इमानि सर्वाणि भूतानि अधितस्थुः आश्रित्य तिष्ठन्ति, कालाधीनत्वात् सर्वस्य स्थितेः। ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् 'ज्ञानमोक्षाक्षरप्रशंसा च' इत्यनुक्रमण्यामुक्तम्। अयमपि मन्त्रो यास्केन 'सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम्' (निरु० ४.२७) इत्यादिना व्याख्यातः। तदत्रापि अनुसन्धेयम् ॥ २ ॥

**इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः।**
**सप्त स्वसारो अभि सं नवन्ते[1] यत्र गवां निहिता सप्त नाम[2] ॥ ३ ॥**

( ऋ० १.१६४.३ )

**इमम्। रथम्। अधि। ये। सप्त। तस्थुः। सप्तऽचक्रम्। सप्त। वहन्ति। अश्वाः। सप्त। स्वसारः। अभि। सम्। नवन्त। यत्र। गवाम्। निऽहिता। सप्त। नाम ॥ ३ ॥**

इमम् उक्तस्वरूपमादित्यमण्डलाख्यं संवत्सराख्यं वा **रथं ये सप्त रश्मयः अधि तस्थुः** अधिष्ठिताः। संवत्सरपक्षे अयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवाः अधितिष्ठन्ति। कीदृशं रथम्? सप्तचक्रम्। चकनात् चरणात् क्रमणाद्वा चक्राणि रश्मयः, ते सप्त

१. ऋग्वेदे 'नवन्ते' इति पाठान्तरम्, २. 'सप्तनाम' इति च पाठभेदः।

यस्य रथस्य, तादृशमुभयविधं रथं पूर्वोक्ताः अधिष्ठिताः अश्वाः व्यापनशीलाः सप्त वहन्ति निर्वहन्ति च। तादृशं रथं **सप्त स्वसारः** स्वयं सरणाः स्वरादित्यः, तेन सारिताः परस्परं स्वसृभूता वा सप्त-संख्याका रश्मयः ऋतवश्च। **अभि सं नवन्त**=नवन्ते, आभिमुख्येन स्तुवन्ति, सङ्गच्छन्ते वा। असाधारणाः परस्परविलक्षणकार्याः षड् ऋतवः, सर्वसाधारणः एकः इति सप्तत्वम्। कीदृशो रथ इति? तदुच्यते—**यत्र** यस्मिन् रथे उभयविधे **गवाम्** वाचां स्तुतिरूपाणां **सप्त** सप्तविधानि **नामा**=नाम, नयनानि सप्तस्वररूपाणि निहितानि। सप्तस्वरोपेतैः सामभिः स्तुत्यमित्यर्थः। यद्वा—गवामुदकानां सप्त सर्पणस्वभावानि नामा नमनानि। यत्र यासु स्वसृषु निहिता स्वसारः परस्परस्वसृभुता देवनद्योऽभि संनवन्त=संनवन्ते। अथवा—यत्र गवां रश्मीनां सप्त नामा नामानि आरोग-भ्राज-प्रभृतीनि निहिता विहितानीत्यर्थः॥ ३॥

**को द॑दर्श प्रथ॒मं जाय॑मानमस्थ॒न्वन्त॒ं यद॑न॒स्था बिभ॑र्ति।**
**भूम्या॒ असु॒रसृ॑ग॒ात्मा क्व॑ स्वि॒त्को वि॒द्वांस॒मुप॑ गा॒त्प्रष्टु॑मे॒तत्॥ ४॥**

(ऋ० १.१६४.४)

कः। द॒द॒र्श॒। प्र॒थ॒मम्। जाय॑मानम्। अ॒स्थ॒न्ऽवन्त॑म्। यत्। अ॒न॒स्था। बिभ॑र्ति। भूम्याः॑। असुः॑। असृ॑क्। आ॒त्मा। क्व॑। स्वि॒त्। कः। वि॒द्वांस॑म्। उप॑। गा॒त्। प्रष्टु॑म्। ए॒तत्॥ ४॥

एवं प्रपञ्चस्य कालायत्ततां प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्य अविषयत्वमाह—**कः ददर्श** को द्रष्टुं शक्नुयात्। कदा? **प्रथमम्** सृष्टेः पूर्वम्। अव्याकृतावस्थायामित्यर्थः। किम्? **जायमानम्** प्रथमभावविकारमापन्नम्। उत्पद्यमानं प्रपञ्चमित्यर्थः। दुर्ज्ञेयत्वे हेतुमाह—**यत्** यस्मात् **अस्थन्वन्तम्** अस्थिमन्तं सशरीरम्, उपलक्षण-मेतत्। कार्यभावमापन्नमित्यर्थः। **अनस्था** अस्थिरहिता अशरीरा सांख्यप्रसिद्धा प्रकृतिः, वेदान्तप्रसिद्धा ईश्वरायत्ता माया **बिभर्ति** गर्भवदन्तर्धारयति। अव्याकृतावस्थायाम् अनस्थः अशरीरः परमेश्वरो

बिभर्ति । यदा केवलः परमेश्वरो मायाशबलितः सन् इदं जगन्निर्मितवान्, उत्पत्तिसमये देहादिसहितस्य कस्यचिदभावात् को ददर्श । तदानीं मनो नित्यमात्मा च नित्यः, तत्संयोगात् कश्चिदात्मा जानाति चेत् सोऽपि न संभवतीत्यत आह—**भूम्याः** सम्बन्धि पार्थिवं स्थूलशरीरम् । **असुः** प्राणस्तदुपलक्षितं सूक्ष्मशरीरम् । **असृक्** शोणितम् । एतत् सप्तधातूपलक्षकम् । यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात् तदपेक्षयोक्तम् । **आत्मा** तैः सम्बद्धश्चतनः **क्व स्वित्** कुत्राऽऽस्ते, न कश्चिदस्तीत्यर्थः । 'नान्यत् किञ्चन मिपत्' (ऐ० आ० २.४.१) इति श्रुतेः । यद्वा—प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श कः साक्षात्करोति । जायमानमस्थन्वन्तं मनुष्यम् अनस्थिकः परमेश्वरः सशरीरमशरीरः यत् यस्मात् बिभर्ति । द्रष्टुरपि तत्कार्यत्वादिति भावः । शिष्टं समानम् ॥ ४ ॥

**इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।**
**शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥ ५ ॥***

(ऋ० १.१६४.७)

**इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य । निऽहितम् । पदम् । वेरिति वेः । शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य । वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥ ५ ॥**

**इह** इदानीम् **ईम्** एतद्वक्ष्यमाणं तत्त्वम् **अङ्ग** क्षिप्रमविचारेण ब्रवीतु । कः ? **यः वेद सः** । कीदृशं तत् ? **अस्य** पुरतो दृश्यमानस्य **वामस्य** वननीयस्य **वेः** गन्तुः आदित्यस्य **पदम्** सर्वैः गन्तव्यं स्वरूपं **निहितं** गूढं वर्तते । किञ्च अस्य आदित्यस्य **शीर्ष्णः** शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा **गावः** केचन वर्षकालीनाः रश्मयः **क्षीरम्** उदकं **दुह्रते** क्षरन्ति । **वव्रिम्** । रूपनामैतम्, रूपं **वसानाः** आच्छादयन्तः अतिविस्तरेण तेजसा तपन्तः केचन **अस्य** गावो रश्मयः उदकं स्वसृष्टं **पदा** सृष्टेनैव मार्गेण **अपुः** पिबन्ति भूमिं निरुदकां कुर्वन्तीत्यर्थः । तस्य रूपं ब्रवीतु इत्यन्वयः ॥ ५ ॥

---

* ऋग्वेदे सूक्तक्रमतः सप्तमी ऋगियम् ।

पाकः पृच्छामि मनसाऽविजानन् देवानामेना निहिता पदानि ।
वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥ ६ ॥*

(ऋ० १.१६४.५)

पाकः । पृच्छामि । मनसा । अविऽजानन् । देवानाम् ।
एना । निऽहिता । पदानि । वत्से । बष्कये । अधि । सप्त ।
तन्तून् । वि । तत्निरे । कवयः । ओतवै । ऊँ इति ॥ ६ ॥

**पाकः** पक्तव्यः अपक्वमतिः अहं **मनसा** असंस्कृतेन **अविजानन्** अतिगहनं तत्त्व विशेषेण ज्ञातुमशक्नुवन् **पृच्छामि** प्रश्नं करोमि। अज्ञाने कारणमाह—**एना** एनानि **पदानि** सन्देहास्पदानि तत्त्वानि **देवानां निहितानि** देवानामपि गूढानीत्यर्थः । यद्वा—देवानां पदानि तत्त्वानि निधिवद् गोपयित्वा स्थापितानि। अतः पृच्छामि, तत्त्वज्ञानोपयोगायेति शेषः । तानि कानीति ? उच्यते—**वत्से** सर्वस्य निवासभूते। **बष्कये।** बडिति सत्यनाम, तत् कषतीति बष्कयः आदित्यः । यद्वा—बष्कयो नाम एकहायनो वत्सः । पुनरपि वत्सशब्दस्य पृथक् निर्देशान् बष्कयशब्देन तत्कालमात्रं लक्ष्यते । तस्मिन्नादित्ये **अधि** अधिकं **सप्त तन्तून्** तायमानान् सप्त सोमसंस्थान् **कवयः** मेधाविनो यजमानाः **ओतवै** जगद्रूपतिर्यक्तन्तून् वेतुं **वि तत्निरे** वितन्वन्ति । यद्वा—सप्ततन्तवः सप्त छन्दांसि । तानि वितन्वन्ति । किमर्थम् ? ओतवै सप्त सोमसंस्था-रूपतिर्यक्तन्तुसन्तानाय, यज्ञनिर्माणायेत्यर्थः । यज्ञानां स्थितेः सूर्याधीनत्वादिति भावः । ईदृशं तत्त्वं पृच्छामीत्यर्थः ॥ ६ ॥

अचिकित्वांश्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मनो[1] न विद्वान् ।
वि यस्तस्तम्भ षडिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥ ७ ॥‡

(ऋ० १. १६४. ६)

* ऋग्वेदे सूक्तक्रमतः पञ्चमी ऋगियम् ।

‡ ऋग्वेदे सूक्तक्रमतः षष्ठीयम् ।

१. ऋग्वेदे 'विद्मने' इति पाठः ।

अचिकित्वान्। चिकितुषः। चित्। अत्र। कवीन्। पृच्छामि। विद्वनः। न। विद्वान्। वि। यः। तस्तम्भ। षट्। इमा। रजांसि। अजस्य। रूपे। किम्। अपि। स्वित्। एकम्॥ ७॥

**अचिकित्वान्** देवतातत्त्वमजानानोऽहं **चिकितुषः** विशेषेण तत्त्वं जानतः **कवीन्** क्रान्तदर्शिनः अधिगतपरमार्थान् **अत्र** अस्मिन् तत्त्व-विषये **पृच्छामि। न विद्वान्** परमार्थज्ञानविरहितोऽहं **विद्वनः** परमार्थ-तत्त्वज्ञातॄन् 'शीङ्क्रुशिरुहि०' (उ० ४. ११४) 'विद् ज्ञाने' क्वनिप्, पृच्छामीति पूर्वेणान्वयः। किं तदित्याह—**यः** परमेश्वरः **तस्तम्भ** स्तम्भितवान्, नियमितवान्, 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' (छा० उ० ८. ४. १) इति श्रुतेः। किम्? **इमा** इमानि **षट् रजांसि** लोकान् रञ्जनात्मकान्। 'लोका रजांस्युच्यन्ते' (निरु० ४. १९) इति निरुक्तम्। यद्यपि लोकाः सप्त, तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वाभावात् षडित्युक्तम्। ननु षडैवोक्ताः, सप्तमः किमिति न निर्दिष्ट इति? उच्यते—**अजस्य** जननादिरहितस्य चतुर्मुखस्य ब्रह्मणः **रूपे** स्वरूपे **एकं** सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानं **किमपि स्वित्** किं स्विदेव। तन्न केनाप्यधि-गन्तुं शक्यमित्यर्थः। कैश्चिदेवोपासकैः अर्चिरादिमार्गेण गन्तव्यत्वा-दिति भावः। यद्वा—षट् रजांसि विलक्षणाः षट् ऋतवः। तान्य-स्तम्भयत् तत्त्वम्। अजस्य गमनशीलस्य जन्मरहितस्य वा आदित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डले एकमद्वितीयं किमपि स्वित्। यत्किञ्चिदवाङ्मनसोऽगम्यं तत्त्वमस्ति तत्पृच्छामि। 'अथ य एषोऽन्तरा-दित्ये हिरण्मयः पुरुषो दृश्यते' (छा० उ० १. ६. ६) इत्यादिश्रुति-प्रतिपादितं तत्त्वमित्यर्थः। अथवा–षड्मानि रजांसि त्रिविधान् भूलोकांश्च यस्तस्तम्भ। 'तिस्रो भूमिर्धारयन् त्रीरुत द्यून्' (ऋ० सं० २. २७. ८) इति निगमः। तस्या अजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्विदेकम् एकात्मकमस्तीति प्रश्नः। अविशेषमस्ति नाममात्रम्, एकरूपमस्तीत्युत्तरविवक्षया प्रश्नः। 'अस्तीत्येवोपलब्धव्यम्' (कठ० उ० २. ६. १३) इति श्रुतेः॥ ७॥

**माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।**
**सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥**

(ऋ० १.१६४.८)

**माता । पितरम् । ऋते । आ । बभाज । धीती । अग्रे । मनसा । सम् । हि । जग्मे । सा । बीभत्सुः । गर्भऽरसा । निऽविद्धा । नमस्वन्तः । इत् । उपऽवाकम् । ईयुः ॥ ८ ॥**

**माता** सर्वस्य निर्मात्री पृथिवी **पितरम्** पालकं द्युलोकम्, तत्स्थम् द्युलोकस्थमादित्यमित्यर्थः । तम् **आ बभाजे** आभजते । किमर्थम् ? **ऋते** उदके यज्ञे वा निमित्तभूते सति । केन द्वारेण ? **धीती** धीत्या कर्मणा यागादिरूपेण । स्वकीयेन आज्यसोमादिहविषा तर्पयतीत्यर्थः । **अग्रे** ततः पूर्वं पिता च **मनसा** अस्याम् अभिप्रायवता चेतसा । **सं जग्मे हि** संश्लिष्टो वर्तते खलु, वृष्टिमकरोदित्यर्थः । अनन्तरं सा माता **बीभत्सुः** गर्भबन्धनेच्छावती **गर्भरसा** गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन **निविद्धा** नितरां विद्धा आसीत् । यद्वा—गर्भे रसः ओषध्याद्युत्पादन-समर्थमुदकं यस्याः सा तादृशी उदकेन अत्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता भवति, बीजावापार्थम् । अत्रायं समाधिः—या काचन योषित् अपत्यार्थं स्वपतिं युवानं यौति, स च तस्यामनुरक्तः सङ्गतो भवति । सा चान्तर्वत्नी सती पुत्रान् जनयतीति तद्वदत्रापि । अनन्तरं **नमस्वन्तः इत्** भाविव्रीहिप्रियङ्-वाद्यन्नवन्त एव **उपवाक्यम्** उपेत्य वचनं परस्परं सम्यगभिवृद्धानि सस्यानीति वचनम् । **ईयुः** प्राप्नुवन्ति । यद्वा—हविर्लक्षणान्नवन्तः उपेत्य वचनं प्रैषादिरूपमीयुः । वृष्टौ सत्यां सस्यादिद्वारा यागमनु-तिष्ठेयुरित्यर्थः ॥ ८ ॥

**युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।**
**अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥**

( ऋ० १.१६४.९ )

युक्ता । माता । आसीत् । धुरि । दक्षिणायाः । अतिष्ठत् । गर्भः । वृजनीषु । अन्तः । अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥

**माता** निर्मीयन्ते अस्मिन् भूतानीति माता द्यौः । **दक्षिणायाः** अभिमतपूरणसमर्थायाः पृथिव्याः **धुरि** निर्वहणे **युक्ता** आसीत्, वर्षणाय समर्थाऽभूदित्यर्थः । कथमिति ? तदुच्यते—**गर्भः** गर्भस्थानीयः उदकसङ्घः **वृजनीषु** उदकवत्सु मेघपङ्क्तिषु मध्ये **अन्तः अतिष्ठत्** तिष्ठति । अनन्तरं **वत्सः** पुत्रस्थानीयः उदकसङ्घः **त्रिषु योजनेषु** मेघरश्मि-वायुषु संयुक्तेषु सत्सु **अमीमेत्** वर्षणसमये शब्दयति । अनन्तरं **विश्वरूप्यम्** विश्वरूपवतीं **गाम् अनु अपश्यत्** अनुक्रमेण पश्यति वर्षतीत्यर्थः । यद्वा—त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गां भूमिं प्रति अमीमेत् । अनन्तरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिम् अपश्यत् पश्यति ॥ ९ ॥

**तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्त[1] ।**
**मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदो[2] वाचमविश्वविन्नाम् ॥ १० ॥**
( १.१६४.१० )

तिस्रः । मातॄः । त्रीन् । पितॄन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लापयन्त । मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्वऽविदः । वाचम् । अविश्वऽविन्नाम् ॥ १० ॥

एकः प्रधानभूतः असहायो वा पुत्रस्थानीय आदित्यः संवत्सराख्यः कालो वा । **तिस्रः मातॄः** सस्य-वृष्ट्याद्युत्पादयित्रीः, क्षित्यादिलोकत्रयमित्यर्थः । तथा **त्रीन् पितॄन्** जगतां पालयितॄन्, लोकत्रयाभिमानिनः अग्नि-वायु-सूर्याख्यान् **बिभ्रत्** सन् **ऊर्ध्वः तस्थौ** उन्नतः अत्यन्तदीर्घस्तिष्ठति भूत-भविष्यदाद्यात्मना । सूर्यपक्षे सर्वेभ्यः उन्नतः । **ईम्** एतम् **न अव ग्लापयन्त** ग्लानिं नैव कुर्वन्ति । नहि कालः आदित्यो वा अन्येन पराभूयते । **दिवः पृष्ठे** द्युलोकस्य उपरि अन्तरिक्षे । **विश्वविदः** विश्ववेदनसमर्थाः देवाः ऋषयश्च । **मन्त्रयन्ते** गुप्तं परस्परं भाषन्ते । किम् ?

१. ऋग्वेदे 'ग्लापयन्ति' पाठः । २. ऋग्वेदे 'विश्वविदम्' पाठः ।

अविश्वविन्नाम् असर्वव्यापिनीं सामान्यजनदुर्लभाम् वाचम् गर्जितलक्षणां स्तुतिरूपां वा, अमुष्य आदित्यस्य सम्बन्धिनीं मन्त्रयन्ते समुच्चारयन्तीत्यर्थः ॥ १० ॥

पञ्चारे चक्रे परिवर्तमाने यस्मिन्नातस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न च्छिद्यते[2] सनाभिः ॥ ११ ॥*
( ऋ० १.१६४.१३ )

पञ्चऽअरे । चक्रे । परिऽवर्तमाने । यस्मिन् । आऽतस्थुः । भुवनानि । विश्वा । तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । छिद्यते । सऽनाभिः ॥ ११ ॥

यस्मिन् पञ्चारे पञ्चर्तुरूपैः अरैर्युक्ते, चक्रे संवत्सरात्मके कालचक्रे परिवर्तमाने संवत्सर-परिवत्सरादिरूपेण पुनः पुनः आवर्तमाने सति विश्वा भुवनानि सर्वाणि भूतजातानि वर्तन्त इत्यर्थः । तस्य चक्रस्य मध्ये वर्तमानः अक्षः भूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि न तप्यते न पीड्यते । किञ्च सनादेव सनातन एव सनाभिः समाननाभिकः सर्वदा एकरूपनाभिरसौ न छिद्यते न भिद्यते । यथा लौकिको रथाक्षः भारेण भग्नो भवति, अक्षघातेन च नाभिर्विवृता भवति, तद्वदत्रापि नास्तीत्यर्थः । सर्वदा अविच्छिन्नगति कालचक्रं परिभ्रमतीति हृदयम् ॥ ११ ॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणे[3] सप्तचक्रे षडर आहुरर्पितम् ॥ १२ ॥
( ऋ० १.१६४.१२ )

पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् । दिवः । आहुः । परे । अर्धे । पुरीषिणम् । अथ । इमे । अन्ये । उपरे । विऽचक्षणे । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥ १२ ॥

* ऋग्वेदे सूक्तक्रमेण त्रयोदशीयमृक् ।

१. ऋग्वेदे 'तस्मिन्' इति पाठः । २. ऋग्वेदे 'शीर्यते' पाठः ।

३. ऋग्वेदे 'विचक्षणम्' पाठः ।

पञ्चसंख्याकर्त्वात्मकपादोपेतम् । एतत् हेमन्त-शिशिरयोः एकत्वाभिप्रायम् । **पितरं** सर्वस्य प्रीणयितारं **द्वादशाकृति** द्वादश मासा एव आकृतयो यस्य तादृशम् । **पुरीषिणं** वृष्ट्युदकेन तद्वन्तं प्रीणयितारं वा । पुरीषमित्युदकनाम । उक्तलक्षणं संवत्सरचक्रं **दिवः** द्युलोकस्य **परे** अर्धे । तात्स्थात्ताच्छाब्दयम् । परस्मिन् अर्धे अन्तरिक्षलक्षणे अवस्थितः आदित्य इत्यर्थः । तस्मिन् **अर्पितम् आहुः** । एतदुत्तरत्र स्थितमत्राप्यनुषज्यते । यत् यत्रार्पितं तत् तदधीनम्, अतः संवत्सरं सूर्यायत्तमाहुरित्यर्थः । **अथ इमे** अपि च **अन्ये** केचन वेदवादिन एवमाहुः । किमिति ? **उपरे** । उपरमन्ते अस्मिन्, उपरताः प्राणिनः अत्र इति वा उपरः संवत्सरस्तस्मिन् । कीदृशे ? **सप्तचक्रे** । सप्त आदित्यरश्मयस्तद्द्वारेण चक्रस्थानीया यस्य स तथोक्तः । यद्वा—अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त सप्तचक्राणि पुनः पुनः क्रममाणानि यस्य तादृशे । **षडरे** षट् ऋतवः एव अरा नाभौ प्रत्यृताः सम्बद्धा यस्य, तथोक्तलक्षणे, **विचक्षणे** विविधदर्शनकरे संवत्सरे रथे आदित्यम् अर्पितम् आहुः । एतदुक्तं भवति—अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेः तीव्रमन्दादिभावस्य च कालाधीनत्वात् तदधीनमाहुः । अन्ये तु सवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात् तदायत्तत्वमाहुरिति ॥ १२ ॥

**द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।**
**आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥१३॥***

(ऋ० १. १६४. ११)

**द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् ।**
**परि । द्याम् । ऋतस्य । आ । पुत्राः । अग्ने । मिथुनासः ।**
**अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥ १३ ॥**

**ऋतस्य** उदकस्य सत्यात्मकस्य वा आदित्यस्य । **चक्रं** पुनः पुनः क्रमणशीलं मण्डलाख्यं रथचक्रं वा **वर्वर्ति** पुनः पुनर्वर्तते, सञ्चरति ।

* ऋग्वेदे सूक्तक्रमत एकादशी ऋगियम् ।

कुत्र ? **द्यां परि** द्युलोकस्य अन्तरिक्षस्य परितः। कीदृशं तत् ? **द्वादशारं** द्वादशसंख्याकमेषादिराश्यात्मकैः मासात्मकैर्वा अरैः रथाङ्गावयवैर्युक्तम्। किञ्च **तत् चक्रम् नहि जराय** नैव खलु जरायै भवति। हे **अग्ने**! सर्वदा गमनयुक्त आदित्य! यद्वा—अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वात् असावपि अग्निरित्युच्यते। **अत्र** अस्मिन् त्वदीये चक्रे **मिथुनासः** स्त्री-पुंसरूपेण परस्परं मिथुनीभूताः **सप्त शतानि विंशतिश्च** विंशत्युत्तरसप्तशतसंख्याकाः **पुत्राः** पुत्र-वदुत्पद्यमानाः प्राणिनां दुःखात् त्रातारो वा अहोरात्ररूपाः **तस्थुः** तिष्ठन्ति, निष्पद्यन्ते। षष्ठ्यधिकशतत्रयसंख्यकानि अहानि, तावत्य एव रात्रयः इत्येवं तद्विभागः। 'सप्त च वै शतानि विंशतिश्च संवत्सरस्य अहोरात्राः, स एषोऽहः संमानः' (ऐ० आ० ३.२.१) इत्यारण्यकम्॥ १३॥

**सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति।**
**सूर्यस्य चक्षू रजसैत्यावृतं यस्मिन्नातस्थुर्भुवनानि विश्वा॥१४॥**

(ऋ० १.१६४.१४)

**सऽनेमि। चक्रम्। अजरम्। वि। वव्रुते। उत्तानायाम्। दश। युक्ताः। वहन्ति। सूर्यस्य। चक्षुः। रजसा। एति। आऽवृतम्। यस्मिन्। आऽतस्थुः। भुवनानि। विश्वा॥ १४॥**

**सनेमि** समाननेमि एकप्रकारबहिर्वलयम् अक्षीणनेमि **चक्रं** संवत्सराख्यम् **अजरं** सदातनमपि जरारहितं **वि ववृते** पुनः पुनः विशेषेण वर्तते। **उत्तानायाम्** ऊर्ध्वतनायाम् ईषायाम् उपरि विस्तृत-भूम्यां वा **दश** इन्द्रादयः पञ्च लोकपालाः निषादपञ्चमाश्चत्वारो ब्राह्मणादयो वर्णाः मिलित्वा दश संख्याकाः **युक्ताः** स्वस्वव्यापार-युक्ताः **वहन्ति** निर्वहन्ति, कृत्स्नं जगत् निर्वहन्तीत्यर्थः, तन्निर्वाहकत्वात् कालस्य। किञ्च **सूर्यस्य** आदित्यस्य **चक्षुः** ख्यानस्वभावं सर्वस्य चक्षुः-स्थानीयं वा मण्डलम्। 'चक्षुः ख्यातेर्वा चष्टेर्वा' (निरु० ४.३) इति

* 'तस्मिन्नार्पिता' इति ऋग्वेदपाठः।

निरुक्तम् । **रजसा** वृष्टचुदकेन **आवृतं** व्याप्तम् **एति** गच्छति । 'उदकं रज उच्यते' (निरु० ४.१९) इति यास्कः । तादृशे मण्डले **विश्वा भुवनानि** सर्वाणि भूतजातानि **आतस्थुः** आसमन्तात् तिष्ठन्ति, तदधीनत्वात् तेषामिति भावः ॥ १४ ॥

**स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।**
**कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पिताऽसत् ॥ १५ ॥***

(ऋ० १.१६४.१६)

**स्त्रियः । सतीः । तान् । ऊँ इति । मे । पुंसः । आहुः ।**
**पश्यत् । अक्षण्ऽवान् । न । वि । चेतत् । अन्धः ।**
**कविः । यः । पुत्रः । स । ईम् । आ । चिकेत । यः । ता ।**
**विऽजानात् । स । पितुः । पिता । असत् ॥ १५ ॥**

**मे** मदीया या दीधितयः **स्त्रियः** संस्त्यानवत्यः योषितः **सतीः** सत्यः । योषिद्वत् उदकरूपगर्भधारणात् स्त्रीत्वम् । एषां रश्मीनाम् आविष्टलिङ्गत्वात् स्त्रीलिङ्गता । **तान् उ** तान् रश्मीनेव **पुंसः आहुः** प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः । प्रतिनिर्देशापेक्षया पुल्लिङ्गता । अमुमर्थम् अत्यन्तनिगूढम् **अक्षण्वान्** ज्ञानदृष्टचुपेतः कश्चिन्महान् **पश्यत्** जानाति । **अन्धः** अतथारूपः स्थूलदृष्टिः **न वि चेतत्** न विचेतयति, न जानाति । किञ्च—**यः कविः** क्रान्तदर्शी **पुत्रः** स्त्री-पुरुषरूपाणां रश्मीनां पुत्रस्थानीयः, पुरुजगतां त्राता वृष्ट्युदकलक्षणोऽस्ति **सः ईम्** स एव पुत्रः । यद्वा—ईम् एनमर्थम् । स्त्रीणां सतीनां पश्चात् पुरुषभावम् **आ चिकेत** सर्वतो जानाति । पित्रोः स्थितिं पुत्र एव जानाति, नान्यः । **यः** कश्चित् **ताः** तानि **विजानात्** स्त्री-पुरुष-पुत्ररूपाणि जानीयात् **सः पितुः पिता असत्** । पिता वृष्ट्या जगत्पालको रश्मिसमूहः । तस्यापि पिता आदित्यः, स भवति, आदित्य एव भवतीत्यर्थः । यद्वा—लौकिकोक्तिरियम्—यस्तानि जानाति स एवं भवति । स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति । पुत्र-पौत्रादिसहितः चिरकालं जीवी भवति । इत्यधिदैवतम् ।

---

* सूक्तक्रमत ऋग्वेदे ऋगियं षोडशी ।

अथाध्यात्मम—या: इदानीं स्त्रिय: सती: स्त्रीत्वं प्राप्ता आहु- लौकिका:, तान् उ तानवे मे मह्यं पुंस: पुरुषान् आहु: प्रतिपादयन्ति तत्त्वज्ञा: । कथमन्यस्य अन्यभाव: ? उच्यते—एकस्यैव निरस्तसमस्तो- पाधिकस्य आत्मन: तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्ते: । श्रूयते हि—'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी' (श्वेता० उ० ४. ३) इत्यादि । स्त्रीत्वं पुंस्त्वं च उभयमपि वस्तुतो नास्तीत्युक्तम् भवति । श्रुतिरपि तदभावं बोधयति–'नैव स्त्री न पुमानेष नैव चायं नपुंसक: । यद्यच्छरीरमादत्ते तेन तेन स चोद्यते' (श्वेता० उ० ५. १०) इति । द्वितीय: पाद: पूर्ववत् । किञ्च पुत्रो वयसा अल्पोऽपि य: कवि: क्रान्तप्रज्ञो ज्ञानी स्यात्, ईम् इममर्थं स विचिकेत जानाति । एवमुक्त- लक्षणस्य परमात्मन: ता तानि स्त्रीपुंस्त्वादीनि यो विजानीयात् औपाधि- कानि जानीयात्, स पितु: स्वोत्पादकस्यापि ज्ञानरहितस्य पिता असत् पितृवत् पूज्यो भवति । उक्तमर्थमभिप्रेत्य ताण्डकब्राह्मणम्—'शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्, स पितॄन् पुत्रका इत्यामन्त्रयत' इत्युपक्रम्य, 'ते देवानपृच्छन्त, ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृत्' (ता० ब्रा० १३.३.२४) इति । मन्त्रद्रष्टुरेव किल पितृत्वम्, तत्त्ववित् पितु: पिता असदिति किमाश्चर्यमित्यभिप्राय: ।। १५ ।।

साकंजानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामश स्थात्रे रेजन्ते विकृतानि
रूपश: ।। १६ ।।*

( ऋ० १.१६४.१५ )

साकम्ऽजानाम् । सप्तथम् । आहु: । एकऽजम् । षट् । इत् ।
यमा: । ऋषय: । देवऽजा: । इति । तेषाम् । इष्टानि ।
विऽहितानि । धामऽश: । स्थात्रे । रेजन्ते । विऽकृतानि ।
रूपऽश: ।। १६ ।।

---

१. ऋग्वेदे 'धामश:' इति पाठ: । अथर्वभाष्यकृद्भिरपि अन्य 'धामश:' इत्येव पदमादाय व्याख्यातम् । विसर्गलोपो मृग्य: (सातवलेकर-पाठे) ।

* ऋग्वेदे सूक्तक्रमत: पञ्चदशीयम् ।

१४

**साकंजानाम्** एकस्मादादित्यात् सहोत्पन्नानां सप्तानामृतूनां मध्ये **सप्तथम्** सप्तममृतुम् । 'थट् च छन्दसि' (पा० सू० ५. २. ५०) इति थट् । **एकजम्** एकेनोत्पन्नम् **आहुः** कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षट् ऋतवो भवन्ति । अधिकमासेन एकः उत्पद्यते सप्तमर्तुः । न च तादृशो मास एव नास्तीति मन्तव्यम्; 'अस्ति त्रयोदशो मास इत्याहुः' (तै० सं० ६. ५. ३. ४) इति श्रुतेः । तदेवोच्यते–**षडिद्यमाः** । इच्छब्द एवकारार्थः । षडेव ऋतवः मासद्वयरूपाः । **ऋषयः** गन्तारः । ते च **देवजाः** देवात् आदित्यात् जाता इति एवमाहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः, 'निःसूर्योऽधिकमासो मण्डलं तपते रवेः' इत्यादिस्मृतेः । तस्मात् षडेव देवजाः, अदेवजः एकः । **तेषाम्** ऋतूनां स्वरूपाणि **इष्टानि** सर्वलोकाभिमतानि **धामशः** तत्तत्स्थाने **विहितानि** पृथक्-पृथक् स्थापितानि **रूपशः** रूपभेदेन **विकृतानि** विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः—'स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्माय' (तै० सं० ७.२.१०.१) इत्यादि । **स्थात्रे** अधिष्ठात्रे तदर्थाय **रेजन्ते** चलन्ति । जगद्व्यवहाराय पुनः पुनरावर्तन्ते इत्यर्थः ॥ १६ ॥

**अवः परेण पर एनाऽवरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अस्मिन्[1] ॥ १७ ॥**

( ऋ० १.१६४.१७ )

**अवः । परेण । परः । एना । अवरेण । पदा । वत्सम् । बिभ्रती । गौः । उत् । अस्थात् । सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् । क्व । स्वित् । सूते । नहि । यूथे । अस्मिन् ॥ १७ ॥**

अत्र अग्नौ हूयमानाहुतिर्गौरूपेण स्तूयते—**गौः** गोरूपा गमनशीला एषा आहुतिसङ्घेन पोष्यं **वत्सम्** वत्सस्थानीयमग्निम् **अवः** अवस्तात् अधोदेशे **परेण पदा** पादद्वयेन स्वावयवेन आकृष्य **बिभ्रती** धारयन्ती

१. ऋग्वेदे 'अस्मिन्' स्थाने 'अन्तः' इति पाठः ।

तथा **परः** परस्तात् उपरिदेशे **एना** अनेन **अवरेण** च पदा पादद्वयेन आकृष्य तमेव वत्सं बिभ्रती **उदस्थात्** सूर्यं प्रति उत्तिष्ठति, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' (मनु० ३.७६) इति स्मृतेः। अथैवं कृतवती **सा** आहुतिः **कद्रीची** क्व गतेत्यनिश्चयगमना। आदित्यं प्राप्तवतीत्यर्थः। **कं स्वित्** कं फलभाजं पुरुषं प्रति **अर्धम्** अर्धमार्गम् आगत्य। यद्वा—अर्धमृद्धम् **परागात्** परागच्छति। आगत्य च **क्व स्वित् सूते** कुत्र प्रदेशे फलमुत्पादयति। नहि इतरगोवत् इयं **यूथे अस्मिन्** सजातीयगोसमूहमध्ये सूते। साधारण्येन यत्र क्वचिन्न सूते, अपितु कस्मिंश्चिदनुष्ठातरि। अतः स महान् को नु खल्विति।

यद्वा-आदित्यरश्मिसमूह एव गोरूपेण स्तूयते—गौः उक्तलक्षणा रश्मिरूपा गौः वत्सम् वत्सवत् रक्षणीयं यजमानम् उक्तरूपेण बिभ्रती उदस्थात्। अथ तथा कृत्वा सा कद्रीची अदृश्यगमना सती कं स्वित् अर्धम् ऋद्धम् अर्धस्थानभाजनं वा कं स्वित् पुरुषम् आदित्यं परागात् अप्रतिनिवृत्ता गता, 'तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः' (मु० उ० १.२.५) इति श्रुतेः। तथा कृत्वा च क्व स्वित् सूते कस्मिन् इन्द्रादिलोके जनयति, न सर्वत्र। शिष्टं समानम् ॥ १७ ॥

**अवः परेण पितरं यो अस्य वेदावः परेण पर एनावरेण ।**
**कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥**
(ऋ० १.१६४.१८)

**अवः । परेण । पितरम् । यः । अस्य । वेद । अवः । परेण । परः । एना । अवरेण । कविऽयमानः । कः । इह । प्र । वोचत् । देवम् । मनः । कुतः । अधि । प्रऽजातम् ॥ १८ ॥**

**अवः** अवस्तात् स्थितम् **अस्य पितरम्** एतल्लोकपालकम् अग्निं **परेण** आदित्येन सह **यः वेद** जानाति, तथा **परः** परस्तात् स्थितम् आदित्यम् **अस्य पितरं** पालकम्। सोऽपि इममेव लोकं वृष्ट्यादिना पालयति। **परेण अवः** उच्चैः अवस्तात् स्थितेन **एना** अनेन **अवरेण**

१. ऋग्वेदे 'अस्य वेदावः' स्थाने 'अस्याऽनुवेद' इति पाठः।

अग्निना सह य वेद, अग्न्यादित्यौ व्यतिहारेण उपास्ते । यद्वा–अभिभूत-रजस्तमस्कौ उद्बुद्धसत्त्वौ, अत एव स्वाधीनमायौ एतौ एकत्वेन वा अधिगच्छति । स तादृशः पुरुषः **कवीयमानः** कविवदाचरन्, आत्मनः क्रान्तदर्शित्वं ख्यापयन् **क इह** अस्मिन् लोके **प्र वोचत्** प्रब्रवीति । किञ्च **देवम्** द्योतमानं देवविषयम् अलौकिकं वा **मनः कुतः** कस्मात् अदृष्टविशेषात् **अधि** आधिक्येन **प्रजातम्** उत्पन्नम् । उभयमपि दुर्लभमित्यर्थः ।। १८ ।।

ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः । इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ।। १९ ।।

(ऋ० १.१६४.१९)

ये । अर्वाञ्चः । तान् । ऊँ इति । पराचः । आहुः । ये । पराञ्चः । तान् । ऊँ इति । अर्वाचः । आहुः । इन्द्रः । च । या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ।। १९ ।।

**ये** सूर्य-सोमयोश्चक्रे वर्तमाना रश्मयो ग्रहादयश्च तत्परिभ्रमणवशेन **अर्वाञ्चः** अर्वागञ्चनाः अधोमुखाः सन्ति **तान् उ** तानेव **पराचः आहुः** पराङ्मुखाञ्चनान् ऊर्ध्वान् आहुः कालविदः । तथा प्रथमं **ये पराञ्चः** परागञ्चनाः **तान् उ** तानेव **अर्वाचः** आहुः । हे **सोम** ! त्वम् **इन्द्रः** परमेश्वरः, इरां भूमिं वृष्ट्या धारकः आदित्यः । यद्वा–द्वादशादित्यानां मध्ये इन्द्रोऽप्येकः, 'विवस्वदिन्द्रयुताः' इत्युक्तत्वात् अयमपि इन्द्रः । सः **च** युवाम् **या** यानि मण्डलपरिभ्रमणानि **चक्रथुः** कृतवन्तौ तानि **रजसः** रञ्जनात्मकस्य लोकस्य । कर्मणि षष्ठी । लोकम्, **वहन्ति** निर्वहन्ति । तत्र दृष्टान्तः—**धुरा** शकटादौ धुरि **युक्ताः** सम्बद्धाः अश्वादयः **न** यथा धुरं वहन्ति तद्वत् । यद्वा—एतत् पूर्वार्धे दृष्टान्तितम् । धुरा युक्ताः । धुरि स्थितं चक्रमपि 'धुर्'शब्देनोच्यते, तत्र युक्ताः समर्पिताः पुरुषाः तत्परिभ्रमणवशेन अर्वाञ्चोऽपि पराञ्चः, पराञ्चोऽपि अर्वाञ्चो भवन्ति, तद्वत् ।। १९ ।।

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभि चाकशीति ॥२०॥**

(ऋ० १.१६४.२०)

**द्वा । सुऽपर्णा । सऽयुजा । सखाया । समानम् । वृक्षम् ।**
**परि । सस्वजाते इति । तयोः । अन्यः । पिप्पलम् । स्वादु ।**
**अत्ति । अनश्नन् । अन्यः । अभि । चाकशीति ॥ २० ॥**

अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीव-परमात्मानौ स्तूयेते—यथा लोके **द्वौ सुपर्णा** सुपर्णौ, सुपतनौ शोभनगमनौ **सयुजा** समानयोगौ **सखाया** समानख्यानौ **समानं वृक्षं परि षस्वजाते** एकमेव वृक्षं परिषस्वजाते आश्रयतः, **तयोः अन्यः** एकः **पिप्पलम्** पक्वं स्वादुतरम् **अत्ति, अन्यः** अपरः **अनश्नन् अभि चाकशीति** अभिपश्यति, तद्वत् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञ-परमात्मानौ, सयुजा समानयोगौ । योगो नाम सम्बन्धः, स च तादात्म्यलक्षणः । स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा । एवमन्यस्यापि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः । एवमेकस्वरूपौ इत्यर्थः । अनेन भास्करमतानुसारिणः अतिरेकिनाम्नो जीवात्मा परमात्मनो नान्यः, स च परमात्मा जीवादन्यो नाना जीवाश्रयणादिति मतं निरस्तं भवति । ननु सम्बन्धो द्विष्ठः, स च पक्षिणोरिव भेदमपेक्षते, अतः कथमैकात्म्यमिति ? न; औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः । अत एव सखायौ समानख्यानौ, नान्यख्यानौ । ननु 'एकस्य यादृशं ख्यानं तादृशमेव अन्यस्य' इति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति, तत्कथं तादात्म्यमुच्यते, इति न वक्तव्यम् । नात्र परस्परं दृष्टान्त-दार्ष्टान्तिकभावः । अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनः, तदेव ख्यानमितरस्यापि जीवात्मन इति 'सखायौ' इत्युच्यते । एकरूपप्रकाशावित्यर्थः । अतः उत्पन्नमैकात्म्यम् । अनेन वास्तवभेदोऽपि निरस्तः । 'समानं वृक्षं परि षस्वजाते' इत्यत्र यथा आश्रयान्तराभावात् उभयोरेकाश्रयत्वम् अभ्युपगन्तव्यं तद्वत् 'सयुजा, सखाया' इत्युभयत्रापि एकयोगख्याने आश्रयणीये । वृश्च्यते इति वृक्षो देहः । स च उभयोः समानः एक एव । जीवस्य भोगार्थत्वात् परमात्मना सृष्टैः महाभूतैः आरब्धत्वात् तस्यो-

पलब्धिस्थानत्वाच्च उभयोरपि समानः। तादृशं समानं वृक्षं परिषस्वजाते परिष्वजतः आश्रयतः। न च जीवस्य वस्तुतः ईश्वरत्वे कथं जीवबुद्ध्या संसार-शोकौ इति वाच्यम्; तयोर्मोहकृतत्वात्। तथा च आथर्वणिकाः अमुं मन्त्रमाम्नाय अस्य सन्देहनिवर्तकमुत्तरं मन्त्रम् एवमामनन्ति—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु० उ० ३.१.२) इति। अस्यायमर्थः—एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमपि ईश्वरोऽपि अनीशत्वबुद्ध्या मुह्यमानो मूढः सन् शोचति। संसारे 'अहं कर्ता, सुखी, दुःखी'ति जनन-मरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतम् ईशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति तदा वीतशोको देहाद् व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन् अस्य महिमानमिति। निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्य-सर्वज्ञत्वादिमहिमानमिति एति प्राप्नोति। न च तद्भावनाप्तौ तन्महिमा प्राप्यते, अतस्तद्रूपो भवतीत्यर्थः। तस्मात् वस्तुतः एक एव, भेदस्तु मोहकृत इति सिद्धम्। अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्य उच्यते—तयोः अन्यः जीवात्मा पिप्पलं कर्मफलं स्वादुभूतम् अत्ति भुङ्क्ते। यस्य यदुपार्जितं तत् तस्य स्वादु भवति। अन्यः परमात्मा अनश्नन् आप्तकामत्वेन अभुञ्जानः, स्पृहाया अभावात् 'आप्तकामस्य का स्पृहा' (मा० उ० का० १.९) इति स्मृतेः। तस्मात् अवास्तवभेदमुपजीव्य 'तयोरन्यः' इत्युक्तम्। वस्तुतस्तु 'अनीशया शोचति मुह्यमानः' इत्युक्तत्वात् अभेद एव। तादृशः परमात्मा स्वात्मनि अध्यस्तं जगत् साक्षित्वेन ईक्षते। अत्र 'द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ' (निरु० १४.३०) इत्यादि निरुक्तगतम् अस्य मन्त्रस्य व्याख्यानम् अनुसन्धेयम् ॥ २० ॥

**यस्मि॑न् वृ॒क्षे म॒ध्वदः॑ सुप॒र्णा नि॑वि॒शन्ते॒ सुव॑ते॒ चाधि॒ विश्वे॑।**
**तस्य॒ यदा॒हुः[1] पिप्प॑लं स्वा॒द्वग्रे॒ तन्नोन्न॑शद्यः पि॒तरं॒ न वेद॑ ॥ २१ ॥***

(ऋ० १.१६४.२२)

*ऋग्वेदे सूक्तक्रमतो द्वाविंशतितमा ऋगियम्।

१. ऋग्वेदे 'तस्येदाहुः' इति पाठः।

**यस्मिन् । वृक्षे । मधुऽअदः । सुपर्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे । तस्य । यत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥ २१ ॥**

अत्र वृक्षस्वरूपकल्पना । अधिदैवम् आदित्यम् अध्यात्मम् आत्मानं च प्रशंसति—**यस्मिन्** आदित्ये **वृक्षे** वृक्षवत् सर्वफलाश्रयभूते । **मध्वदः** मध्वित्युदकनाम । तत् अदन्तीति मध्वदः उदकस्य अत्तारः । **सुपर्णाः** सुपतनाः रश्मयः **निविशन्ते** प्रविशन्ति रात्रौ । **सुवते च** पुनरुदयकाले प्रकाशं जनयन्ति च यस्मादादित्यात् । कुत्र ? **अधि विश्वे** विश्वस्योपरि । तस्य आदित्यवृक्षस्य **यत् पिप्पलम्** पालकं फलं **स्वादु** रसवत् **अग्र** उपरि, उपासनानन्तरम् **आहुः** कथयन्ति तत्त्वविदः । यद्वा—सर्वस्य अधि उपरि वर्तमानमाहुः । ईदृशं **पितरम्** जगतः पालयितारं **यः** नरः **न वेद** नोपास्ते, स **तत् न उत् नशत्** तत्फलं नैव प्राप्नोति । नशतिर्गतिकर्मा । वेदितुस्तु अग्रे पिप्पलमाहुरित्यर्थः । इत्यधिदैवपक्षे ।

अथाध्यात्मपक्षे—यस्मिन् परमात्मनि वृक्षे वृक्षवत् गमनादिरहिते अविक्रिये सुपर्णाः शोभनगमनानि इन्द्रियाणि मध्वदः मधुनो ज्ञानस्यात्तॄणि तज्ज्ञानेन ज्ञानभाञ्जीत्यर्थः । निविशन्ते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तानि आत्मनि वृत्त्या लीयन्ते । पुनः प्रबोधकाले अधि विश्वे विश्वस्यो परि सुवते च उद्यन्ति, स्वस्वविषयान् लभन्ते इत्यर्थः । तस्य परमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वादु आस्वादनीयम् अमृतत्वलक्षणं ज्ञानम् । यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तद्धि स्वादुतमम् । इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वात् आपातस्वादूनि । तत्फलम् अग्रे स्वरूपज्ञानोत्तरकालमाहुः । यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारम् आत्मानं वा न वेद न जानाति गुरु-शास्त्रात्, स तत्फलं नोन्नशत् न प्राप्नोति । अतः आत्मानं यो वेद स एव तत् मोक्षफलं प्राप्नोतीत्यर्थः । यद्वा—'चर्मवदाकाशम्' (श्वे० उ० ६.२०) इत्यादिश्रुतिः ज्ञानादन्योपायस्य अमृतत्वप्राप्तिं निवारयति । 'ब्रह्म वेद ब्रह्मैव भवति' (मु० उ० ३.२.९) इत्यादिका तु ज्ञानात् प्राप्तिमाह । तस्मात् ईदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः ॥ २१ ॥

**यत्रा॑ सु॒प॒र्णा अ॒मृत॑स्य भ॒क्षमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति । ए॒ना[2] विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥ २२ ॥***

(ऋ० १.१६४.२१)

**यत्र॑ । सु॒ऽप॒र्णाः । अ॒मृत॑स्य । भ॒क्षम् । अनि॑ऽमेषम् । वि॒दथा॑ । अ॒भि॒ऽस्वर॑न्ति । ए॒ना । विश्व॑स्य । भुव॑नस्य । गो॒पाः । सः । मा॒ । धीरः॑ । पाक॑म् । अत्र॑ । आ । वि॒वे॒श ॥ २२ ॥**

यत्र आदित्यमण्डले **सुपर्णाः** सुपतनाः शोभनगमनाः रश्मयः **अमृतस्य** उदकस्य **भक्षम्** भजनीयं भागम् अंशम् आदाय **अनिमेषम्** अनवरतम् **एना** एतेन **विदथा** वेदनेन ज्ञानेन अस्माभिरेवं कर्तव्यमिति बुद्ध्या **अभिस्वरन्ति** अभिप्रापयन्ति । यश्च **विश्वस्य भुवनस्य** भूतजातस्य **गोपाः** गोपायिता रक्षति । अयम् आदित्यः स परमेश्वरः **धीरः** धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् **मा** माम् **पाकम्** पक्तव्यम् अपक्वप्रज्ञम् **अत्र** अस्मिन् स्वकीयमण्डले **आ विवेश** प्रवेशयति । अत्र अस्मदीये देहे वा नियामकतया प्रविष्ट इति अधिदैवतपक्षः ।

अथाध्यात्मपक्षे—यत्र यस्मिन् आत्मनि सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय गमनकुशलानि इन्द्रियाणि चक्षुरादीनि अमृतस्य भक्षम् भजनीयं स्वस्वांशम् अनिमेषं निमेषरहितम् अनारतम् एना विदथा वेदनेन वृत्त्यवच्छिन्नचैतन्येन अवरुद्धानि अभिस्वरन्ति अभि-प्रयन्ति, आवरणापगमनेन स्फोरयन्ति । किञ्च, यस्तु विश्वस्य भुवनस्य गोपाः गोपायिता रक्षिता । स परमेश्वरः धीरः समाधिनिष्ठः सर्वदा अविक्रियो मा मां पाकं परिपक्वमनस्कं याग-दानादिना अपगतरज-स्तमस्केन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं माम् । आविवेश । उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः । यद्वा—अपरिपक्वमना अहं पूर्वम् अज्ञानदशायां मदन्यः ईश्वरोऽस्तीति अविद्वान् । ततः परमस्ति कश्चित् सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य, पश्चात्

---

* ऋग्वेदे सूक्तक्रमात् एकविंशतितमा ऋगियम् ।

१. ऋग्वेदे 'भगम्' इति पाठः । २. ऋग्वेदे 'इनो' इति पाठः ।

गुरु-शास्त्राभ्यां स एव अहमस्मीति मत्त्वा, एवं पारम्पर्येण अवगत्य असंभावना-विपरीतभावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्मा अभूवमित्यर्थः। इदमेव 'स मा धीरः पाकमत्राविवेश' इत्यनेनोच्यते। ननु अनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात् प्राप्तिरेव नोपपद्यते ? सत्यम् ; अत्र प्राप्तिर्द्विविधा—१. प्राप्तप्राप्तिः, २. अप्राप्तप्राप्तिश्चेति। तत्र प्राप्तस्यापि 'कण्ठे चामीकर'-न्यायेन आवरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते। अस्य मन्त्रस्य यन्निरुक्तम्—'यत्र सुपर्णाः सुपतना आदित्यरश्मयः' (निरु० ३.१२) इत्यादिकं तदत्र द्रष्टव्यमिति ॥ २२ ॥

## नवमकाण्डे दशमं सूक्तम् : आत्मा

[१–२८] ऋषिः—ब्रह्मा। देवता—गौः, विराट्, अध्यात्मम्; २३ मित्रावरुणौ। छन्दः—*त्रिष्टुप्; १, ७, १४, १७, १८ जगती; २१ पञ्चपदा अतिशक्वरी; २४ चतुष्पदा पुरस्कृतिर्भुरिग् अतिजगती; २,२६,२७ भुरिक्।

यद्गा॑य॒त्रे अधि॑ गाय॒त्रमाहि॑तं॒ त्रैष्टु॑भं वा॒ त्रैष्टु॑भान्नि॒रत॑क्षत।
यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं य इत्तद्वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥ १ ॥
(ऋ० १.१६४.२३)

यत्। गा॒य॒त्रे। अधि॑। गा॒य॒त्रम्। आऽहि॑तम्। त्रैस्तु॑भम्। वा॒। त्रैस्तु॑भात्। निः॒ऽअत॑क्षत। यत्। वा॒। जग॑त्। जग॑ति। आऽहि॑तम्। प॒दम्। ये। इत्। तत्। वि॒दुः। ते। अ॒मृ॒त॒ऽत्वम्। आ॒न॒शुः ॥ १ ॥

विनियोगः—'यद् गायत्रे' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः।

**गायत्रे अधि गायत्रमाहितम्** प्राथम्यात् सर्वैः स्तुतत्वाच्च गायत्री भूः। तदीयं स्थानं गायत्रम्। अधि उपरि तत्र गायत्रम् आग्नेयं पदम् आहितम्। प्रथमसृष्टत्वात् गायति त्रायते च इति व्युत्पत्त्या च

* सूक्तस्यानुल्लिखितछन्दस्क-मन्त्राणाम् एतच्छन्दः।

प्रजापतेर्मुखात् गायत्र्या सह उत्पन्नत्वात् भक्त्या अग्निरपि गायत्रः। 'गायत्रोऽग्निः (तै० सं० २.२.५.५) इति श्रुतेः। भूम्यामग्निः स्थापित इति **यत्** अस्ति। तथा **त्रैष्टुभात्** द्वितीयत्वात् वृष्टि-पर्जन्य-विद्युद्रूप-त्रिस्तोमयुक्तात् अन्तरिक्षात् **त्रैष्टुभं** स्तोमयुक्तम् ऊर्ध्वाधस्तिर्यग्लक्षण-स्तोमत्रयोपेतं वायुं **निरतक्षत** साधु सम्पादितवन्तो देवाः इति वदन्ति। **वा** अथवा **जगति** सर्वैर्गन्तव्ये उद्गततमे वा तृतीयभूते द्युलोके **जगत्** गमनशीलम् आदित्याख्यं **पदम् आहितम्** इति यत् अस्ति। **तत्** इदं त्रिषु स्थानेषु त्रयाणामग्न्यादीनां पदाधानं **य इत्** ये एव नराः **विदुः** जानन्ति **ते** एव **अमृतत्वम् आनशुः** अमरणरूपं पदमाप्नुवन्ति। इत्यधिलोकम्।

अथाधियज्ञम्। गायत्रे प्रातःसवने अधि उपरि गायत्रं छन्दः पदमाहितमिति यत्। तथा त्रैष्टुभात् माध्यन्दिनात् सवनात् त्रैष्टुभं छन्दो निरतक्षत तत्र आहितमिति यत् वा किञ्चेत्यर्थः। जगति तृतीयसवने जगत् जागतं पदमाहितमिति यत्। तत्तादृशं सवनत्रयेषु छन्दस्त्रयसंस्थानं ये नरा विदुः यजमाना विदुः जानन्ति ते अमृतत्वं ज्ञानानुष्ठानद्वारेण मोक्षम् आनशुः आप्नुवन्ति। अथवा—गायत्रे प्रातः-सवने। त्रिषु सवनेषु छन्दस्त्रयपरिमाणात् सवनान्यपि तत्तच्छन्दः-शब्देनोच्यन्ते। 'गायत्रं प्रातःसवनं त्रैष्टुभं माध्यान्दिनं सवनं जागतं तृतीयसवनम्' (तै० सं० २.२.९.५-६) इति श्रुतेः। तादृशे प्रातःसवने अधि उपरि गायत्रम् अष्टाक्षरात्मकम् आहावप्रतिगररूपं गायत्रं पदमाहितम्। तद्यथा—होता 'शोंसावोम्' इति त्र्यक्षरेण तथा 'शंसामोदैवोम्' इति पञ्चाक्षरेण अध्वर्युः प्रतिगृणाति। तन्मिलित्वा अष्टाक्षरं सम्पद्यते। तच्च अष्टाक्षरं गायत्रीसदृशं तस्याः अपि पादस्य अष्टाक्षरत्वात्। इदमेकं प्रातःसवनरूपे गायत्रपदप्रतिष्ठापनम्। तथा सवनान्ते अपि शंसनानन्तरम् 'उक्थं वाचि' इति चतुरक्षरमाह (होता)। 'ओमुक्थशाः' इति चतुरक्षरम् अध्वर्युः। तदष्टाक्षरं सम्पद्यते। एतदेकं परं गायत्रे गायत्रस्थापनम्। तथा त्रैष्टुभात् माध्यन्दिनसवनात् त्रैष्टुभम् आहावप्रतिगरणरूपं पदं निरतक्षत ऋत्विजः। तद्यथा–माध्यन्दिनसवने होता 'अध्वर्यो शोंसावोम्' इति आह्वयते षडक्षरेण। अध्वर्युश्च 'शंसामोदैवोम्' इति पञ्चाक्षरेण प्रतिगृणाति। तन्मिलित्वा एकादशाक्षरं सम्पद्यते। इदमेकं माध्यन्दिन-

सवनादौ त्रैष्टुभे त्रैष्टुभाधानम् । तथा सवनान्तेऽपि शंसनानन्तरम् 'उक्थं वाचि इन्द्राय' इति सप्ताक्षरमाह ( होता ) । अध्वर्युश्च 'ओमुक्थशाः' इति चतुरक्षरेण प्रतिगृणाति । तन्मिलित्वा एकादशाक्षरं सम्पद्यते । इदमपरं त्रैष्टुभे त्रैष्टुभाधानम् । तथा तृतीयसवने होता 'अध्वर्यो शोंशोंसावोम्' इति सप्ताक्षरेण आह्वयते । 'शंसामोदैवोम्' इति पञ्चाक्षरेण अध्वर्युः प्रतिगृणाति । द्वादशाक्षरं भवति । तदिदं प्रथमं जागते जागतोत्पादनम् । तथा पश्चादपि शंसनानन्तरमाह (होता)– 'उक्थं वाचि इन्द्राय देवेभ्यः' इति । एतदेवैकादशाक्षरं भवति । अध्वर्युश्च 'ओम्' इत्येकाक्षरेण प्रतिगृणाति । तदुभयं मिलित्वा द्वादशाक्षरं भवति । तदिदमपरं जागते जागतपदस्थापनम् । एवं त्रिषु छन्दस्सु त्रिषु गायत्र्यादिसवनेषु गायत्रादिछन्दस्त्रयपदप्रतिष्ठापनम् । एतत्सर्वम् ऐतरेयब्राह्मणे 'देवविशः कल्पयितव्याः' (ऐ० ब्रा० ३.१२) इति खण्डे विस्पष्टमाम्नातम् । तत्तादृशं छन्दसि छन्दस्स्थापनं च इत्तद्विदुः ये एव जानन्ति ते एव अमृतत्वम् आनशुः प्राप्नुवन्ति अनुष्ठानद्वारा । एवम् अजानन्तः अनुष्ठानेनापि फलं न प्राप्नुवन्ति इत्यर्थः । तस्य साकल्याभावादिति भावः ।। १ ।।

**गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।**
**वाकेन वाकं द्विपदा चतुष्पदाऽक्षरेण मिमते सप्त वाणीः ।। २ ।।**

(ऋ० १.१६४.२४)

**गायत्रेण । प्रति । मिमीते । अर्कम् । अर्केण । साम । त्रैस्तुभेन । वाकम् । वाकेन । वाकम् । द्विऽपदा । चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ।। २ ।।**

**गायत्रेण** गायत्रच्छन्दसा **अर्कम्** अर्चनसाधनं मन्त्रं **प्रति मिमीते** प्रत्येकं परिच्छिनत्ति । 'अर्को मन्त्रो भवति यदनेनार्चन्ति' (निरु० ५.४) इति निरुक्तम् । प्रतिमन्त्रं गायत्रेण छन्दसा उपनिबद्धं करोति । उपलक्षणमेतदन्येषां छन्दसाम् । यद्वा—इतरेषां छन्दसाम् अस्यैव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोभिः प्रतिमिमीते इत्यर्थः । यद्वा—प्रतिशब्दः सम् इत्येतस्मिन्नर्थे । छन्दोभिः मन्त्रान् संमितं करोतीत्यर्थः ।

**अर्केण साम** उक्तलक्षणेन मन्त्रेण साम गायत्र-रथन्तरसंज्ञकं साम प्रतिमिमीते। ननु 'एकं साम तृचे क्रियते' इति तिसृषु एकं साम विहितम्, अतः 'अर्कैः साम' इति वक्तव्यम्। कथमुच्यते अर्केण इति ? न; वस्तुतः एकं साम एकस्याम् ऋचि आरूढम्। पश्चादन्योन्यां तदुत्तरयोगायेति इत्यतिदेशतः प्राप्तं तिसृषु गानम्। अतः एकवचनमविरुद्धम्। **त्रैष्टुभेन वाकम्**। अत्र त्रिष्टुबुपादानम् इतरच्छन्दःप्रदर्शनार्थम्। अथवा — अनादेशे सर्वत्र त्रिष्टुभो ग्रहणात् प्राचुर्याभिप्रायेण इदमुक्तम्। त्रैष्टुभेन द्विवार-त्रिवारावृतेन द्वृच-तृचरूपं वाकं वक्तव्यमेकैकं छन्दः प्रतिमिमीते। अथवा—वाकं सूक्तम्, एतावद्भिस्त्रिष्टुब्भिः उपनिबद्धमिदं सूक्तमिति। तादृशेन **वाकेन वाकं** वर्गमनुवाकं वा मिमीते। कीदृशेन वाकेन ? इति स विशेष्यते—**द्विपदा चतुष्पदा** पादद्वयबद्धविराडादिच्छन्दोनिबद्धमन्त्ररूपेण चतुष्पदा पादचतुष्टयोपेतेन अनुष्टुवादिमन्त्ररूपेणेति। इयतीभिर्द्विपदाभिर्वर्गः। इयतीभिश्चतुष्पदाभिरुपेतो वर्गः। इयद्द्विपदरूपैर्वाकैः इयच्चतुष्पदरूपैर्वाकैश्च परिमितोऽनुवाक इति। सूक्तपक्षे एतावद्भिः सूक्तैः अयमनुवाकः इति। किञ्च **अक्षरेण** अक्षरेणैव **सप्त वाणीः** वागधिष्ठितानि सप्त छन्दांसि **मिमते** निर्माणं कुर्वन्ति। अष्टाक्षरा गायत्री, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगतीति। अक्षरैः पादाः परिमीयन्ते, परिमितैः पादैश्छन्दांसि। ततः पादानां छन्दसाम् अक्षरं मूलमिति। तथा ऋग्वर्ग-सूक्तानुवाकादीनां च अक्षरं मूलमिति अक्षरप्रशंसा ॥ २ ॥

जगता सिन्धुं दिव्यस्कभायद्रथन्तरे सूर्यं पर्यपश्यत्।
गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्र रिरिचे महित्वा ॥ ३ ॥

( ऋ० १.१६४.२५ )

जगता। सिन्धुम्। दिवि। अस्तभायत्। रथम्ऽतरे। सूर्यम्। परि। अपश्यत्। गायत्रस्य। सम्ऽइधः। तिस्रः। आहुः। ततः। मह्ना। प्र। रिरिचे। महिऽत्वा ॥ ३ ॥

जगतीच्छन्दस्कायाम् ऋचि उत्पन्नं साम जगत्, तेन **जगता** ब्रह्मा सृष्टिकाले **सिन्धुं** स्यन्दनशीलमुदकस्य स्यन्दकं वा आदित्यं **दिवि** द्युलोके

**अस्तभायत्** स्तम्भितवान् । 'जागती वा एष य एष तपति' इति श्रुतिः । **रथन्तरे** एतन्नामके साम्नि स्तम्भितं **सूर्यं पर्यपश्यत्** परिदृष्टवान् प्रजापतिः । तदाधारभूतायामृचि 'स्वर्दृशम् (ऋ० सं० ७.३२.२२) इति सूर्यप्रतिपादकशब्ददर्शनात् । 'असौ वाव स्वर्दृक्' (ऐ० ब्रा० ४.१०) इति हि श्रुतिः । अत एव तत्र सूर्यदर्शनं विधीयते । 'रथन्तरे प्रस्तूयमाने सम्मीलयेत् स्वर्दृशं प्रति वीक्षेत' (ता० ब्रा० ७ ७.१५) इति सामब्राह्मणेन । **गायत्रस्य** गायत्र्यामुत्पन्नस्य साम्नः **समिधः** समिन्धनाः **तिस्रः** विभक्तीः **आहुः** पादत्रयमाहुरित्यर्थः । अथवा—तिस्र ऋच आहुः । ततः हेतोः **मह्ना** बलेन **महित्वा** महत्त्वेन **प्र रिरिचे** प्ररिच्यते । अन्यानि सामानि पृथक् पृथक् निर्मितवान् । यद्वा—गायत्रशब्दश्छन्दोवाची । तस्य तिस्रो मूर्तीः आहुः क्रमेण—अष्टाक्षरैकादशाक्षरद्वादशाक्षरैः गायत्री-त्रिष्टुब्जगत्यात्मिकाः । यस्मादेवं ततस्तस्माद् गायत्रीछन्दसां कनिष्ठा सती महना बलेन महत्त्वेन प्र रिरिचे सर्वाणि छन्दांस्यतिक्रामति येनैव बलेन सोममाहृतवती तादृशेनैवं भवति ।। ३ ।।

उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभी॑द्धो घ॒र्मस्तदु॒ षु प्र वो॑चत् ॥ ४॥

(ऋ० १.१६४.२६)

उप॑ । ह्व॒ये । सु॒ऽदुघा॑म् । धे॒नुम् । ए॒ताम् । सु॒ऽहस्तः॑ ।
गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒ना॒म् । श्रेष्ठ॑म् । स॒वम् ।
स॒वि॒ता । सा॒वि॒ष॒त् । नः॒ । अ॒भिऽई॑द्धः । घ॒र्मः । तत् ।
ऊँ॒ इति॑ । सु । प्र । वो॒च॒त् ॥ ४ ॥

अहं होता **उप ह्वये** उपेत्याह्वयामि । किम् ? **एताम् धेनुम्** आगच्छन्तीं क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थाम् । पुनः कीदृशीम् ? **सुदुघां** सुष्ठु दोग्ध्रीम् । **उत** अपि च **एनाम्** उक्तलक्षणां गां **सुहस्तः** शोभनहस्तो दोहनकुशलः **गोधुक्** गोदोग्धा अध्वर्युः **दोहत्** दोग्धि, यस्मादेवं तस्मादुपह्वये इत्यर्थः । तदर्थं **सविता** सर्वस्यानुज्ञाता परमेश्वरः **नः** अस्मदीयं **श्रेष्ठं** प्रशस्यं **सवं** सोमयागं क्षीरं वा **साविषत्** अनुजानातु । कथमेवम् ? तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यद्यस्मात् **घर्मः** प्रवर्ग्यः । 'यद् ग्राँ

इत्यपतत्तद् घर्मस्य घर्मत्वम्' (तै० आ० ५।१.५) इति तैत्तिरीयकम् । तत्तादृशः **अभीद्धः** अभिदीप्तः । तदुशब्द एवकारार्थः । तस्मादेव कारणात् **सु प्र वोचं** सुष्ठु ब्रवीमि उपह्वये इति । यद्वा—एतां पुरतः दृश्यमानां धेनुं वृष्ट्या प्रीणयित्रीं मेघलक्षणां धेनुम् उपह्वये आह्वयामि वर्षदोहाय । किञ्च एनां धेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुक् गोदोग्धा आदित्यो वा वायुर्वा दोहत् दोग्धि । तदधीनत्वात् वर्षणस्य । किञ्च तदर्थं सवितः प्रेरकः परमेश्वरोऽस्मदर्थनस्मदुपभोगादृष्टमपेक्ष्य साविषत् अनुजानातु । प्रतिबन्धं मा करोत्वित्यर्थः । किमिति इदमुच्यते इति ? उच्यते । घर्मो ग्रीष्मः अवर्षणजनितः सस्यशोषः अभीद्धः प्रवृद्धः । तदु षु प्र वोचं तस्मादेव कारणात् ब्रवीमि । ब्रवीतेर्लुङि वच्यादेशे 'अस्यतिवक्ति०' इत्यादिना च्लेः अङ । छान्दसः अडभावः ॥ ४ ॥

**हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।**
**दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ ५ ॥**
(ऋ० १.१६४.२७)

**हिङ्ऽकृण्वती । वसुऽपत्नी । वसूनाम् । वत्सम् । इच्छन्ती । मनसा । अभि । आगात् । दुहाम् । अश्विऽभ्याम् । पयः । अघ्न्या । इयम् । सा । वर्धताम् । महते । सौभगाय ॥ ५ ॥**

यथा आहूता गौः **हिङ्कृण्वती** वत्सं प्रति हिङ्कारं कुर्वती **वसूनां वसुपत्नी** क्षीरदध्याज्यादिबहुधनानां सर्वदा पालयित्री । वृत्त्यवृत्तिभ्यां वसुनः पालयितृत्वं तस्यैवाधिक्यं च प्रतिपाद्यते । पुनः कीदृशी ? **मनसा वत्सम् इच्छन्ती** । ईदृशी सा **अभ्यागात्** अभ्यागमत् । **इयम्** आगता **अघ्न्या** गोनामैतत्, अहननीया गौः **अश्विभ्यां** ताभ्यामर्थाय **पयः** क्षीरं **दुहां** दुग्धाम् । **सा** तादृशी **महते सौभगाय** प्रवृद्धाय सौभाग्याय **वर्धतां** प्रवृद्धा भवतु । यद्वा—अस्मै सौभगाय क्षीरं वर्धयताम् । अत्रापि वृष्टिपरत्वेन यथायोगं योज्यम् । हिङ्कृण्वती वर्षणाय शब्दयन्ती वसूनां गो-सस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री वत्सं लोकं वत्सवत्पोषणीयं मनसा इच्छन्ती प्रीणयितुम् अभ्यागात् अभिगच्छति

मेघरूपा। सा च अघ्न्या अहन्तव्या, प्रस्तुत्या इत्यर्थः। पयः उदकमश्विभ्यां व्याप्ताभ्यां स्थावरजङ्गमाभ्यामर्थाय। यद्वा—अश्विनौ वाय्वादित्यौ। ताभ्यां सकाशात् दुहां दुग्धाम्। तौ हि वृष्टेर्मोचयितारौ। शिष्टमविशिष्टम् ॥ ५ ॥

**गौरमीमेदभि[1] वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ।**
**सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥ ६ ॥**

( ऋ० १.१६४.२८ )

**गौः। अमीमेत्। अभि। वत्सम्। मिषन्तम्। मूर्धानम्। हिङ्। अकृणोत्। मातवै। ऊँ इति। सृक्वाणम्। घर्मम्। अभि। वावशाना। मिमाति। मायुम्। पयते। पयःऽभिः ॥ ६ ॥**

गौः धेनुः **मिषन्तं** निमीलिताक्षं **वत्सम् अभि अमीमेत्** शब्दं करोति। मीमयतिः शब्दकर्मा। यद्वा—उक्तं वत्सम् अभि आत्मानं प्रक्षिपति। किञ्च तस्य वत्सस्य **मूर्धानं मातवै** मातुं निर्मातुं लेहनेन शोधयितुम्। उ शब्दोऽवधारणे। **हिङ्ङकृणोत्** हिङ्कारमकरोत्, करोति। किञ्च **सृक्वाणं** वत्सस्य शब्दवदनप्रान्तं फेनस्य स्रष्टारं **धर्मम्** क्षीरस्य क्षरणशीलं वत्सम् **अभि** अभिलक्ष्य **वावशाना** भृशं कामयमाना **मायुं** शब्दं **मिमाति** निर्माति, करोति। तादृशी सती **पयोभिः** प्रभूतैः क्षीरैः **पयते** प्यायते आप्यायनं करोति वत्सम्। अत्रापि मेघपरतया योजनीयम्। एवमाहूता मेघरूपा गौर्धेनुः मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं पुत्रम् अभि अनुसृत्य अमीमेत् गर्जनशब्दं वर्षणचिह्नरूपं करोति। मूर्धस्थानीयां भूमि मातवा उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङकृणोत् हिङ्काररूपं शब्दमकरोत्। प्रतिपादनभेदादपुनरुक्तिः। किञ्च सृक्वाणं फलस्य स्रष्टारं धर्मं दीप्तं पुत्रमभि वावशाना आभिमुख्येन कामयमाना पयोभिः उदकैः पयते प्यायते आप्यायनं करोति ॥ ६ ॥

**अयं स शिङ्क्ते येन गौरभीवृता**
**मिमाति मायुं ध्वसनावधि श्रिता।**

---

१. ऋग्वेदे 'अभि' स्थाने 'अनु' पाठः।

सा चित्तिभिर्नि हि चकार मर्त्यान्
विद्युद्भवन्ती प्रति वव्रिमौहत ॥ ७ ॥
( ऋ० १.१६४.२९ )

अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता । मिमाति । मायुम् । ध्वसनौ । अधि । श्रिता । सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यान् । विऽद्युत् । भवन्ती । प्रति । वव्रिम् । औहत ॥ ७ ॥

**सः अयं** वत्सः **शिङ्क्ते** अव्यक्तध्वनिं करोति । **येन** वत्सेन गौः माता **अभीवृता** आगत्य अभितो वेष्टिता भवति । किञ्च सा गौः **मायुं** शब्दं **मिमाति** निर्मिमाति । कुत्र स्थिता ? **ध्वसनौ अधि श्रिता** ध्वसनस्थाने गवां निवासाश्रयेऽधिष्ठिता । **सा** तादृशी **चित्तिभिः** ज्ञानैः तत्पूर्वकैः कर्मभिर्वा **मर्त्यान् नि चकार हि** नीचैः करोति । ज्ञानविशिष्टाः मनुष्याः यथा बालकस्य अदन-स्तनपानादिस्नेहं कुर्वन्ति ततोऽप्यतिशयमियं करोतीत्यर्थः । किञ्च **विद्युद् भवन्ती** बहुक्षीरतया विद्योतमाना **वव्रिं** स्वकीयं रूपम् । वव्रिरिति रूपनाम । रूपं **प्रति औहत** प्रकाशयति । यद्वा—वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिव शीघ्रदर्शना औहत । अयमेकोऽर्थः । अर्थान्तरञ्च—शाकपूणिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवता जानामीति अभिमानितवान् । दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किल, एनं व्यामोहयामीति मनसि कृत्वा सन्दिग्धोभयलिङ्गा देवता प्रादुरासीत् अथ तस्य पुरतः । स च तां न बुबुधे । बुभुत्सया च तां 'स्वरूपं प्रदर्शय' इति पप्रच्छ । सा च 'अयं स शिङ्क्ते' इत्येषा मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश (निरु० २.८)। कथमत्रोभयलिङ्गत्वम् ? वस्तुतः उभयलिङ्गत्वे कथं देवतैक्यमिति ? उच्यते । अत्रोभयलिङ्गत्वम् उभयथा सम्भवति स्त्रीपुंलिङ्गद्वयेन मध्यमोत्तमलिङ्गद्वयेन च । तत्कथम् ? 'अयं स येन' इति पुल्लिङ्गवाचिना शब्दत्रयेण मेघः प्रतीयते । 'अधि श्रिता स्म' इत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक् । अत उभयलिङ्गत्वम् । तथा विद्युद्भवन्तीत्यन्तं मध्यमलिङ्गं तत्र मेघ-स्तनितयोर्माध्यमिकयोः प्रतीतेः ।

तथा सति 'वव्रिमौहत' इत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्याः रसं प्रत्यादत्ते, इत्ययमर्थो विवक्षितः । स च आदित्यव्यापारः इत्युक्तमलिङ्गत्वम् । तर्हि वस्तुतः उभयलिङ्गत्वप्रतीतेः उभे अपि देवते 'यल्लिङ्गं सा देवता' (ऋ० अनु० १.१३९) इति न्यायात् । अतः कथम् एकदेवतासिद्धिः इति । 'अयं स येन' इत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानाम् अधिष्ठातिमकायाः एकत्वाश्रयणेन वा सर्वफलदात्रात्मना एकत्वाश्रयणेन वा दैवतैक्योपपत्तेः । अनेन मध्यमोत्तमभेदेन उभयलिङ्गत्वपक्षेऽपि दैवतैक्यमुक्तं भवति । अतः 'एकैव वा महानात्मा देवता' इत्युक्तत्वात् वस्तुतो देवतैक्यम्, अधिष्ठात्रधिष्ठानभेदेन भेदश्च न विरुद्ध्यते ।

अयं स शिङ्क्ते । इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता शिङ्क्ते अव्यक्तध्वनिं करोति । येन गौरभीवृता । गौरिति वाङ्नाम । माध्यमिका वाक् ययाऽभिवृता अभितो व्याप्ता, अधिष्ठितेत्यर्थः । सेयं शिङ्क्ते । अथवा–'अयं स शिङ्क्ते' इति नैव माध्यमिका वाक् निर्दिश्यते, अपि तु मेघः । तस्यां वाचि शिञ्जानायां स एव शिङ्क्ते इत्युपचर्यते 'मञ्चाः क्रोशन्ति' इतिवत् । अयं स मेघः शब्दं करोति येन माध्यमिका वाक् अभिव्याप्ता । शब्देन प्रकार एवोच्यते । मिमाति मायुं स्तनितलक्षणं शब्दं करोति । अथवा–अयम् । लुप्तोपमा । मिनोति स्वतेजः सर्वत्र प्रक्षिपतीति मायुः आदित्यः । तमिव अतिदीप्तं करोतीत्यर्थः । अथवा–सामर्थ्यात् आत्मानमादित्यसदृशं निर्मिमीते । कुत्र स्थिता ? ध्वसनावधि श्रिता । ध्वसने मेघेऽधिश्रिता । सा ईदृशी चित्तिभिः । कर्मनामैतत् । स्वकर्मभिः वृष्टिरूपैर्मर्त्यं मरणधर्माणं स्थावरजङ्गमरूपं कृत्स्नं जगत् नि हि चकार नीचैः करोति । मनुष्यान् प्रणतान् करोति । ओषध्यादिकं फलेनावनतं करोति । अथवा–चित्तिभिः द्योतनलक्षणैः कर्मभिः । विद्युति विद्योतमापद्यमाना प्रति वव्रिमौहत । वव्रिरिति रूपनाम । ऊहतिरत्र सामर्थ्यात् उपसंहारवाची । प्रत्युपसंहरति । उदकलक्षणं रूपं पुनरादत्ते । रश्मिद्वारा वृष्टमुदकं पुनर्घर्मकाले आदत्ते । एकस्यैव ज्योतिषः त्रेधाकरणाद् विद्युतः सूर्यरश्मिभावः उपपद्यते । 'तमू अकृण्वन् त्रेधा भुवे कम्' (ऋ० सं० १०.८८.१०) इति वक्ष्यमाणत्वात् । स्तनितस्य विद्युद्भावो मेघ-विद्युत्-स्तनितानामभेदाभिप्रायेण ।। ७ ।।

अनच्छये तुरगातु जीवमेजद् ध्रुवं मध्य आ पस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ८ ॥
(ऋ० १. १६४.३०)

अनत् । शये । तुरऽगातु । जीवम् । एजत् । ध्रुवम् । मध्ये । आ । पस्त्यानाम् । जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ ८ ॥

**अनत्** प्राणनं कुर्वत् **जीवं** जीवनवत् **तुरगातु** स्वव्यापाराय तूर्णगमनं सत् **एजत्** तत् **शये** शेते, वर्तते । पश्चात् प्राणापगमनानन्तरम् उक्तविलक्षणं सत् **ध्रुवम्** अविचलं सत् **पस्त्यानां** गृहाणां **मध्ये आ** शेते च स्थाणुवत् तिष्ठति । आकारः पूरणो वा । अथ जीवस्य वैलक्षण्यमाह—**मृतस्य** शरीरस्य सम्बन्धी **जीवः मर्त्येन** मरणधर्मकेण शरीरेण **सयोनिः** पूर्वं समानोत्पत्तिस्थानः । यद्यपि जीवस्य न जन्मास्ति ; तथापि वपुषस्तत्सद्भावात् तत्सम्बन्धेनोपचर्यते । तदेवाह—**अमर्त्यः** अमरणस्वभावः । 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' (छा० उ० ६.११.३) इति श्रुतेः । उक्तस्वभावो जीवः **स्वधाभिः चरति** पुत्रकृतैः स्वधाकारपूर्वकदत्तैः अन्नैश्चरति वर्तते इत्यर्थः ॥ ८ ॥

विधुं दद्राणं सलिलस्य पृष्ठे[1] युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ९ ॥
(ऋ० १०.५५.५)

विऽधुम् । दद्राणम् । सलिलस्य । पृष्ठे । युवानम् । सन्तम् । पलितः । जगार । देवस्य । पश्य । काव्यम् । महिऽत्वा । अद्य । ममार । सः । ह्यः । सम् । आन ॥ ९ ॥

**सलिलस्य** अन्तरिक्षसागरस्य **पृष्ठे** उपरि **दद्राणं** द्रुतगत्या साभिमानं गच्छन्तं **विधुं** चन्द्रमसं **युवानं सन्तं** पौर्णमास्यां षोडशकलाभिः परिपूर्णतारुण्योपेतं सन्तमपि **पलितः** श्वेतकेशः सूर्यः । सूर्यरश्मिषु नितरां श्वैत्योज्ज्वलासु श्वेतकेशत्वं रूप्यते, तेन च सादृश्येन सवितरि

१. ऋग्वेदे 'सलिलस्य पृष्ठे' इत्यस्य स्थाने 'समने बहूनाम्' इति पाठः ।

वृद्धत्वमध्यस्यते। तादृशः सूर्यः क्रमशः तदीयाम् एकैकां कलां पायं-पायम् अमायां जगार अशेषतस्तं निगरति। अहो पूर्णयूनो वृद्धेनायं परिभवः। मन्त्रकृदाह—**देवस्य** अघटितघटनापटीयसः क्रान्तदर्शिनः कवेः परमेशितुः **काव्यं** चमत्कृतिजनकं कविकर्म लीलारूपं **पश्य** विचारय। **महित्वा** तदीयासाधारणमहिम्ना, यत्तदोर्नित्यसम्बन्धात् यः इत्यध्याहारः। यः **ह्यः** गतदिने **समान** सम्पूर्वकचेष्टार्थकस्य अनतेर्लिटि रूपम्। सम्यक् चेष्टते निर्द्वन्द्वं साभिमानं विहरति, जीवति। **सः** स एव **अद्य ममार** म्रियते, सर्वथा विलुम्पति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तिरन्यासः। पर्यन्ते विभावादिसंवलितविस्मय-भावस्य अद्भुताख्यरसध्वनिश्च। अपि वा—'यः ह्यः ममार स अद्य समान' इति दूरान्वये कृते पुनर्जन्माख्य-वस्तुध्वनिरपि व्यज्यते॥ ९॥

**य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।**
**स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिरा[1] विवेश॥ १०॥**

(ऋ० १.१६४.३२)

**यः। ईम्। चकार। न। सः। अस्य। वेद। यः।**
**ईम्। ददर्श। हिरुक्। इत्। नु। तस्मात्। सः।**
**मातुः। योना। परिऽवीतः। अन्तः। बहुऽप्रजाः।**
**निःऽऋतिः। आ। विवेश॥ १०॥**

अथ गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहाराय आत्मा ज्ञातव्यः इत्यर्थात् प्रतिपाद्यते—**यः** पुमान् पुत्रार्थी **ईम्** एनं गर्भं **चकार** करोति विक्षिपति वा, तत्कारणभूतस्य विक्षेपद्वारेण **न सः** पुमान् **अस्य** तत्त्वं **वेद**। कर्मणि षष्ठी वा। एनं गर्भं न जानाति। कथंभूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानतीत्यर्थः। **यः** च मातु-रुदरस्थं **ददर्श** उदरवृद्ध्यन्यथानुपपत्त्या अनुमानेन वा दर्शयति—**तस्मात्** द्रष्टुः सकाशात् सः **हिरुगिन्नु**। हिरुगिति अन्तर्हितनाम। इच्छब्दः एवकारार्थः। नु निश्चये। अत्यन्तमन्तर्हित एव खलु। यद्वा—यः संसारावस्थायाम् ईम् एनं कृषि-वाणिज्यवेदाध्ययनादिकं चकार सोऽस्य एतन्न वेद लोकान्तरे जन्मान्तरे वा। तथा यः ईमेनं ददर्श गिरि-नदी-

१. ऋग्वेदे 'निर्ऋतिमा' इति पाठः।

समुद्रबन्ध्वादिकं ददर्श जीवनसमये तस्मात् दृष्टात् हिरुगन्नु पृथगेव। अत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वा अनुभवतीत्यर्थः। सः तादृशः मातुः जनन्याः योना योनौ अन्तः परिवीतः उल्व-जरायुभ्यां परितो वेष्टितः सन् **बहुप्रजाः** बहुजन्मभाक्। अथवा— उत्पन्नः सन् स्वयमपि अपत्योत्पादनेन बहुप्रजाः। एवं गर्भदुःखमनुभवन् निर्ऋत्यभिधानं प्रदुःखमनुभवति यावत् स्वरूपभूतात्मज्ञानम्। अतस्तत्परिहाराय आत्मा ज्ञातव्य इत्युक्तं भवति। एवमात्मविदामभिप्रेतोऽर्थः।

नैरुक्तिकानां तु मते य ईं चकार मध्यस्थानो वायुर्मेघो वा एतद् वृष्ट्यादिकं करोति सोऽस्य। तत्त्वमिति शेषः। अथवा एतत्कर्म न जानाति, तयोरचेतनत्वादिति भावः। यस्तु ईम् एतद् ददर्श पश्यति तस्मादपि हिरुक् अन्तर्हितः। प्राणिकर्मवशेन काले वर्षिता परमेश्वरः आदित्यात्मनि गूढ इत्यर्थः। य ईं हिरुक् अन्तर्हितम् ईम् एतद् ददर्श पश्यति स वृष्टिलक्षणः पुत्रो मातुर्निर्मातुरन्तरिक्षस्य योनौ योनिवदुत्पत्त्याधारभूतेऽन्तरिक्षे उभयोरप्यन्तरिक्षनामत्वात् सामान्य-विशेषभावो द्रष्टव्यः। अन्तरिक्षैकदेशे योन्यामन्तर्मध्ये बहुप्रजाः बहुप्रजातान्नो बहुप्राण्युपकारी। अथवा— जनिरत्र अन्तर्भावितण्यर्थः। बहूनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनिता सन्। निर्ऋतिः=निर्ऋतिम् निरमणसाधनां भूमिम् **आ विवेश** प्रविशति प्राप्नोतीत्यर्थः॥ १०॥

**अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।**
**स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः॥ ११॥**

(ऋ० १.१६४.३१)

अपश्यम्। गोपाम्। अनिऽपद्यमानम्। आ। च। परा। च। पथिऽभिः। चरन्तम्। सः। सध्रीचीः। सः। विषूचीः। वसानः। आ। वरीवर्ति। भुवनेषु। अन्तः॥ ११॥

अहं **गोपां** सर्वस्य लोकस्य वृष्टि-प्रकाशादिना गोपायितारम् **अनिपद्यमानं** कदाचिदपि अविषण्णं तथा **पथिभिः** विचित्रमार्गैः अन्तरिक्षरूपैः **आ चरन्तम् च परा चरन्तम् च** उदयप्रभृति आमध्याह्नमागच्छन्तं मध्याह्नप्रभृति आसायं पराङ्मुखं गच्छन्तम् एवं

महानुभावमादित्यम् अपश्यं याथात्म्येन पश्येयम् । किञ्च सः आदित्यः सध्रीचीः सहाञ्चन्तीः विषूचीः विश्वगञ्चन्तीः रात्रावपि चन्द्र-भौमाऽऽदित्यानां प्रकाशयित्रीः त्विषः वसानः आच्छादयन् भुवनेषु भुवनैकदेशेषु लङ्कादिप्रदेशेषु अन्तः मध्ये आ वरीवर्ति उदयास्तमयं कुर्वन् पुनः-पुनरावर्तते । तमपश्यमित्यर्थः । 'एष वै गोपा एष हीदं सर्वं गोपायति' इत्याद्यस्मद्ब्राह्मणम् । 'अपश्यं गोपामित्याह असौ वा आदित्यो गोपा स हीमाः प्रजाः गोपायति' (तै० आ० ५.६.४) इत्यादि तैत्तिरीयकं च द्रष्टव्यम् ॥ ११ ॥

**द्यौर्नः[1] पिता जनिता नाभिरत्र बन्धुर्नो[1] माता पृथिवी महीयम् ।**
**उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ १२ ॥**

( ऋ० १.१६४.३३ )

**द्यौः । नः । पिता । जनिता । नाभिः । अत्र । बन्धुः । नः । माता । पृथिवी । मही । इयम् । उत्तानयोः । चम्वोः । योनिः । अन्तः । अत्र । पिता । दुहितुः । गर्भम् । आ । अधात् ॥ १२ ॥**

दीर्घतमा ब्रवीति—नः अस्माकं द्यौः द्युलोकः पिता पालकः । न केवलं पालकत्वमात्रम्, अपि तु जनिता जनयितोत्पादयिता । तत्रोपपत्तिमाह—नाभिः नाभिरत्र नाभिभूतो भौमो रसोऽत्र, तिष्ठतीति शेषः । ततश्चान्नं जायते, अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारंपर्येण जननसम्बन्धिनो हेतोः रसस्यात्र सद्भावात् । अनेनैवाभिप्रायेण जनितेत्युच्यते । अत एव बन्धुः बन्धिका । तथा इयं मही महती पृथिवी अस्माकं माता, मातृस्थानीया स्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः । किञ्च उत्तानयोः ऊर्ध्वतानयोः चम्वोः सर्वस्य अहन्योः भोगसाधनयोर्द्यावा-पृथिव्योः अन्तः मध्ये योनिः सर्वभूतनिर्माणाश्रयम्, अन्तरिक्षं वर्तते

१. ऋग्वेदे 'द्यौर्नः' स्थाने 'द्यौर्मे' तथा बन्धुर्नो' स्थाने 'बन्धुर्मे' पाठः' इति ।
२. ऋग्वेदे तु ऋगियमित्थम्—
'पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥'

इति शेषः । अत्र अस्मिन्नन्तरिक्षे **पिता** द्युलोकः । अधिष्ठात्रधिष्ठानयोः अभेदेन आदित्यो द्यौरुच्यते । स स्वरश्मिभिः । अथवा-इन्द्रः पर्जन्यो वा । **दुहितुः** दूरे निहिताया भूम्याः **गर्भं** सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणम् **आधात्** सर्वतः करोति ॥ १२ ॥

**पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि वृष्णो अश्वस्य रेतः । पृच्छामि विश्वस्य भुवनस्य नाभिं पृच्छामि वाचः परमं व्योम ॥ १३ ॥**[1]

( ऋ० १.१६४.३४ )

**पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः । पृच्छामि । वृष्णः । अश्वस्य । रेतः । पृच्छामि । विश्वस्य । भुवनस्य । नाभिम् । पृच्छामि । वाचः । परमम् । विऽओम ॥ १३ ॥**

हे यजमान **त्वा** त्वां **पृच्छामि** प्रश्नं करोमि । किम् ? **पृथिव्याः परमन्तम्** उत्कृष्टां काष्ठाम् । यत्र सर्वा पृथिवी समाप्यते तत्पृच्छामि । तथा त्वामन्यत् **पृच्छामि** । किं तदिति ? उच्यते—**वृष्णः** वर्षकस्य अश्वस्य व्याप्तस्यादित्यस्य । 'असौ वा आदित्यो वृषाश्च' (तै० आ० ५.३.५) इति तैत्तिरीयकम् । तस्य **रेतः** रेतोवत्कारणं तत्किमिति पृच्छामि । किञ्च यत्र **विश्वस्य** सर्वस्य **भुवनस्य** भूतजातस्य **नाभि** संनाहे बन्धनम् । यत्र सर्वं संनद्धं भवति तं पृच्छामि । तथा **वाचः** सर्वस्य वाग्जातस्य **परमं** निरतिशयं **व्योम** स्थानं सर्वस्य वचसः कारणम् । एतत् प्रश्नचतुष्टयं पृच्छामि ॥ १३ ॥

**इयं वेदिः परो अन्तः पृथिव्या अयं सोमो वृष्णो अश्वस्य रेतः । अयं यज्ञो विश्वस्य भुवनस्य नाभिर्ब्रह्माऽयं वाचः परमं व्योम ॥ १४ ॥**[1]

( ऋ० १.१६४.३५ )

१. ऋग्वेदे ऋगियमित्थम्—

'इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥'

इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । सोमः । वृष्णः । अश्वस्य । रेतः । अयम् । यज्ञः । विश्वस्य । भुवनस्य । नाभिः । ब्रह्मा । अयम् । वाचः । परमम् । विऽओम ॥ १४ ॥

**पृथिव्याः** प्रथनवत्याः भूम्याः **परः अन्तः** परमन्तं पर्यवसानम् **इयं वेदिः** नहि वेद्यतिरिक्ता भूमिरस्ति । 'एतावती वै पृथिवी यावती वेदिः' ( तै० सं० २.६.४ ) इति श्रुतेः । तथा **अयं सोमः** रसात्मकः **वृष्णः** वर्षकस्यादित्यस्य **रेतः** । अग्नौ हुतः सोमरसः आदित्यं प्राप्य वृष्टयादिफलं जनयति । **अयं यज्ञः विश्वस्य** सर्वस्य **भुवनस्य** भूतजातस्य **नाभिः** संनहनम् । तत्रैव वृष्टयादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात् । **अयं ब्रह्मा** प्रजापतिरेव **वाचः** मन्त्रादिरूपायाः **परमं व्योम** उत्कृष्टं रक्षकं स्थानम् । तत्रैवोत्पत्तेस्तत्रैव पर्यवसानाच्च ॥ १४ ॥

**न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि ।**
**यदा मागन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥१५॥**

(ऋ० १. १६४.३७)

न । वि । जानामि । यत्ऽइव । इदम् । अस्मि । निण्यः । सम्ऽनद्धः । मनसा । चरामि । यदा । मा । आऽअगन् । प्रथमऽजाः । ऋतस्य । आत् । इत् । वाचः । अश्नुवे । भागम् । अस्याः ॥ १५ ॥

अहं **यदिवेदं** यदपीदं विश्वम् **अस्मि** कृत्स्नः प्रपञ्चोऽप्यहमेवास्मि । नामरूपांशम् अपरमार्थं त्यक्त्वा सर्वत्र अनुगतः अस्ति-भाति-प्रियमिति योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मीति । **न वि जानामि** विविच्य नाज्ञासिषम् । परं शास्त्रजनितमिदमहमस्मीति ज्ञानं जातम् । अविवेक्यहमित्यर्थः । कार्यकारणयोरभेदात् कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति । 'इदं सर्वं यदयमात्मा,' 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वम्', 'स ईक्षत बहु स्यां प्रजायेय' इत्यादिश्रुतिभ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् 'तदनन्यत्व-

मारम्भणशब्दादिभ्यः' (ब्र० सू० २.१.१४) इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम् । यद्वा–इवशब्दः उपमार्थः । यदिव यदापरोक्ष्यज्ञानं सर्वैकात्म्यरूपमानुभविकमस्ति तदिव तद्वदेवाहमस्ति । इदं सर्वमहमस्मीति ज्ञानं मे जातम् । अपि तु एतद्दार्ष्टान्तिकभूतम् । आनुभविकं सार्वात्म्यं यदस्ति तन्न वि जानामि न प्राप्तोऽस्मि । शास्त्रजनितं सार्वात्म्यं जातम्, न तु आनुभविकमित्यर्थः । तत्र कारणमाह—यतोऽहं **निण्यः** । अन्तर्हितनामैतत् । अन्तर्हितो मूढचित्तः, चित्तप्रत्यक्प्रवणताभावेन परिच्छिन्न इत्यर्थः । तत्रोपपत्तिमाह— **संनद्धः** अविद्याकामकर्मभिः सम्यग्बद्धो वेष्टितः । अत एव **मनसा** युक्तो भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः **चरामि** संचरामि संसारे । अथवा—मनसा संनद्धश्चरामि । इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि । न सार्वात्म्यं जानामीति परिदेवते । यास्कोऽपि इमं परिदेवनार्थत्वेनोदाजहार—'अथापि परिदेवना, कस्माच्चिद्भावात् न वि जानामि यदिवेदमस्मि' (निरु० ७.३) इति । बहिर्मुखचेतसः स्वरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते—'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्' (कठो० उ० २.४.१) इति । तर्हि कदैतद् भवतीत्याह—**यदा मागन्** आगमिष्यति तदा । किं तदिति ? उच्यते—**ऋतस्य** परमार्थस्य परस्य ब्रह्मणः **प्रथमजाः** प्रथमोन्मेषः प्रथमोत्पन्नश्चित्तप्रत्यक्प्रवणजनितः अनुभवः । स यदा **मा** मां प्राप्नोति **आदित्** अनन्तरमेव अव्यवधानेन **अस्याः वाचः** ऐकात्मप्रतिपादिकाया उपनिषद्वाचो यदिवेदमस्मीत्युक्ताया वा **भागं** भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्मपदम् **अश्नुवे** प्राप्नोमि । चित्तस्य बहिर्मुखतां परित्यज्य अन्तर्मुखतैव अदुःसंपादा । सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति, पश्चाद्विलम्बाभावात् । यथा गिरिशिखरात् पतन् पाषाणोऽविलम्बेन पतति, तद्वत् । चित्तप्रत्यङ्मुखत्वस्य दुःशकत्वमपि तत्रैव श्रूयते—'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् (क० उ० २.४.१) इति ॥ १५ ॥

**अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।**
**ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम् ॥ १६ ॥**

(ऋ० १.१६४. ३८)

**अपा॑ङ् । प्राङ् । ए॒ति॒ । स्व॒धया॑ । गृ॒भी॒तः । अम॑र्त्यः । मर्त्ये॑न । सऽयो॑निः । ता । शश्व॑न्ता । वि॒षू॒चीना॑ । वि॒ऽयन्ता॑ । नि । अ॒न्यम् । चि॒क्युः । न । नि । चि॒क्युः अ॒न्यम् ॥ १६ ॥**

**अमर्त्यः** अमरणधर्मा अयमात्मा **मर्त्येन** मरणधर्मणा भूतात्मना देहेन **सयोनिः** समानस्थानः । यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः । यद्वा—समानोत्पत्तिः । सहवासेन स्वस्मिन्नपि उत्पत्ति-रुपचर्यते । एवंभूतः सन् **स्वधया** अन्नोपलक्षिततद्भोगेन **गृभीतः** । यद्वा—स्वधाशब्देन अन्नमयं शरीरं लक्ष्यते । तेन गृहीतः सन् **अपाङ् एति** अशुक्लं कर्म कृत्वा अधो गच्छति, **प्राङ् एति** ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति । परमात्मैव सूक्ष्मशरीरोपाधिकः सन् नानाविधकर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण सम्बद्धो लोकान्तरेषु सञ्चरति, स्थूल-सूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति । तथा च श्रूयते—'गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोप-भोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः' (श्वे० उ० ५.७) इति । इदानीमुभयप्राधान्येनाह—**ता** तौ भूतात्मकर्त्रा-त्मानौ **शश्वन्ता** अविभागेन सर्वदा वर्तमानौ । यद्वा—सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते । स्थूलशरीरपक्षेऽपि सात्त्विकजातेः तत्कार-णानां भूतसूक्ष्माणां सद्भावात् तत्र शरीरसम्बन्ध उपपद्यते । **विषूचीना** इह लोके सर्वत्र गमनौ **वियन्ता** तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते । तत्र नराः **अन्यं** भूतात्मानं **नि चिक्युः** नितरां विशेषेण पश्यन्ति जानन्ति । **अन्यम्** अपरं देहवच्छायातिरिक्तं **न निचिक्युः** न जानन्ति । केचन पामरा देहव्यतिरिक्तं न जानन्ति । केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्ति इत्यनुमिमते । न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति । अतो दुर्लभमात्मज्ञानमित्यर्थः ॥ १६ ॥

**स॒प्तार्ध॑ग॒र्भा भुव॑नस्य॒ रेतो॒ विष्णो॑स्तिष्ठन्ति प्र॒दिशा॒ विध॑र्मणि । ते धी॒तिभि॒र्मन॑सा॒ ते वि॑प॒श्चितः॑ परि॒भुवः॒ परि॑ भवन्ति वि॒श्वतः॑ ॥ १७ ॥**

( ऋ० १.१६४.३६ )

सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठन्ति । प्रऽदिशा । विऽधर्मणि । ते । धीतिऽभिः । मनसा । ते । विपःऽचितः । परिऽभुवः । परि । भवन्ति । विश्वतः ॥ १७ ॥

**सप्त** सर्पणस्वभावाः, सप्तसंख्या वा रश्मयः **अर्धगर्भाः** संवत्सरस्यार्धे गर्भं गर्भस्नानीयमुदकं धारयमाणाः । यद्वा—ब्रह्माण्डस्यार्धे मध्येऽन्तरिक्षे गर्भवद्वर्तमानाः । **भुवनस्य** लोकस्य **रेतः** सारं वृष्टिप्रदत्वेन रेतोभूताः तादृश्यः रश्मयः **विष्णोः** व्यापकस्यादित्यस्य **विधर्मणि** जगद्धारण-व्यापारे **प्रदिशा** प्रदेशेन **तिष्ठन्ति** वर्तन्ते । किञ्च **ते धीतिभिः** प्रज्ञाभिः **मनसा** 'जगदुपकारः कर्तव्यः' इति बुद्ध्या च **विश्वतः** सर्वतः । द्वितीयार्थे तसिः । विश्वं **परि भवन्ति** परितो भावयन्ति, कृत्स्नं जगद् व्याप्नुवन्ती-त्यर्थः । यस्मादेवं तस्मात् **ते** ते एव **विपश्चितः** बुद्धियुक्ताः **परिभुवः** सर्वत्र व्याप्ताश्च । यद्वा—सप्तार्धगर्भाः । सप्त महदहङ्कारौ पञ्च तन्मात्राणीति मिलित्वा सप्तसंख्यानि तत्त्वानि । अर्धगर्भा अविकृति-रूपाः । विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेरुदासीनस्यात्मनश्च उत्पन्नत्वादर्धांशेन प्रपञ्चाकारेण परिणामादर्धगर्भाः । पुरुषांशस्य अविक्रियत्वादित्यभिप्रायः । अत एव तेषां प्रकृति-विकृतित्वम् । यस्मादेवं तस्माद्भुवनस्य रेतः कारणम् । कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठन्ति । इतरत्समानम् ॥ १७ ॥

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्ते
अमी[1] समासते ॥ १८ ॥

( ऋ० १.१६४.३९)

ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः । यः । तत् । न । वेद । किम् । ऋचा । करिष्यति । ये । इत् । तत् । विदुः । ते । अमी इति । सम् । आसते ॥ १८ ॥

१. ऋग्वेदे 'त इमे' पाठः ।

षोडशे मन्त्रे देहात्मजीवात्मानौ उक्तौ। तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति, तदत्रोच्यते—**ऋचः अक्षरे**। अत्र ऋक्शब्देन ऋक्प्रधानभूताः साङ्गा अपरविद्यात्मकाश्चत्वारो वेदा उच्यन्ते। ऋगादीनामपरविद्यात्वं मुण्डके श्रूयते—'द्वे विद्ये वेदितव्ये' इति प्रतिज्ञाय 'तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदः' (मु० उ० १.१.५) इत्यादिना। तस्याः सम्बन्धिनि अक्षरे अदृश्यादिगुणके क्षरणरहितेऽनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि। अक्षरशब्दस्य ब्रह्मवाचकत्वम् 'एतद्वै तदक्षरस्य प्रशासने गार्गि' (बृ० उ० ३.८), 'यया तदक्षरमधिगम्यते' (मु० उ० १.१.५), 'येनाक्षरं पुरुषं वेद सत्यम्' (मु० उ० १.२.१३) इत्यादिश्रुतिषु **प्रसिद्धम्**। ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। सर्वैर्वेदैः खलु ब्रह्म अधिगम्यते—'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ० उ० ३.९.२६) इत्यादिश्रुतेः। ननु उपनिषद्भागानां तथास्तु। इतरेषां तु कथं ब्रह्मविषयत्वमिति? उच्यते—यद्यपि इतरभागानां यागादिविषयत्वम्, तथापि बुद्धिशुद्ध्युत्पादनद्वारा वेदनसाधनत्वेन ब्रह्मविषयत्वं भविष्यति, 'वेदानुवचनेन ब्राह्मणा विविदिशन्ति' (बृ० उ० ४.४.२२) इत्यादिश्रुतेः। तदेव विशेष्यते—**परमे** उत्कृष्टे निरतिशये **व्योमन्** व्योमनि व्योमसदृशे। अलेपत्व-नीरूपत्व-व्यापित्वादिसादृश्येन व्योमेत्युक्तम्। यद्वा—विशेषेण सर्वस्य रक्षके। निरधिष्ठानं न कस्यचिदस्ति स्वाध्यास्तस्य सर्वस्याधिष्ठानत्वेन रक्षकत्वात्। तादृशे तत्त्वे सर्वम् अध्यस्तमित्यर्थः। पुनस्तदेव विशेष्यते—**यस्मिन्** परमात्मनि **विश्वे** सर्वे **देवाः अधि निषेदुः** निषीदन्ति, आश्रित्य तिष्ठन्ति तस्मिन्। यद्वा—उक्तलक्षणे वस्तुनि ऋगुपलक्षिताः सर्वे साङ्गाः वेदाः पर्यवसिता इत्यर्थः। **यः** यो **मर्त्यः तत्** तादृशं देवादीनां स्वरूपलाभास्पदं कृत्स्नवेदतात्पर्यप्रतिपाद्यं यद्वस्तु **न वेद** न जानाति स मर्त्यः **ऋचा** पूर्वोक्तेन ऋगादिशब्दजालेन **किं करिष्यति**। वेदनसाधनेन वेदेन वेद्यम् अविदित्वा किं साधयतीत्यर्थः। प्रयोजनाभावात् सर्वस्यापि वेदस्य नैष्फल्यात् इति भावः। अथवा—योऽक्षरमविदित्वा कर्मणां कर्ता भवति, यागादीननुतिष्ठति तेन किञ्चिदपि कर्म कृतं न भवतीत्यर्थः। **य इत्** ये एव **तत्** तत्त्वं **विदुः** जानन्ति **ते अमी समासते** ते एव इमे ज्ञातारः समासते सम्यक् तिष्ठन्ति। अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम्। यद्वा—ये विदुः इत् ये जानन्त्येव नानुतिष्ठन्ति। इच्छब्दोऽवधारणे। ते अमी ते

एव समासते । गवामयनादि-सहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति । सहार्थे संशब्दः । सत्रादधिकानां यागानामभावात् तेषामपि फलम् एतज्ज्ञानेनैव प्राप्तं भवतीत्यर्थः । कर्तॄणां बहुत्वात् बहुवचननिर्देशः ।

अन्ये तु अन्यथा वर्णयन्ति—ऋचः, ऋक् अर्चनीयमादित्यमण्डलम् ऋगादिमयं वा । 'ऋग्भिः पूर्वाह्णे दिवि देवः', 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचः' इत्यादिश्रुतेः । तस्य सम्बन्धिनि अक्षरे 'परमे व्योमन्' इत्युक्तलक्षणे ब्रह्मणि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादिश्रुत्युक्तस्वरूपे यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुः वर्तन्ते । य एतन्न वेद सः केवलया ऋचा किं करिष्यति । ये जानन्ति भावयन्ति त एव विद्वांसः समासते । भूम्यां सुखेन रोगादिरहिता भोगिनः सन्तश्चिरकालं जीवन्ति ।

अपरे प्रकारान्तरेण प्रतिपादयन्ति—ऋचोऽक्षरे ऋगुपलक्षितसर्ववेदसम्बन्धिनि अक्षरे प्रणवरूपे ओङ्कारे अविनाशिनि सर्ववेदेषु व्याप्ते वा । प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते—'तान् वेदानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त अकार उकारो मकार इति । तानेकधा समभरत्, तदेतदोमिति' (ऐ० ब्रा० ५.३२) इति । परमे निरतिशये । नहि प्रणवादधिकं किञ्चिन्मन्त्रजातमस्ति, त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात् । 'यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव' (मा० उ० १), 'ओमिति ब्रह्म' (तै० आ० ७.८) इत्यादिश्रुतेः । वेदानां प्रणवस्य स्थानप्रतिनिधिभावः सम्बन्धः 'य ऋचोऽधीते' इत्याद्युपक्रम्य 'यः प्रणवमधीते स सर्वमधीते, ओमिति प्रतिपद्यत । एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरम्' (तै० आ० २.११.४) इत्यादिश्रुतेः । यस्मिन् विश्वे सर्वे देवाः अधि निषेदुः प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवतानां निवासात् सर्वदेवनिवासत्वम् । ब्रह्माधिष्ठानाद्वा, ब्रह्मणि सर्वदेवानां निवासात् । शिष्टमविशिष्टम् । अयं मन्त्रो निरुक्ते (निरु० १३.१०) व्याख्यातः ।

अपरे तु अपरथा वर्णयन्ति—ऋचः, ऋक् अर्चनीयो जीवः । तस्य सम्बन्धिनि अक्षरेऽविनाशे व्याप्ते वा परमात्मनीत्यर्थः । अत एव जीवापेक्षया परमे उत्कृष्टे निरुपाधिके । व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रक्षके, व्योमसदृशे वा । यस्मिन् परमात्मनि देवा गमनवन्तो व्यवहरन्तः वा इन्द्रियसंज्ञका विश्वे सर्वेऽपि अधि निषेदुः निषीदन्ति आश्रित्य

वर्तन्ते। यस्तन्न वेद न जानाति उपाध्यंशपरित्यागे तदेव स्वरूपमिति न पश्यति स्थूलः जनः, किमृचा करिष्यति। केवलेन जीवेन जीवभावेन किं फलं प्राप्स्यति। जनन-मरणादिक्लेशस्य अत्यागादिति भावः। ये तत्तत्त्वं विदुस्त इत्यादि सिद्धम्॥ १८॥

ऋचः पदं मात्रया कल्पयन्तोऽर्धर्चेन
चाक्लृपुर्विश्वमेजत्।
त्रिपाद् ब्रह्म पुरुरूपं वि तस्थे तेन
जीवन्ति प्रदिशश्चतस्रः॥ १९॥*

ऋचः। पदम्। मात्रया। कल्पयन्तः। अर्धऽऋचेन। च। अक्लृपुः। विश्वम्। एजत्। त्रिऽपात्। ब्रह्म। पुरुऽरूपम्। वि। तस्थे। तेन। जीवन्ति। प्रऽदिशः। चतस्रः॥ १९॥

श्लेषालङ्कारेण उपमानमुपमेयञ्च निर्दिशति यथा ऋचः मन्त्रस्य पदम् पादं मात्रया मात्रागणनया अक्षरगणनया वा विद्वासः कल्पयन्ति तथा **ऋचः** प्रशंसनीयस्य स्तुत्यस्य वा ब्रह्मणः **पदं** स्वरूपं **मात्रया,** मिमिते जगत् इति मात्रा। माङ् धातोः तृचि ङीप्। जगज्जननी माया तया **कल्पयन्तः** आहुः, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः वाङ्मनसातीतस्य ब्रह्मणः त्रिपाच्चतुष्पादादिस्वरूपकल्पना मायैव इति निष्कर्षः। नैतावदेव, किं तर्हि? **अर्धर्चेन** 'एतावानस्य महिमातो ज्यायाँश्च पूरुषः' (ऋ० १०.९०.३) इति पूर्वार्धेन ऋचोऽर्धेन 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति अर्धर्चेन उत्तरार्धात्मकेन वा **एजत् विश्वं** गतिशीलं विश्वम्, अथवा विश्वम् एजत् एजयत् स्वसत्तास्फूर्तिप्रदानेन चालयत्। त्रिपादस्थानीयं **ब्रह्म च** अक्लृपुः विचारितवन्तः, कल्पितवन्तः। कीदृशं ब्रह्म? **पुरुरूपं** विविधरूपसम्पन्नस्थावरजङ्गमात्मकं सत् **वितस्थे** विशिष्य निर्विकारतया स्थितमास्ते। **तेन** ब्रह्मणा **चतस्रः प्रदिशः** प्राच्यादिचतस्रो दिशः, लक्षणया तत्र स्थिताः **प्राणिनः जीवन्ति** प्राणान् धारयन्ति। आह च सायणः 'एतावानस्य

* अथर्ववेदसंहितायां इयं स्वर्कीया ऋक्।

महिमा०' ( ऋ० १०.९.३) इति मन्त्रं व्याचक्षाणः—"अतीतानागत-वर्तमानरूपं जगत् यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः । तु (तत्) तस्य वास्तवं स्वरूपम् । वास्तवस्तु पुरुषः अतः महिम्नोऽपि ज्यायान् अतिशयेनाधिकः । एतच्चोभयं स्पष्टीक्रियते—अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः चतुर्थोंऽशः । अस्य पुरुषस्य अवशिष्टं त्रिपात्स्वरूपम् अमृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे, व्यवतिष्ठते इति शेषः । यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० आ० ८.१, तै० उ० २.१) इति आम्नातस्य परब्रह्मण इयत्ताभावात् पादचतुष्टयं निरूपयितुमशक्यम्; तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाऽल्पमिति विवक्षितत्वात् पादत्वोपन्यासः इति ।"

अपि वा—ऋचः प्रशंसनीयस्य, यद्वा 'गिरामस्म्येकमक्षरम्' (गीता १०.२५) इति गीतावचनात् ऋगात्मकवाग्लक्षणस्य ओङ्कारस्य मात्रया मात्राभिः अकार-उकार-मकार-लक्षणाभिः पदं पदनीयं ज्ञातव्यं कल्पयन्त आहुः विद्वांसः । माण्डूक्योपनिषदि तथैवाम्नातम्—'जागरित-प्रपञ्चोपाधिकः विश्वाभिन्नवैश्वानरात्मा विराट् प्रथमा मात्रा अकार-लक्षणा । स्वप्नप्रपञ्चोपाधिकः लिङ्गशरीराभिमानी तैजसाभिन्नो हिरण्यगर्भापरनामकः सूत्रात्मा द्वितीया मात्रा उकारलक्षणा । कारण-शरीराभिमानी सुषुप्त्यवस्थोपाधिकः प्राज्ञाभिन्नः ईश्वरः तृतीया मात्रा मकारलक्षणा । इत्थम् ओङ्कारस्वरूपं द्विविधम्—१. समात्रम्, २. अमात्रञ्च । तत्र समात्रके ओङ्कारस्वरूपे मात्रात्रयकल्पना उपरिष्टात् वर्णिता । अमात्रकम् ओङ्कारस्वरूपं तुरीयब्रह्मलक्षणम्, 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते (मा० उ० १.७) इति श्रुतेः । तदाह—अर्धर्चेनेति । ऋचः प्रणवस्य अर्धेन समात्रकरूपेण जाग्रत्स्वप्नसुषुप्त्या-ख्यावस्थात्रयाभिमानी आत्मतत्त्वं विश्वम् एजत् चालयत् विश्वोपाधिकं मात्रात्रयाभिन्न-वैश्वानर-हिरण्यगर्भ-ईश्वरात्मकपादत्रययुतं ब्रह्म निरुपाधिकं तुरीयाभिन्नं पुरुरूपं मायासम्बन्धात् पुरुरूपं सदपि वितस्थे विशिष्टनिर्विकारतया स्थितं निष्प्रपञ्चात्मकम् । तथा च सप्रपञ्चं निष्प्रपञ्चं च द्वे रूपे ब्रह्मणः । तत्राद्यं पादत्रयं सप्रपञ्चम्, अमात्रकं प्रपञ्चोपशमलक्षणं च ब्रह्म तुरीयमिति कथ्यते ॥ १९ ॥

सूयवसाद्भगवती हि भूया अधा[1] वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ २० ॥

(ऋ० १.६४.४०)

सुयवसऽअत् । भगऽवती । हि । भूयाः । अधा इति ।
वयम् । भगऽवन्तः । स्याम । अद्धि । तृणम् । अघ्न्ये ।
विश्वऽदानीम् । पिब । शुद्धम् । उदकम् । आऽचरन्ती ॥ २० ॥

हे अघ्न्ये ! गोनामैतत् । अहननीये हे गौः त्वं **सूयवसात्** शोभनयवसस्य तृणादिकस्य अत्त्री सती **भगवती** । भग इति धननाम । सर्वैः भजनीयप्रभूत-क्षीरादिधनवती । **भूयाः** भव । **हि** पूरणः प्रसिद्धौ वा । लोके यवसादि-भक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा **अधा** अन्यच्च, **वयं** यजमानाः अपि **भगवन्तः** प्रभूतेन धनेन तद्वन्तः **स्याम** । अथ एकवारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थयते—**विश्वदानीं** विश्वकालं सर्वदा **तृणम् अद्धि** भक्षय । **आचरन्ती** सर्वतो निर्गच्छन्ती **शुद्धं** निर्मलम् **उदकं पिब** । अयं मन्त्रो यास्केनैव व्याख्यातः–'सुयवसादिनी भगवती हि भव अथेदानीं वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती' (निरु० ११.४४) इति ॥ २० ॥

गौरिन्मिमाय[2] सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्याः
समुद्रा अधि वि क्षरन्ति ॥ २१ ॥

(ऋ० १.१६४.४१)

गौः । इत् । मिमाय । सलिलानि । तक्षती । एकऽपदी ।
द्विऽपदी । सा । चतुःऽपदी । अष्टाऽपदी । नवऽपदी ।
बभूवुषी । सहस्रऽअक्षरा । भुवनस्य । पङ्क्तिः । तस्याः ।
समुद्राः । अधि । वि । क्षरन्ति ॥ २१ ॥

**गौः** गरणशीला माध्यमिका वाक् । **इत्** एव **मिमाय** शब्दयति ।

---

१. ऋग्वेदे 'अथो' इति पाठः । २. ऋग्वेदे मन्त्रारम्भे 'गौरीर्मिमाय' इति, 'सहस्राक्षरा' इत्यनन्तरं च परमे व्योमन्' इत्येव पाठः ।

किं कुर्वती ? **सलिलानि** वृष्टयुदकानि **तक्षती** सम्यक् सम्पादयित्री। **एकपदी** एकपादोपेता एकाधिष्ठाना मेघे वर्तमाना, गमनसाधनेन वायुना एकपदी वा। **द्विपदी** मेघान्तरिक्षाख्यद्वयधिष्ठाना, आदित्यो वा द्वितीयः। तथा **सा चतुष्पदी** पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना। अथ **अष्टापदी** विदिगपेक्षया अष्टपादोपेता अष्टाधिष्ठाना। **नवपदी** उपरिदिगपेक्षया सूर्येण वा नवदिगधिष्ठाना। **बभूवुषी** एवंभूता। भवेच्छान्दसः क्वसुः। ततो ङीपि वसोः सम्प्रसारणम्। किमनया परिगणनया ? **सहस्राक्षरा**। अपरिमितवचनोऽयम्। अपरिमित-व्याप्तियुक्ता, बहुव्यापनशीलोदकवतीत्यर्थः। सेयं **भुवनस्य** भूत-जातस्य **पङ्क्तिः** प्रकाशिका। **तस्याः समुद्राः** ज्ञानविज्ञानसागराः **अधि विक्षरन्ति** सर्वतो निःसरन्ति।

केचिदेवमाहुः—गौरीर्गरणशीला शब्दब्रह्मात्मिका वाक् मिमाय माति। प्रसिद्धार्थे धातुः। प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती एकपदी अव्याकृतत्वेन एकप्रतिष्ठाना एकरूपा वा आत्मना, द्विपदी सुप्तिङ्भेदेन पादद्वयवती, चतुष्पदी नामाख्यातोपसर्गनिपातभेदे, अष्टापदी आमन्त्रितसहिताष्टभेदेन अष्टपदी, नवपदी बभूवुषी साव्ययैरुक्तैरष्टभिः नवपदी। अथवा सनाभिकेषु उरः-कण्ठादिषु नवसु पदेषु भवन्ती पश्चाद् बहुविधाभि-व्यक्तिमुपेयुषी। शिष्टमविशिष्टम्॥ २१॥

**कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।**
**त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवीं व्यू दुः[1]॥२२॥**

(ऋ० १.१६४.४७)

**कृष्णम्। निऽयानम्। हरयः। सुऽपर्णाः। अपः। वसानाः। दिवम्। उत्। पतन्ति। ते। आ। अववृत्रन्। सदनात्। ऋतस्य। आत्। इत्। घृतेन। पृथिवीम्। वि। ऊदुः॥२२॥**

**कृष्णं** कृष्णवर्णं **नियानं** नियमेन गच्छन्तं मेघं **हरयः** उदकस्य हर्तारः **सुपर्णाः** शोभनपतना रश्मयः **अपः वसानाः** उदकानि वासयन्तो मेघेषु। अद्भिर्मेघान् पूरयन्त इत्यर्थः। अन्तर्भावितण्यर्थत्वात् द्वि-

१. ऋग्वेदे 'पृथिवी व्युद्यते' इति पाठः।

कर्मकत्वम् । यद्वा— कृष्णं नियानं नियमनं रात्रिः । देवानां हि रात्रिर्दक्षिणायनम् । तत्प्रति । तस्मिन्वर्षकाले इत्यर्थः । एवं कुर्वन्तः **दिवं** द्युलोकं तदाश्रितमादित्यं वा उद्दिश्य **उत्पतन्ति** ऊर्ध्वं गच्छन्ति । **ते** रश्मयः **ऋतस्य सदनात्** उदकस्य स्थानात् आदित्यमण्डलात् **आववृत्रन्** आवर्तन्ते, अर्वाञ्च आगच्छन्ति । **आदित्** अनन्तरमेव यदा अर्वागगच्छन्ति तदानीमेव **घृतेन** उदकेन **पृथिवीं व्युदुः** विविधं क्लिन्नान् कुर्युः । 'कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयः' (निरु० ७.२४) इत्यादि निरुक्तं द्रष्टव्यम् ॥ २२ ॥

**अपादेति प्रथमा पद्वतीनां कस्तद् वां मित्रावरुणा चिकेत ।**
**गर्भो भारं भरत्या चिदस्या ऋतं पिपर्त्यनृतं नि पाति[1] ॥ २३ ॥**

(ऋ० १.१५२.३)

**अपात् । एति । प्रथमा । पत्ऽवतीनाम् । कः । तत् । वाम् । मित्रावरुणा । आ । चिकेत । गर्भः । भारम् । भरति । आ । चित् । अस्याः । ऋतम् । पिपर्ति । अनृतम् । नि । पाति ॥ २३ ॥**

हे **मित्रावरुणा** मित्रावरुणौ **पद्वतीनां** पादवतीनां मनुष्यादीनां प्रजानां **प्रथमा** प्रथमभाविनी **अपात्** पादरहिता उषाः । प्रतिदिनं सूर्यचन्द्रादिवत् स्वस्याः परिभ्रमणाभावात् सूर्यगमनेनैव स्वगमनात् अपात् इति च, **एति** इति च उपचर्यते । **तत्** तादृशं **वां** युवयोः प्रसिद्धं कर्म **कः आ चिकेत** कः आभिमुख्येन जानाति । 'कित ज्ञाने' । तत्स्तुत्यमित्यर्थः । मित्रावरुणयोः अहोरात्रदेवत्वात् अहोरात्रयोः अन्तरालस्यैव उषस्त्वात् एतत्कर्मत्वम् । किञ्च **अस्य** लोकस्य **भारं** निर्वाहं **गर्भः** युवयोर्गर्भस्थानीयः शिशुरादित्यः । अहोरात्रयोर्मध्यकाले उत्पत्तेः ताभ्यामेव मित्रावरुणत्वात् 'अहोरात्रे वै मित्रावरुणौ' (तै० सं० २.४.१०.१) इति श्रुतेः । स **आभरति चित्** समन्तान्निर्वहत्येव । हरति वा अस्य भारं जाड्यम् । चित् इत्यवधारणे । तत्कथमिति ?

१. ऋग्वेदे मन्त्रस्यास्य तृतीयपादे 'चिदस्या' 'स्थाने' चिदस्य' इति तुरीये च पादे 'पाति' इत्यस्य स्थाने 'तारीत्' इति पाठः ।

तदुच्यते—**ऋतम्** सत्यं जगतः प्रकाशगमनादिरूपं **पिपर्ति** पूरयति। **अनृतम्** उक्तविलक्षणमन्धकारं गमनादिनिरोधं च **नि पाति** निमज्जयति, नाशयतीत्यर्थः। शिशोर्जगद्भारवहनरूपं कर्म युष्मत्सामर्थ्यादिति ॥ २३ ॥

**विराड् वाग् विराट् पृथिवी विराडन्तरिक्षं विराट् प्रजापतिः। विराण्मृत्युः साध्यानामधिराजो बभूव तस्य भूतं भव्यं वशे स मे भूतं भव्यं वशे कृणोतु ॥ २४ ॥***

**विऽराट्। वाक्। विऽराट्। पृथिवी। विऽराट्। अन्तरिक्षम्। विऽराट्। प्रजाऽपतिः। विऽराट्। मृत्युः। साध्यानाम्। अधिऽराजः। बभूव। तस्य। भूतम्। भव्यम्। वशे। सः। मे। भूतम्। भव्यम्। वशे। कृणोतु ॥ २४ ॥**

'सर्वं ह्येतद् ब्रह्म' (माण्डू० २), सर्वं खल्विदं ब्रह्म' (छा० उ० ३.१४.१) इत्यादिश्रुतेः ब्रह्मणः सर्वात्मकत्वम्। तदेव मन्त्रेणानेन दृढीक्रियते—**विराट्** विविधं राजति, 'राजृ दीप्तौ', क्विप्। विविधैश्वर्यसम्पन्नो भगवान्। **वाक्** वक्ति इति वाक्, 'वच परिभाषणे' (अदा० १०६३ पर०) कर्तृ क्विप्। ब्रह्मणे वेदानामुपदेष्टा, 'यो वै वेदाँश्च प्रहिणोति तस्मै' (श्वे० उ० १८) इति श्रुतेः। अपि वा—वाक् वेदविद्यास्वरूपः। **विराट्** परमात्मा। **पृथिवी** 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नाद् रेतः' इति श्रुतेः, पृथिवी जगदुत्पादिका तद्वत् जगत्कारणम्, विस्तारवान् वा। किञ्च **विराट्** भगवान् **अन्तरिक्षम्** द्यावापृथिव्याः अन्तर्वर्ती प्रदेशः। तद्वत् सर्वत्र व्यापकः, अपरिच्छिन्नः, देश-काल-वस्तु-परिच्छेदात्मकत्रिविधपरिच्छेदशून्यः। देशपरिच्छेदोऽत्यन्ताभावः। वस्तुपरिच्छेदोऽन्योन्याभावः। कालपरिच्छेदः प्रागभाव-ध्वंसौ। तद्वर्जितः, चतुर्विधाभावाप्रतियोगी। प्रकाश-वृष्ट्यादिना प्रजानां पालकः **प्रजापतिः** सूर्यस्तद्वत् जगद्रक्षकः। **विराट् मृत्युः** तपनतनयः, पुराणेषु 'धर्मराज' इति ख्यातः। पापीनां शासकः। तथाविधः सन्। **साध्यानाम्** नाकवास्तव्यदेशविशेषाणां 'यत्र पूर्वे साध्याः सन्ति देवाः'

---

* अथर्ववेदसंहिताया अयं स्वकीयो मन्त्रः।

(ऋ० १०·९०·१६) इति मन्त्रवर्णात् । **अधिराजः** अधिपतिः **बभूव** । **तस्य** उक्तलक्षणस्य भगवतः **भूतम्** अतीतकालः । **भव्यम्** भविष्यत् अनागतकालः । एतद् वर्तमानस्याप्युपलक्षणम् । भूत-भविष्यद्-वर्तमानलक्षणास्त्रयः कालाः, कालत्रयवर्तिनः परार्था वा **वशे** अधीनत्वे वर्तन्ते । सर्वस्य जगतोऽधिष्ठातेति निष्कर्षः । स मयाऽऽराधितो भगवान् **भूतम् भव्यम्**, वर्तमानस्याप्युपलक्षणम् । **मे** मम । **वशे कृणोतु** अधीनीकरोतु । उपास्योपासकयोस्तादात्म्यात् जगदधिष्ठातुः परमेश्वरस्य उपासनात् अहमपि जगदधिष्ठाता स्यामिति भावः ॥ २४ ॥

**शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।**
**उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥ २५॥**

(ऋ० १·१६४·४३)

**शकऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता ।**
**परः । एना । अवरेण । उक्षाणम् । पृश्निम् । अपचन्त ।**
**वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ २५ ॥**

**शकमयं** शकृन्मयं शुष्कगोमयसंभूतं **धूमम् आरात्** नातिदूरे **अपश्यम्** दृष्टवानस्मि । दिवा धूमस्य दूरे दृश्यमानत्वात् स एव दर्शनविषयतया उक्तः । **विषुवता** व्याप्तिमता **एना** अनेन **अवरेण** निकृष्टेन धूमेन **परः** परस्तात् तत्कारणभूतमग्निम् **अपश्यम्** । अहं यजमान इत्यर्थः । किञ्च, **उक्षाणं** फलस्य सेक्तारं **पृश्नि** शुक्लवर्णम् । 'प्राश्नुते तेन फलमिति स्वयं प्राश्नुत इति वा पृश्निः' वल्लीरूपः सोमः । तं **वीराः** विविधेरणकुशलाः ऋत्विजः **अपचन्त** । अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः । सच क्रियासामान्यवचनः, अत्र औचित्यात् अभिषवेण सम्पादितवन्त इत्यर्थः । **तानि** तत्साधनानि **धर्माणि** अनुष्ठानानि **प्रथमानि** प्रतमानि प्रकृष्टानि फलपर्यवसायीनि **आसन्** सम्पादिन्यभवन् । यद्वा—सोम उक्षा अभवत्, पूर्वं तं देवा शक्तताऽपचन् । यज्ञार्थे तद् भवो धूमो मेघ आसीत्, तदुच्यते । तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः ॥ २५ ॥

त्रयः केशिनः ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमन्यो अभिचष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥२६॥
(ऋ० १.१६४.४४)

त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । सम्ऽवत्सरे । वपते । एकः । एषाम् । विश्वम् । अन्यः । अभिऽचष्टे । शचीभिः । ध्राजिः । एकस्य । ददृशे । न । रूपम् ॥ २६ ॥

केशस्थानीयप्रकृष्टरश्मियुक्ताः **त्रयः** अग्न्याऽऽदित्यवायवः । ते च **ऋतुथा** कालेकाले **वि चक्षते** विविधलक्षणां भूमिं पश्यन्ति । तेषां पृथक्पृथक्कार्यमाह—**एषा** मध्ये **एकः** अग्निः **संवत्सरे** अतीते सति संवत्सरं **वपते** दाहेन केशस्थानीयौषधिवनस्पत्यादिके छेदनं नापितकार्यं करोति । **एकः** अन्यः आदित्यः **विश्वं** सर्वं जगत् **शीचिभः** स्वकीयैः प्रकाश-वृष्टयादिकर्मभिः **अभि चष्टे** सर्वतः पश्यति । **एकस्य** वायोः **ध्राजिः** गतिः **ददृशे** दृश्यते सर्वैः, **न रूपम्**, अप्रत्यक्षत्वात् । स्पर्शशब्द-धृतिकम्पलिङ्गैः गम्यते इति हि न्यायविदो वदन्ति । अयमपि मन्त्रो यास्केन एवं व्याख्यातः—'त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभि-विपश्यन्ति । संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्व-मेकोऽभि विपश्यति । कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य । (निरु० १२.२७) इति ॥ २६ ॥

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ २७॥
(ऋ० १.१६४. ४५)

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः । गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥ २७ ॥

**वाक्** वाचः कृत्स्नायाः **पदानि चत्वारि परिमिता** परिमितानि । लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः । **तानि** पदानि **ब्राह्मणाः**

१. ऋग्वेदे 'विश्वमेको' इति पाठः ।

वेदविदः **मनीषिणः** मनस ईषिणो मेधाविनः **विदुः** जानन्ति। तेषां मध्ये **त्रीणि गुहा** गुहायां **निहिता** स्थापितानि **नेङ्गयन्ति** न चेष्टन्ते, न प्रकाशन्ते इत्यर्थः। **वाचः तुरीयं** पदं **मनुष्याः** अज्ञास्तज्ज्ञाश्च **वदन्ति** व्यक्तमुच्चारयन्ति, व्यवहरन्ति।

कानि तानि चत्वारि? इत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति—१. सर्ववैदिकवाग्जालस्य सङ्ग्रहरूपाः भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात् तासां व्याहृतीनामेव सारसङ्ग्रहभूतत्वात् अकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति। २. अपरे व्याकरण-मतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन। क्रियाप्रधानमाख्यातम्। द्रव्यप्रधानं नाम। प्रागुपसृज्यते आख्यातपदस्येत्युपसर्गः, प्रादिः। उच्चावचेष्वर्थेषु निपतनान्निपातः, अपि, तु, च, इत्यादिः। एतेष्वेव सर्वा वाक् परिमितेति अखण्डाया कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात्, 'वाग्वै पराच्यव्याकृताऽवदत्। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते' (तै० सं० ६.४.७.३) इति श्रुतेः। ३. अन्ये तु याज्ञिकाः मन्त्रः, कल्पः, ब्राह्मणं, चतुर्थी लौकिकीति। याज्ञिकैः समाख्यातोऽनुष्ठयार्थप्रकाशको वेदभागो मन्त्रः। मन्त्रविधान-प्रतिपादको वेदभागः(इति मन्त्राः)कल्पोऽत ऊर्ध्वम्'(तै० आ० १.३१.२) इत्यादिनोक्तः कल्पः। मन्त्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणम्। भोगविषया 'गामानय' इत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाक् नियमितेति याज्ञिकाः। ४. ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः। ५. सर्पाणां वाग् वयसां क्षुद्रसरीसृपस्य च चतुर्थी व्याव-हारिकीत्यैतिहासिकाः। ६. पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः। ७. अपरे मातृकाः प्रकारान्तरेण प्रतिपादयन्ति—परा, पश्यन्ती, मध्यमा, वैखरीति चत्वारीति। एकैव नादात्मिका वाक् मूलाधारा-दुदिता सती परेत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते, योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते। मध्ये हृदयाख्ये उदीयमानत्वात् मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते। एवं चत्वारि वाचः पदानि परिमितानि।

मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणाः 'खा'ख्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः जानन्ति। तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति। व्याकरणप्रसिद्ध-नामाख्याताादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदानि जानन्ति। अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति, अर्थप्रकाशनाय प्रयुञ्जते।

अयं मन्त्रो निरुक्ते व्याख्यातः। सोऽत्राप्यनुसन्धेयः—'अथापि ब्राह्मणं भवति। सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि, पशुषु तुरीयम्। या पृथिव्यां साग्नौ सा रथन्तरे। यान्तरिक्षे सा वायौ सा वामदेव्ये। या दिवि सादित्ये सा बृहती सा स्तनयित्नावथ पशुषु। ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः। तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्' ( निरु० १३.९ ) इति ॥ २७ ॥

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ २८ ॥**

(ऋ० १.१६४.४६)

**इन्द्रम्। मित्रम्। वरुणम्। अग्निम्। आहुः। अथो इति। दिव्यः। सः। सुऽपर्णः। गरुत्मान्। एकम्। सत्। विप्राः। बहुऽधा। वदन्ति। अग्निम्। यमम्। मातरिश्वानम्। आहुः॥ २८ ॥**

अमुमादित्यम् ऐश्वर्यविशिष्टम् **इन्द्रम् आहुः।** तथा **मित्रं** प्रमीतेर्मरणात् त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः। **वरुणं** पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः। तथा **अग्निम्** अङ्गनादिगुणविशिष्टम् एतन्नामकमाहुः। **अथो** अपि च अयमेव **दिव्यः** दिवि भवः **सुपर्णः** सुपतनः **गरुत्मान्** गरणवान् पक्षवान्वा। एतन्नामको यः पक्ष्यस्ति **सः** अप्ययमेव। कथमेकस्य नानात्वमिति ? उच्यते—अमुमेवादित्यम् **एकम्** एव वस्तुतः सन्तं **विप्राः** मेधाविनो देवतातत्त्वविदः **बहुधा वदन्ति**। तत्तत्कार्यकारणेन इन्द्राद्यात्मानं वदन्ति। 'एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते' इत्युक्तत्वात्। किञ्च तमेव वृष्ट्यादिकारणं वैद्युताग्निं **यमं** नियन्तारं **मातरिश्वानम्** अन्तरिक्षे

श्वसन्तं वायुम् आहुः। सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति। अत्र ये केचित्—'अग्निः सर्वा देवताः (ऐ० ब्रा० २.३) इत्यादि-श्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वा अग्नेरेव सार्वात्म्य-प्रतिपादकोऽयं मन्त्र इति वदन्ति। तत्पक्षे प्रथमोऽग्निशब्दः उद्देश्यः। तमग्निमुद्दिश्य इन्द्राद्यात्मकत्वकथनम्। अयं मन्त्रो निरुक्ते एवं व्याख्यातः—'इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्। दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा' (निरु० ७.१८) इति ॥ २८ ॥

## ॥ इति नवमं काण्डम् ॥



गुरु-गङ्गेश्वर-ग्रन्थमालायाः ३२ तमं पुष्पम्

# शौनकीया अथर्ववेद-संहिता

•

## अभिनव-सायणभाष्य-भूषिता

•

## दशमकाण्डम्

•

—भाष्यकारः—
वेद-दर्शनाचार्यो महामण्डलेश्वरः
**श्री स्वामी गङ्गेश्वरानन्द उदासीनः**

•

—सम्पादकौ—
वेदान्ताचार्यः श्री स्वामी गोविन्दानन्दः
श्री गोविन्द नरहरि वैजापुरकरः
एम०ए० न्याय-वेदान्त-साहित्याचार्यः
राष्ट्रपति-पुरस्कृतश्च

•

—प्रकाशकः—
सद्गुरु गङ्गेश्वर इण्टरनेशनल वेदमिशन न्यासः
**बम्बई : ४०००, २०**

१६

# दशमं काण्डम्

## प्रथमं सूक्तम् : कृत्या-दूषणम्

(१–३२) ऋषि :—प्रत्यङ्गिरसः। देवता—कृत्यादूषणम्। छन्दः—३–८,१०, ११,१४,२१,२४–२७,३०,३१ अनुष्टुप्; १ महाबृहती; २ विराड्नामागायत्री; ९ पथ्यापङ्क्तिः; १२ पङ्क्तिः; १३ उरोबृहती; १५ चतुष्पदा विराड्जगती; १७,२०,२४ प्रस्तारपङ्क्तिः (२० विराड्); १६,१८ त्रिष्टुप्; १९ चतुष्पदा जगती; २२ एकावसाना द्विपदार्ची उष्णिक्; २३ त्रिपदा भुरिग्विषमा गायत्री; २८ त्रिपदा गायत्री; २९ मध्ये ज्योतिष्मती जगती; ३२ द्व्यनुष्टुब्गर्भा पञ्चपदातिजगती।

'यां कल्पयन्ति' इत्यर्थसूक्तस्य कृत्याप्रतिहरणगणे पाठात् कृत्यानिर्हरणार्थे शान्त्युदके एतत् सूक्तं विनियुज्यते। तदुक्तं कौशिकेन—'यां कल्पयन्ति 'इति महाशान्तिमावपते' (कौ. सू. ३९.७) इति। कृत्याप्रतिहरणगणः 'दूष्या दूषिरसि' (अथर्व० २.११) इति सूक्ते द्रष्टव्यः। विनियोगान्तरं च तत्रैव द्रष्टव्यम्।

**यां कृल्पयन्ति वहृतौ वृधूमिव विश्वरूपां हस्तंकृतां चिकित्सवंः।**
**सारादेत्वप नुदाम एनाम् ॥ १ ॥**

**याम्। कृल्पयन्ति। वृहृतौ। वृधूम्ऽइव।**
**विश्वऽरूपाम्। हस्तंकृताम्। चिकित्सवंः। सा।**
**आरात्। एतु। अप। नुदामः। एनाम् ॥ १ ॥**

यां कृत्यां राक्षसीं हिंसावृत्तिं हिंसाक्रियां वा **चिकित्सवः** संशयग्रस्ताः सदसज्ज्ञाने क्रियायां वा संदिग्धचेतसः पुरुषाः **कल्पयन्ति** विरचयन्ति, समर्थां च कुर्वन्तीति। कीदृशीम्? **हस्तकृतां** स्वहस्ताभ्यां सम्पादितां **विश्वरूपां** नैकरूपिणीम्। तत्र दृष्टान्तः—**वहतौ** विवाहे **वधूमिव** नैकविधभूषणाच्छादनादिभिः स्वहस्तैरलङ्कृता नवोढा वधूः यथा समये समये नैकरूपाणि प्रकटयतीति तद्वत्। **एनाम्** एतादृशीं कृत्यां वयम **अपनुदामः** दूरं प्रेरयामः, दूरीकुर्म इत्यर्थः। **सा** कृत्या

आरात् दूरात् अप एतु अपगच्छतु । यद्वा—सा सारात् स्वसामर्थ्यलक्षणोपेताद् बलाद् दूरीभवतु । अत्र अपशब्दो धातुद्वयेन सम्बद्धः । अर्थसमृद्धयै अनादृतः पदपाठोऽतितरां नासमीचीन इति ज्ञेयम् ॥ १ ॥

शीर्षण्वती नस्वती कर्णिनी कृत्याकृता संभृता विश्वरूपा
सारादेत्वप नुदाम एनाम् ॥ २ ॥

शीर्षण्ऽवती । नस्वती । कर्णिनी । कृत्याऽकृता ।
समऽभृता । विश्वऽरूपा । सा । आरात् । एतु ।
अप । नुदामः । एनाम् ॥ २ ॥

**शीर्षण्वती** शिरःसम्बन्धिनी, **नस्वती** नासिकायां जाता, **कर्णिनी** कर्णसम्पृक्ता, **कृत्याकृता** आभिचारिकक्रियया कृत्यासम्पादयित्रा दुष्टजनेन राक्षसेन वा **सम्भृता** सन्धारिता, **विश्वरूपा** नैकरूपा, **सा** कृत्या **आरात्** दूरात् **अप एतु** अपगच्छतु । वयमपि **एनाम् अपनुदाम** अपसारयामः, विनाशयाम इत्यर्थः ॥ २ ॥

शूद्रकृता राजकृता स्त्रीकृता ब्रह्मभिः कृता ।
जाया पत्या नुत्तेव कर्तारं बन्ध्वृच्छतु ॥ ३ ॥

शूद्रऽकृता । राजऽकृता । स्त्रीऽकृता । ब्रह्मऽभिः । कृता ।
जाया । पत्या । नुत्ताऽइव । कर्तारम् । बन्धु । ऋच्छतु ॥ ३ ॥

**शूद्रकृता** शूद्रद्वारा सम्पादिता, सम्पाद्य च अस्माकमुपरि समानीता, **राजकृता** राज्ञा तत्कर्मकरैर्वा सम्पादिता, **स्त्रीकृता** नारीभिः प्रक्षिप्ता, **ब्रह्मभिः कृता** ब्राह्मणैर्ब्रह्मविद्भिर्वा प्रयुक्ता सा कृत्या, **पत्या नुत्ता जाया इव** यथा भर्त्रा परित्यक्ता जाया स्वबन्धून् प्रतियाति तद्वत्, **कर्तारं** कृत्यायाः प्रयोक्तारं प्रति **बन्धु** बन्धनमिव **ऋच्छतु** प्रतिगच्छतु । अस्मान् विहाय सा प्रयोक्तारमेव प्रतिनिवृत्त्य प्रयात्वित्यर्थः ॥ ३ ॥

अनयाऽहमोषध्या सर्वाः कृत्या अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां गोषु यां वा ते पुरुषेषु ॥ ४ ॥

अनया । अहम् । ओषध्या । सर्वाः । कृत्याः । अदूदुषम् । याम् ।
क्षेत्रे । चक्रुः । याम् । गोषु । याम् । वा । ते । पुरुषेषु ॥ ४ ॥

यां कृत्यां शत्रवः **क्षेत्रे** सस्यादिसम्पन्ने क्षेत्रे **चक्रुः** कृतवन्तः, यस्याः प्रभावेण सस्यसम्पन्नानि क्षेत्राणि ऊषराणि जायन्त इत्यर्थः । **यां गोषु** गवादिपशुषु प्रयोक्तुं चक्रुः येन ते निर्दुग्धा जायन्ते । **वा** पक्षान्तरे **यां ते** तव **पुरुषेषु** आप्तजनेषु प्रयोक्तुं चक्रुः, ताः **सर्वाः** सकलाः **कृत्याः अहम्** भिषक् **अनया** तत्तदनुकूलौषध्या, **अदूदुषम्** दूषयित्वा व्यनाशयम् ॥ ४ ॥

अस्यैव मन्त्रस्य चतुर्थकाण्डान्तर्गतस्य पुरस्तात् सायणभाष्यं पाठकानाम् उपकृतये यथावत् इहोपन्यस्यते—पुनरुक्तोऽयं मन्त्रः (अथ० ४.१८.५) । अनया सहदेव्याख्यया ओषध्या अहं सर्वाः कृत्याः वक्ष्यमाणप्रदेशेषु खाताः अदूदुषम् दूषितवान् अस्मि । कार्यासमर्थाः करोमीत्यर्थः । दुषेर्ण्यन्तात् लुङि चङि रूपम् । ताः कृत्या दर्शयति—यां कृत्यां क्षेत्रे बीजावापार्हे भूप्रदेशे चक्रुः कृतवन्तः निखातवन्तः । यां कृत्यां गोषु मध्ये निखातवन्तः । वाते वातसंचारप्रदेशे यां कृत्यां कृतवन्तः । कृत्यासंस्पृष्टवाय्वभिघातेनापि अभिचारदोषो जायत इत्येवमुक्तम् । तथा पुरुषेषु मनुष्येषु तत्संचारदेशे यां कृत्यां निखातवन्तः ताः सर्वाः कृत्या अदूदुषमित्यन्वयः ।

अघमस्त्वघकृते शपथः शपथीयते ।
प्रत्यक् प्रतिप्रहिण्मो यथा कृत्याकृतं हनत् ॥ ५ ॥

अघम् । अस्तु । अघऽकृते । शपथः । शपथिऽयते ।
प्रत्यक् । प्रतिऽप्रहिण्मः । यथा । कृत्याऽकृतम् । हनत् ॥ ५ ॥

**अघं** पापम् **अघकृते** पापकर्त्रे **अस्तु** भवतु, **शपथः** आक्रोशः, उपालम्भः शापो वा **शपथीयते** आक्रोशकारिणे, शापप्रदात्रे भवतु । तां कृत्यां वयं **प्रत्यक्** वैपरीत्येन **प्रतिप्रहिण्मः** कृत्याकारिणं प्रति परावर्तयामः, **यथा** येन सा **कृत्याकृतं** कृत्याकारिणं **हनत्** हन्यात् । अघम्, आङ्-पूर्वात् हन्धातोः 'अन्येन्योऽपि दृश्यते' (पा० ३,२.१०१) इति वार्तिकात् 'ड' प्रत्ययः, उपसर्गस्य ह्रस्वत्वम्, पृषोदरादित्वात् हकारस्य घकारः । 'हन्तेर्निर्ह्रसितोपसर्ग आहन्ती'ति यास्कः ॥ ५ ॥

प्रतीचीन आङ्गिरसोऽध्यक्षो नः पुरोहितः ।
प्रतीचीः कृत्या आकृत्यामून् कृत्याकृतो जहि ॥ ६ ॥

प्रतीचीनः । आङ्गिरसः । अधिऽअक्षः । नः ।
पुरःऽहितः । प्रतीचीः । कृत्याः । आऽकृत्य ।
अमून् । कृत्याऽकृतः । जहि ॥ ६ ॥

**नः** अस्माकं यजमानानां **पुरोहितः** पुरःस्थाता ऋत्विग्विशेषः, **आङ्गिरसः** महर्षिणा अङ्गिरसा प्रतिपादितायाम् आभिचारिकादि-क्रियायां निष्णातः, अङ्गिरसगोत्रोत्पन्नो वा **अध्यक्षः** आभिचारिक-विद्याविभागाध्यक्षः **प्रतीचीनः** कृत्यायाः परावर्तयिता, परावर्तने समर्थ इत्यर्थः । यद्वा—शत्रूणां प्रतिकूलः, वर्तते इति शेषः । अधुना पुरोहितं साक्षात् सम्बोध्याह—हे तादृशसामर्थ्योपेत पुरोहित ! त्वं **कृत्याः** सकलाः **प्रतीचीः आकृत्य** शत्रवे परावर्त्य, पराङ्मुखी कृत्वा **अमून् कृत्या-कृतः** कृत्याप्रयोक्तॄन् **जहि** विनाशयेति । प्रतीचीन यः प्रत्यञ्चति प्रतिकूलो भवतीति । 'प्रतीची अभिमुखी' इति यास्कः ॥ ६ ॥

यस्त्वोवाच परेहीति प्रतिकूलमुदाय्यम् ।
तं कृत्येऽभिनिवर्तस्व माऽस्मानिच्छो अनागसः ॥ ७ ॥

यः । त्वा । उवाच । परा । इहि । इति ।
प्रतिऽकूलम् । उत्ऽआय्यम् । तम् । कृत्ये ।
अभिऽनिवर्तस्व । मा । अस्मान् । इच्छः । अनागसः ॥ ७ ॥

इदानीं कृत्यां सम्बोध्य वक्ति—हे **कृत्ये** ! **यः** आभिचारिकः, **त्वा** त्वाम् **उवाच** आदिदेश यत् **परेहि इति** अग्रे गच्छ । कं प्रति ? **उदाय्यम्** उद्यतम् उद्योगिनम् **प्रतिकूलं** प्रतिद्वन्द्विनं प्रति, **तम् अभि निवर्तस्व** परावृत्य गच्छ । **अनागसः** पापरहितान् **अस्मान् मा इच्छः** मा अभि-कामयस्व, अस्माकमुपरि आक्रमणं मा कुर्वित्यर्थः ॥ ७ ॥

यस्ते परूंषि संदधौ रथस्येवर्भुर्धिया ।
तं गच्छ तत्र तेऽयनमज्ञातस्तेऽयं जनः ॥ ८ ॥

यः । ते । परूँषि । सम्ऽदधौ । रथस्यऽइव । ऋभुः । धिया । तम् । गच्छ । तत्र । ते । अयनम् । अज्ञातः । ते । अयम् । जनः ॥ ८ ॥

**इव** यथा स्वबुद्धिकौशलेन **ऋभुः** देवशिल्पी **रथस्य** असुरैर्योद्धुं प्रस्थितस्य देवराजवाहनस्य अङ्गानि यथायोग्यं सन्धत्ते तथैव हे कृत्ये ! **यः** अस्माकं प्रतिपक्षी **धिया** कुशलबुद्ध्या **ते** तव **परूंषि** पर्वाणि, विविधाङ्गानि **सन्दधौ तम्** सन्धातारं घातकप्रयोगकर्तारं प्रति **गच्छ** प्रतिनिवर्तस्व । **तत्र** तत्रैव **ते** तव **अयनम्** मार्गः, स्थानं वा आस्ते । **अयं जनः** मादृशो जनस्तु सर्वथाऽपरिचित एव । अतो मदन्तिके समागमनं कथमपि हिताय न भवेदिति सखीभावेन प्रबोधनमेतत् ॥ ८ ॥

ये त्वा कृत्वालेभिरे विद्वला अभिचारिणः ।
शंभ्वी३दं कृत्यादूषणं प्रतिवर्त्म पुनःसरं तेन त्वा स्नपयामसि॥९॥

ये त्वा । कृत्वा । आऽलेभिरे । विद्वलाः । आभिऽचारिणः । शम्ऽभु । इदम् । कृत्याऽदूषणम् । प्रतिऽवर्त्म । पुनःऽसरम् । तेन । त्वा । स्नपयामसि ॥ ९ ॥

हे कृत्ये ! **ये विद्वलाः** वित्तं=प्राप्तं बलम्=आवरणं बलासुरो वा यैस्ते, कृत्याया आवरणे वेष्टयितारो वा। यद्वा--**विद्वलाः** वेदनाशीलाः, वेदनाप्रदानं पीडनमेव येषां स्वभावस्ते । 'विद् ज्ञाने' (१०६४ अदा०) वलच्, गुणाभावः। **अभिचारिणः** आभिचारिकक्रियाकर्तारो विरुद्धाचाराः दुष्टजनाः **त्वा** त्वाम् **लेभिरे** प्रयोगाय लब्धवन्तः । अतस्त्वद्विनाशाय **इदं प्रतिवर्त्म** प्रतिद्वन्द्विमार्गो विपरीतमार्गरूपो वा, **कृत्यादूषणं** कृत्यादूषणकरः प्रयोगः **पुनःसरं** तवावरोधात् आवरणाद् वेष्टनाद्वा निर्गत्य पुनः सरणशीलः **शम्भुः** कल्याणकरो मार्गः अस्ति । अतः **तेन** तादृशप्रयोगान्तर्गतेन शान्त्युदकेन **त्वा** त्वाम् **स्नपयामसि** शुद्धं करवामः, ते दोषपरिमार्जनं कुर्म इति भावः । यद्वा--**इदम्** पुरोवर्ती **शम्भु** कल्याणकरः **कृत्यादूषणम्** कृत्यायाः दूषणकारी मणिविशेषः **प्रतिवर्त्म** प्रत्यावर्तनमार्गः **पुनःसरः** प्रयोक्तारं प्रत्येव प्रतिगच्छेत् । तेन मणिना त्वां स्नपयामि इति ॥ ९ ॥

यद् दुर्भगां प्रस्नपितां मृतवत्सामुपेयिम ।
अपैतु सर्वं मत् पापं द्रविणं मोप तिष्ठतु ॥ १० ॥

यत् । दुःभगाम् । प्रऽस्नपिताम् । मृतऽवत्साम् । उपऽएयिम । अप । एतु । सर्वम् । मत् । पापम् । द्रविणम् । मा । उप । तिष्ठतु ॥ १० ॥

**यत्** यस्मात्, कृत्याया हेतोरिति यावत् । **प्रस्नपिताम्** शत्रुकृताभिचारिकजलैरिति शेषः । अत एव **दुर्भगाम्** दौर्भाग्यशीलाम्, पुनः **मृतवत्साम्** मृततर्णकां गां वयम्, **उपेयिम** प्राप्नुमः । **सर्वं** तत् **मत्** मम पापम् अनेन शान्त्युदकेन **अपोहतु** दूरीभवतु । **मा** मां **द्रविणम्** गवादिधनसम्पत् **उपतिष्ठतु** प्राप्नोतु ॥ १० ॥

यत् ते पितृभ्यो ददतो यज्ञे वा नाम जगृहुः ।
संदेश्यात् सर्वस्मात् पापादिमा मुञ्चन्तु त्वौषधीः ॥ ११ ॥

यत् । ते । पितृऽभ्यः । ददतः । यज्ञे । वा । नाम । जगृहुः । सम्ऽदेश्यात् । सर्वस्मात् । पापात् । इमाः । मुञ्चन्तु । त्वा । ओषधीः ॥ ११ ॥

**पितृभ्यः ददतः** श्राद्धादिकाले पित्र्यन्नं प्रयच्छतः **वा** अथवा **यज्ञे** सामान्ययागे आभिचारिकप्रयोगार्थं मिथ्यापवादाय वा, **यत् ते** तव **नाम जगृहुः** गृहीतवन्तः, तव स्मरणं कृतवन्तः, **सर्वस्मात्** तस्मात् **संदेश्यात्** सन्दिष्टात् **पापात्** अपघातादिदोषात् **इमाः ओषधीः** अपामार्गाद्याः **त्वा** त्वां **मुञ्चन्तु** पृथक् कुर्वन्तु ॥ ११ ॥

देवैनसात् पित्र्यान्नामग्राहात् संदेश्यादभिनिष्कृतात् ।
मुञ्चन्तु त्वा वीरुधो वीर्येण ब्रह्मण ऋग्भिः पयस ऋषीणाम् ॥ १२ ॥

देवऽएनसात् । पित्र्यात् । नामऽग्राहात् । सम्ऽदेश्यात् । अभिऽनिष्कृतात् । मुञ्चन्तु । त्वा । वीरुधः । वीर्येण । ब्रह्मणा । ऋक्ऽभिः । पयसा । ऋषीणाम् ॥ १२ ॥

**देवैनसात्** देवसम्बन्धिनः पापात् देवापराधजनित-दोषात् **पित्र्यात्** पितृसम्बन्धिपापात् **नामग्राहात्** कृत्यादिदुष्टानां नामग्रहणजनितदोषात् **संदेश्यात्** आभिचारिकेण कृत्यां प्रति प्रेषितसंदेशजनितदोषात्। 'यस्त्वोवाच परेहि' (अथर्व० १०.१.७) 'इत्यादिसंदेशा अत्र ग्राह्याः। **अभिनिष्कृतात्** उद्गच्छन्तमुद्योगिनमभिलक्ष्य कृत्यानिष्क्रमणजनित-दोषात् **वीरुधः** ओषधयः **त्वा** त्वां मुञ्चन्तु। कीदृश्या ओषधयः? तदाह--**ब्रह्मणः** ब्रह्मविदः, **वीर्येण** प्रभावेण समन्वितैः **ऋग्भिः** मन्त्रैः **ऋषीणां पयसा** जलेन च, उक्षिता इति शेषः॥ १२॥

यथा वार्तश्च्यावयति भूम्या रेणुमन्तरिक्षाच्चाभ्रम्।
एवा मत् सर्वं दुर्भूतं ब्रह्मनुत्तमपायति॥ १३॥

यथा। वार्तः। च्यावयति। भूम्याः। रेणुम्। अन्तरिक्षात्। च। अभ्रम्। एव। मत्। सर्वम्। दुःऽभूतम्। ब्रह्मऽनुत्तम्। अप। अयति॥ १३॥

**यथा वातः** प्रभञ्जनः अतिजवेन प्रचलन् **भूम्याः** रेणुं पृथिव्यां पतितां धूलिं स्वस्थानात् अन्यत्र **च्यावयति** प्रक्षिपति, नभसि उत्पातयति **च** पुनः **अन्तरिक्षात् अभ्रम्** मेघं भूमौ पातयति, **एवा** एवमेव **मत्** मम **सर्वं** सर्वविधं **दुर्भूतं** पापम् अरिष्टं वा **ब्रह्मनुत्तं** ब्रह्मणा वेदमन्त्रैः ब्राह्मणेन वा प्रताडितं सत् **अपायति** अपगच्छति, अपगच्छत्वित्यर्थः॥ १३॥

अप क्राम नानदती विनद्धा गर्दभीव।
कर्तॄन् नक्षस्वेतो नुत्ता ब्रह्मणा वीर्यावता॥ १४॥

अप। क्राम। नानदती। विऽनद्धा। गर्दभीऽइव। कर्तॄन्। नक्षस्व। इतः। नुत्ता। ब्रह्मणा। वीर्यऽवता॥ १४॥

हे कृत्ये! त्वं **नानदती** भृशमव्यक्तं शब्दं कुर्वाणा **अपक्राम** परोऽपेहि। तत्र दृष्टान्तः--**विनद्धा गर्दभीव** यथा बन्धनमुक्ता गर्दभी बन्धनस्थानात् पलायते एवं त्वम् **इतः** अस्मात् स्थानात् **वीर्यावता ब्रह्मणा** वीर्यसम्पन्नेन मन्त्रेण, यद्वा--मन्त्रविदा वीर्यसम्पन्नेन ब्रह्मणा=ब्राह्मणेन **नुत्ता** प्रताडिता **कर्तॄन्** स्वनिर्मातॄन् **नक्षस्व** प्राप्नुहि। नक्षस्व--

'णक्ष गतौ प्राप्त्यर्थे' (६६२ भ्वा० पर०) व्यत्ययेनात्मनेपदम्। 'नक्षतीति गतिकर्मा' (निघ० २.१४) इति ॥ १४ ॥

अयं पन्थाः कृत्येति त्वा नयामोऽभिप्रहितां
प्रति त्वा प्र हिण्मः ।
तेनाभि याहि भञ्जत्यनस्वतीव वाहिनी
विश्वरूपा कुरूटिनी ॥ १५ ॥

अयम् । पन्थाः । कृत्ये । इति । त्वा । नयामः । अभिऽप्रहिताम् । प्रति । त्वा । प्र । हिण्मः । तेन । अभि । याहि । भञ्जती । अनस्वतीऽइव । वाहिनी । विश्वऽरूपा । कुरूटिनी ॥ १५ ॥

कृत्ये ! पश्य, **अयं पन्थाः** अयं मार्गः । अनेन **त्वा** त्वां **नयामः** साधिक्षेपं प्रेषयामः । **अभिप्रहितां प्रति** आभिचारिकेण अस्मान् अभि प्रति प्रहितां प्रेषितां **त्वा** त्वाम् **प्रति प्रहिण्मः** प्रतिकूलं प्रेरयामः, तं प्रत्येव प्रत्यावर्तयाम इत्यर्थः। येन यथा त्वमत्रागता **तेन** तेनैव **अभियाहि** गच्छ, प्रतिनिवर्तस्व । किं कुर्वती ? **भञ्जती** देश-देशान् भञ्जयन्ती । कथमिव ? **अनस्वती** रथादियानवती **विश्वरूपा** रथाश्वगजपदातिचतुरङ्गबलैर्नैकरूपा **कुरूटिनी** कु = कुटिलं प्रतिघातिनी, अवरोधिका । 'कु' पूर्वात् 'रुट् प्रतिघाते भाषायां च' इत्यस्मात् धातोः कः, इनि, ङीप्, छान्दसो दीर्घः । **वाहिनी** इव सेनेव । यथा तादृशी सेना देशदेशान्तरान् भञ्जयन्ती याति तथैव त्वमपि स्वप्रयोक्तुराभिचारिकस्य सर्वमपि भञ्जयन्ती तं प्राप्नुहि ॥ १५ ॥

पराक् ते ज्योतिरपथं ते अर्वागन्यत्रास्मदयना कृणुष्व ।
परेणेहि नवतिं नाव्या३ अति दुर्गाः स्रोत्या मा क्षणिष्ठाः परेहि ॥ १६ ॥

पराक् । ते । ज्योतिः । अपथम् । ते । अर्वाक् । अन्यत्र । अस्मत् । अयना । कृणुष्व । परेण ।

इहि । नवतिम् । नाव्याः । अति । दुःगा ।
स्रोत्याः । मा । क्षणिष्ठाः । परा । इहि ॥ १६ ॥

हे कृत्ये । **ते** तव **पराक्** पृष्ठभागे, प्रत्यावर्तनपथि प्रतिनिवर्तनाय **ज्योतिः** प्रकाशो विद्यते । **अर्वाक्** अस्मदभिमुखमागन्तुं **ते** तव **अर्वाक्** सम्मुखम् **अपथम्** मार्गाभावः, प्रकाशाभावात् स दृष्टिगोचरो न भवेदित्यर्थः । अतः **अस्मत्** अस्मत्तः अन्यस्थाने गमनाय **अयना** मार्गान् **कृणुष्व** कुरु । **परेण** अन्यमार्गेण **नाव्याः** नौभिः तर्तुं योग्याः **दुर्गाः** दुःखेन गन्तुं शक्याः **स्रोत्याः नवतिम्** नवतिसंख्याकाः नदीः **अति** अतिक्रम्य, अतीत्य वा **इहि** गच्छ । अत्र अस्मान् **मा क्षणिष्ठाः** मा हिंसीः । 'क्षणु हिंसायाम्' (१४६६ क्या० पर०) लुङ् । **परा इहि** दूरे व्रज, अस्मन्मार्गं परित्यज्य सपदि दूरं याहीत्यर्थः ॥ १६ ॥

वात इव वृक्षान् नि मृणीहि पादय मा गामश्वं
पुरुषमुच्छिष एषाम् ।
कर्तॄन् निवृत्त्येतः कृत्येऽप्रजास्त्वाय बोधय ॥ १७ ॥

वातःऽइव । वृक्षान् । नि । मृणीहि । पादय । मा । गाम् ।
अश्वम् । पुरुषम् । उत् । शिषः । एषाम् । कर्तॄन् ।
निऽवृत्त्य । इतः । कृत्ये । अप्रजाःऽत्वाय । बोधय ॥ १७ ॥

हे कृत्ये ! **इव** यथा **वातः** प्रभञ्जनः **वृक्षान्** उन्मूलयति तथैव त्वं **कर्तॄन्** स्वोत्पादकान् आभिचारिकान् **निमृणीहि** उत्पाट्य दूरं प्रक्षिप, समूलं विनाशयेत्यर्थः । तान् हत्वा भूमौ **पादय** पातय । **एषाम्** अभिचार-प्रयोक्तॄणां **गाम् अश्वं पुरुषं मा उच्छिषः**, मा उच्छेषय, तेषां कोऽपि प्राणी नावशिष्येत् । **इतः निवृत्य** अस्मात् स्थानात् प्रत्यावृत्य त्वं तान् **अप्रजास्त्वाय** पुत्रपौत्रसेवकादिनिःशेषत्वाय **बोधय** विज्ञापय । इत्थं कुर्वन्तस्तान् भवतां प्रजा सर्वथा न शिष्येत इति अवबोधयेत्यर्थः ॥१७॥

यां ते बर्हिषि यां श्मशाने क्षेत्रे
कृत्यां वलगं वा निचख्नुः ।

अ॒ग्नौ वा॑ त्वा॒ गार्ह॑पत्येऽभिचे॒रुः
पाकं॑ स॒न्तं॑ धीर॑तरा अ॒नागसं॑म् ॥ १८ ॥

याम् । ते॒ । ब॒र्हिषि॑ । याम् । श्म॒शा॒ने । क्षेत्रे॑ । कृ॒त्याम् । व॒ल॒गम् । वा॒ । नि॒ऽच॒ख्नुः । अ॒ग्नौ । वा॒ । त्वा॒ । गार्ह॑ऽपत्ये । अ॒भि॒ऽचे॒रुः । पाक॑म् । स॒न्त॑म् । धीर॑ऽतराः । अ॒नाग॑सम् ॥ १८ ॥

हे पुरुष ! **धीरतराः** बुद्धिमतामभिभवकारिणः, 'धीर'पूर्वात् 'तृ प्लवनतरणयोः' (९६९ भ्वा०) इत्यस्मात् अच्। आभिचारिण इति शेषः। **पाकम्** परिपक्वप्रज्ञम्, **सन्तम्** सदाचारिणम् **अनागसम्** निरपराधिनं पवित्रात्मानं **त्वा** त्वां हन्तुं **यां कृत्यां ते** तव **बर्हिषि** ओषधिषु, अन्नेषु पशुषु वा, 'ओषधयो बर्हिः' (ऐ० ब्रा० ५.२८), 'पशवो वै बर्हिः' (ऐ० ब्रा० २.१४) इति श्रुतेः, प्रत्युञ्जत। यां **श्मशाने** शवदाहस्थाने अभिचारक्रियामनुष्ठाय समुत्पादितवन्तः। **वा** पक्षान्तरे, **क्षेत्रे** कर्षणस्थले यां **वलगम्**, 'वल संवरणे' संवरणकारकं द्रव्यविशेष 'जादू' इति भाषाभाषितम् समादाय **निचख्नुः** निखातवन्तः। **अग्नौ वा गार्हपत्ये** अग्निहोत्रीये गार्हपत्यनाम्नि अग्नौ वा **अभिचेरुः** अभिचारोद्देश्येन आजुह्वन्, सर्वांस्तान् प्रयोगानिह, नाशयामीति शेषः ॥ १८ ॥

उ॒पाहृ॑तमनु॑बुद्धं॒ निखा॑तं॒ वैरं॑ त्सा॒र्यन्व॑विदा॒म कत्रं॑म् ।
तदे॑तु॒ यत॒ आभृ॑तं॒ तत्राश्वं॑ इ॒व वि व॑र्ततां॒ हन्तु॑
कृ॒त्या॒कृतः॑ प्र॒जाम् ॥ १९ ॥

उ॒प॒ऽआहृ॑तम् । अनु॑ऽबुद्धम् । नि॒ऽखा॑तम् । वैर॑म् । त्सा॒रि । अनु॑ । अ॒वि॒दा॒म॒ । कत्र॑म् । तत् । ए॒तु॒ । यतः॑ । आऽभृ॑तम् । तत्र॑ । अश्वः॑ऽइव । वि । व॒र्त॒ता॒म् । हन्तु॑ । कृ॒त्या॒ऽकृतः॑ । प्र॒ऽजाम् ॥ १९ ॥

**उपाहृतम्** अन्यस्मात् स्थानात् समानीतम् **अनुबुद्धम्** समानीय च प्रयोगादिविषये अनुक्रमेण विचारितं **निखातं** खनित्वा भूमौ स्थापितम्, **वैरम्** द्वेषं द्वेषसाधकमिति यावत् **त्सारि** कुटिलगति **कत्रम्** कर्तनसाधनं

संवरणविशेषं 'जादू' इति भाषाभाषितम् खड्गादिकं वा वयम् **अनु** अनुसंधानेन **विदाम** ज्ञातवन्त:, प्राप्तवन्तो वा। 'विद् ज्ञाने' (१०६४ अदा०), 'विद्लृ लाभे' (१४३३ रुधा०) वा। तत्कृत्यासाधनं **यतः** यस्मात् स्थानात् **आभृतम्** आहृतं **तत्र** तत्रैव **एतु** गच्छतु। तत्रैष दृष्टान्त:--**अश्वः इव**। **विवर्तताम्** परावृत्य स्वस्थानं गच्छतु। अतिदूरं परित्यक्तोऽपि अश्वो यथा अविस्मृतः स्वस्थानं परावर्तते, तथैवायं कृत्याप्रयोगोऽपि निवर्त्य स्वस्थानं यात्विति भावः। न केवलमेतावदेव, प्रत्युत **कृत्याकृतः** कृत्याप्रयोक्तृणां **प्रजां** सन्ततिं **हन्तु** विनाशयत्विति ॥ १९ ॥

**स्वायसा असयः सन्ति नो गृहे विद्मा ते कृत्ये यतिधा परूंषि।**
**उत्तिष्ठैव परेहीतोऽज्ञाते किमिहेच्छसि ॥ २० ॥**

**सुऽआयसाः। असयः। सन्ति। नः। गृहे। विद्म। ते।**
**कृत्ये। यतिऽधा। परूंषि। उत्। तिष्ठ। एव। परा।**
**इहि। इतः। अज्ञाते। किम्। इह। इच्छसि ॥ २० ॥**

**नः गृहे** अस्माकं सद्मनि **स्वायसाः** सुदृढलोहनिर्मिताः **असयः** खड्गादिकाः शस्त्रसमूहाः **सन्ति**, हे **कृत्ये ते** तव **यतिधा** यत्प्रकाराणि **परूंषि** पर्ववन्ति अङ्गप्रत्यङ्गादीनि सन्ति तानि सर्वाणि वयं **विद्मः** जानीमः। **उत्तिष्ठ एव** अधुना सर्वथा इत उत्तिष्ठ, क्षणमपि अत्र मा तिष्ठेत्यर्थः। **इतः** अस्मात् स्थानात् **परा इहि** परागच्छ, दूरे पलायनं कुरु। **अज्ञाते** सर्वथा अपरिचिते! वद, **इह** अत्र **किम् इच्छसि**? अत्र ते किमपि अभीष्टं न सिद्ध्येत्। नैतावदेव, यदि त्वरितं न प्रधावसि तदधुनैव निहन्मि त्वामिति तात्पर्यम् ॥ २० ॥

**ग्रीवास्ते कृत्ये पादौ चापि कर्त्स्यामि निर्द्रव।**
**इन्द्राग्नी अस्मान् रक्षतां यौ प्रजानां प्रजावती ॥ २१ ॥**

**ग्रीवाः। ते। कृत्ये। पादौ। च। अपि। कर्त्स्यामि।**
**निः। द्रव। इन्द्राग्नी इति। अस्मान्। रक्षताम्। यौ।**
**प्रऽजानाम्। प्रजावती इति प्रजाऽवती ॥ २१ ॥**

हे कृत्ये ! **ते** तव **ग्रीवाः** ग्रीवान्तर्गताः नाडीः **पादौ च** पुनः द्वावपि पादौ **कर्त्स्यामि** छित्वा प्रक्षेप्स्यामि । **निर्द्रव**, इतः प्रधाव । **इन्द्राग्नी** देवराजः इन्द्रः प्रखरतेजा अग्निश्च; द्वावेतौ **अस्मान्** रक्षतां पालयतां **यौ तौ** देवौ **प्रजानां** तत्सन्ततिभूतानामस्माकं **प्रजावती** माता, मातृवत् रक्षकौ विद्येते, अतो न वयं कस्मादपि बिभिम इति भावः ।। २१ ।।

सोमो राजाऽधिपा मृडिता च
भूतस्य नः पतयो मृडयन्तु ॥ २२ ॥

सोमः । राजा । अधिऽपाः । मृडिता । च ।
भूतस्य । नः । पतयः । मृडयन्तु ॥ २२ ॥

**अधिपः** सर्वेषामधिपतिः **सोमः राजा नः मृडिता** सुखकारी भवतु । **च** तथा **भूतस्य** पञ्चमहाभूतानां **पतयः** अधिष्ठातारो देवा अपि **नः** अस्मान् **मृडयन्तु** सुखयन्तु ।। २२ ।।

भवाशर्वावस्यतां पापकृते कृत्याकृते ।
दुष्कृते विद्युतं देवहेतिम् ॥ २३ ॥

भवाशर्वौ । अस्यताम् । पापऽकृते । कृत्या-
ऽकृते । दुःऽकृते । विऽद्युतम् । देवऽहेतिम् ॥ २३ ॥

**भवाशर्वौ** भवश्च शर्वश्चेति रुद्रस्य रूपविशेषौ तौ **पापकृते** पापकारिणे **दुष्कृते** दुष्टकर्मकारिणि **कृत्याकृते** कृत्याप्रयोक्तरि आभिचारिके **देवहेतिं** देवायुधं **विद्युतम्** वज्रम् **अवस्यताम्** पातयताम् ।। २३ ।।

यद्येयथ द्विपदी चतुष्पदी कृत्याकृता संभृता विश्वरूपा ।
सेतोऽष्टापदी भूत्वा पुनः परेहि दुच्छुने ॥ २४ ॥

यदि । आऽइयथ । द्विऽपदी । चतुःऽपदी । कृत्याऽकृता ।
सम्ऽभृता । विश्वऽरूपा । सा । इतः । अष्टाऽपदी । भूत्वा ।
पुनः । परा । इहि । दुच्छुने ॥ २४ ॥

हे कृत्ये ! **कृत्याकृता** अभिचारकर्मकर्त्रा **त्वन्निर्मात्रा सम्भृता** संधारिता, प्रेषिता **विश्वरूपा** नानारूपधारिणी त्वं यदि **द्विपदी चतुष्पदी भूत्वा** द्विपादं पुरुषं, चतुष्पादं पश्वादिकं पक्षिणं वा प्रविश्य **एयथ** अस्माकं सविधे आगच्छथ, तदा **दुच्छूने** ! हे दुर्भगे, **सा त्वम् इतः** अस्मत्तः **अष्टापदी भूत्वा पुनः परेहि** स्वकर्तारं प्राप्नुहि । द्वाभ्यां पादाभ्यां चतुर्भिः पदैर्वा यावत्या त्वरया त्वमत्र समागता, इतोऽपि अधिकत्वरया अष्टापदी भूत्वा स्वप्रेरकं प्रति परेहि । यद्वा—द्विपादं मानवं प्रविश्य चतुष्पादं पशुं वा प्रविश्य त्वमत्रागता, किन्तु इतस्त्वं अष्टापदी अष्टपदवति अन्तकोपमे पक्षिणि प्रविश्य प्रयोक्तारं प्रति गच्छ, तं च हिंसीरिति तत्त्वम् ॥ २४ ॥

**अभ्य१क्ताक्ता स्वरंकृता सर्वं भरन्ती दुरितं परेहि ।**
**जानीहि कृत्ये कर्तारं दुहितेव पितरं स्वम् ॥ २५ ॥**

**अभिऽअक्ता । आऽअक्ता । सुऽअरंकृता । सर्वम् । भरन्ती । दुःऽइतम् । परा । इहि । जानीहि । कृत्ये । कर्तारम् । दुहिताऽइव । पितरम् । स्वम् ॥ २५ ॥**

आभिचारिककृत्याप्रयोगेषु सुसज्जित-सुन्दर-पुत्तलिकानिर्मितिरपि प्रयोगविशेषः, यां कौतुकेन हस्ते गृह्णन्नेव शत्रुर्मानवः पञ्चत्वं गच्छतीति मान्त्रिकेषु ख्यातिः । तामेव पुत्तलिकामनुलक्ष्य मन्त्रोऽयम् । हे **कृत्ये**, पुत्तलिकारूपधारिणि ! **अभ्यक्ता** लाक्षादिभिः रञ्जिता, **अक्ता** सुगन्धितैलादिपदार्थैः स्निग्धीकृता, एवं **स्वरंकृता** सुष्ठु अलङ्कृता, तथापि **सर्वं दुरितं भरन्ती** हस्तेन गृहीतुर्मरणादिरूपं दुरितं पापम् आत्मनि भरन्ती, गोपायन्ती त्वम् इतः **परेहि** दूरं गच्छ । **दुहिता** दूरे हिता पुत्री **स्वपितरम् इव** यथा जानाति, अन्ततस्तमेव आश्रयाय विजानाति, तथैव कृत्ये ! पुत्तलिकारूपधारिणि कृत्ये ! त्वमपि **कर्तारम्** स्वनिर्मातारम् आभिचारिकं **जानीहि**, ज्ञात्वा च तत्रैव आश्रयं गृहाणेत्यर्थः । उपर्युक्तदुर्गुणवती दुहिताऽपि कुत्रापि आश्रयमासादयन्ती आश्रयाय स्वपितरमेव जानाति, तथैवात्रापि ध्येयम् ॥ २५ ॥

**परेहि कृत्ये मा तिष्ठो विद्धस्येव पदं नय ।**
**मृगः स मृगयुस्त्वं न त्वा निकर्तुमर्हति ॥ २६ ॥**

परा । इहि । कृत्ये । मा । तिष्ठः । विद्धस्यऽइव ।
पदम् । नय । मृगः । सः । मृगऽयुः । त्वम् । न ।
त्वा । निऽकर्तुम् । अर्हति ॥ २६ ॥

हे कृत्ये । परेहि दूरं याहि । अत्र मा तिष्ठ । विद्धस्य इव शराद्यस्त्रेण आहतस्य मृगस्य तत्पदाङ्कितमार्गानुसारिणो व्याधस्य इव त्वं पदम् स्वकीयं स्थानं नय प्राप्नुहि । यतो हि सः मृगः त्वं च मृगयुः मृगयाकर्ता व्याधस्थानीया । अतः सः त्वा त्वां विकर्तुं पराभवितु न अर्हति कथमपि समर्थो न विद्यते ॥ २६ ॥

उत हन्ति पूर्वासिनं प्रत्यादायापर इष्वा ।
उत पूर्वस्य निघ्नतो नि हन्त्यपरः प्रति ॥ २७ ॥

उत । हन्ति । पूर्वऽआसिनम् । प्रतिऽआदाय । अपरः । इष्वा ।
उत । पूर्वस्य । निऽघ्नतः । नि । हन्ति । अपरः । प्रति ॥ २७ ॥

उत अथवा पूर्वासिनं कदाचित् पूर्वस्थितं अपरः अन्यः पुरुषः समागत्य प्रत्यादाय तत इषुधन्वादिकं हृत्वा तेनैव इष्वा तां हन्ति उत पक्षान्तरे निघ्नतः पूर्वस्य प्रहर्तारं पूर्वस्थितं मानवं धर्षयित्वा अपरः अन्यः व्यापाद्यमानः पुरुषः तं प्रतिनिहन्ति प्रतिघातयति ॥ २७ ॥

एतद्धि शृणु मे वचोऽथेहि यत एयथ ।
यस्त्वा चकार तं प्रति ॥ २८ ॥

एतत् । हि । शृणु । मे । वचः । अथ । इहि । यतः ।
आऽइयथ । यः । त्वा । चकार । तम् । प्रति ॥ २८ ॥

हे कृत्ये ! एतत् हि निश्चयेन मे वचः शृणु, सावहिता भूत्वा ममेदं कथनं आदेशं वा शृणु । अथ ततः परं यतः एयथ यस्मात् स्थानात् त्वं समागता तत्रैव एहि प्रत्यावर्तस्व । कुत्र ? यः आभिचारिकः त्वा त्वाम् चकार निर्मितवान् निर्माय च प्रायुङ्क्त तं प्रति, गच्छेति शेषः ॥ २८ ॥

अनागोहत्या वै भीमा कृत्ये मा नो गामश्वं पुरुषं वधीः ।
यत्रयत्रासि निहिता ततस्त्वोत्थापयामसि पर्णाल्लघीयसी
भव ॥ २९ ॥

अनागःऽहत्या । वै । भीमा । कृत्ये । मा । नः । गाम् । अश्वम् ।
पुरुषम् । वधीः । यत्रऽयत्र । असि । निऽहिता । ततः ।
त्वा । उत् । स्थापयामसि । पर्णात् । लघीयसी । भव ॥ २९ ॥

हे **कृत्ये** ! **वै** नूनम् **अनागसः** निरपराधिनः **हत्या** हननं **भीमा** अतितरां भयङ्करं भवति इति मनसि निधाय **नः** अस्माकं **गाम् अश्वं पुरुषं** च **मा वधीः** मा मारय । त्वम् आभिचारिकेण **यत्र यत्र** यस्मिन् यस्मिन् सुगुप्ते स्थाने गुहायां वा प्रच्छन्नरूपेण **निहिता** स्थापिता असि, ततः **त्वा** त्वाम् **उत्थापयामसि** अन्विष्य निष्कासयामः । हे कृत्ये ! त्वं **पर्णात्** तरुपत्रात् अपि **लघीयसी** अत्यन्तलघुभारवती **भव** येन त्वदुत्थापने प्रयासाधिक्यं न स्यात् ॥ २९ ॥

यदि स्थ तमसावृता जालेनाभिहिता इव ।
सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्र हिण्मसि ॥ ३० ॥

यदि । स्थ । तमसा । आऽवृताः । जालेन । अभिहिताःऽइव ।
सर्वाः । सम्ऽलुप्य । इतः । कृत्याः । पुनः । कर्त्रे । प्र ।
हिण्मसि ॥ ३० ॥

हे **कृत्याः** ! **यदि** यूयं **जालेन अभिहिता** बद्धा **इव तमसा** धनान्धकारेण 'अनागसो मारणं न जातु श्रेयसे' इत्यस्य अज्ञानेन **आवृताः** प्रावृताः **स्थ** आच्छादितास्तदा **इतः** अस्मात् स्थानात् ताः **सर्वाः कृत्याः** **संलुप्य** सर्वथा लुप्ताः कुर्वन्तो वयं **पुनः कर्त्रे** त्वन्निर्मातुः अन्तिकं **प्रहिण्मसि** प्रेरयामः, प्रेषयाम इति यावत् ॥ ३० ॥

कृत्याकृतो वलगिनोऽभिनिष्कारिणः प्रजाम् ।
मृणीहि कृत्ये मोच्छिषोऽमून् कृत्याकृतो जहि ॥ ३१ ॥

१७

कृत्याऽकृतः । वलगिनः । अभिऽनिष्कारिणः । प्रऽजाम् । मृणीहि । कृत्ये । मा । उत् । शिषः । अमून् । कृत्याऽकृतः । जहि ॥ ३१ ॥

हे कृत्ये ! त्वं कृत्याकृतः कृत्यानिर्मातुः, वलगिनः संवेष्टनकारकद्रव्यवतः अभिनिष्कारिणः उद्यतं प्रत्यभिचारक्रियां प्रयुञ्जानस्य प्रजां सन्तति मृणीहि समूलघातं मारय, येन मा उच्छिषः, न कोऽपि अवशिष्येत, नामशेषं कुर्विति भावः । न केवलं प्रजाः, किं तर्हि ? अमून् कृत्याकृतः आभिचारिकप्रयोगकर्तॄन् अपि जहि मारय ।। ३१ ।।

यथा सूर्यो मुच्यते तमसस्परि रात्रिं जहात्युषसश्च केतून् ।
एवाहं सर्वं दुर्भूतं कर्त्रं कृत्याकृता कृतं हस्तीव रजो दुरितं जहामि ॥ ३२ ॥

यथा । सूर्यः । मुच्यते । तमसः । परि । रात्रिम् । जहाति । उषसः । च । केतून् । एव । अहम् । सर्वम् । दुःऽभूतम् । कर्त्रम् । कृत्याऽकृता । कृतम् । हस्तीऽइव । रजः । दुःऽइतम् । जहामि ॥ ३२ ॥

यथा सूर्यः आदित्यः तमसः परिमुच्यते घनान्धकारं विभेद्य मुक्तो भवति, उद्गच्छति, रात्रिम् कृष्णवर्णां यामिनीं जहाति परित्यजति, च पुनः उषसः केतून रक्तवर्णान् ध्वजान् ईषज्ज्योतिर्मयान् नक्षत्रादींश्च विलोपयति, एव एवमेव अहम् सर्वम् सर्वमपि कृत्याकृता कृत्यानिर्मात्रा तत्प्रयोक्त्रा वा कृतम् विरचितं सर्वं दुर्भूतम् दुःखप्रदं कर्त्रम् कर्तनसाधनं 'जादू' इत्युपनामकं संवरणादिकं दुष्कृत्यं तथैव जहामि दूरे प्रक्षिपामि इव यथा हस्ती दुरितं कष्टप्रदं रजः धूलिं स्वकरेण उत्क्षिप्य अन्तरिक्षे प्रक्षिपतीत्यर्थः ।। ३२ ।।

## द्वितीयं सूक्तम् : ब्रह्म-प्रकाशनम्

(१-३३) ऋषिः—नारायणः । देवता—पार्ष्णिसूक्तम्, पुरुषः, ब्रह्मप्रकाशनम् । छन्दः—५-९,१०, १२-२७,२९-३३अनुष्टुप्; १-४-७,८ त्रिष्टुप्; ६,११ जगती; २८ भुरिग्बृहती ।

**विनियोग**:—साम्प्रदायिकास्तु सूक्तस्यास्य शनैश्चरग्रहदैवत्यहविराज्यहोमे समिदाधानोपस्थानयोश्च विनियोगमाहुः। "अथाज्यभागान्ते 'विषासहिम्' (अथर्व० १७.१) इत्यादित्याय हविषो हुत्वाज्यं जुहूयात् समिध आधायोपतिष्ठते" 'इति प्रक्रम्य शान्तिकल्पे सूत्रितम्—'सहस्रबाहुः पुरुषः', 'केन पार्ष्णी', 'प्राणाय नमः' (अथर्व० ११.६) इति शनैश्चराय (शा० क० १५) इति।

केन पार्ष्णी आभृते पूरुषस्य
केनं मांसं संभृतं केनं गुल्फौ।
केनाङ्गुलीः पेशनीः केन खानि
केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम् ॥ १ ॥

केनं। पार्ष्णी इतिं। आभृते इत्याऽभृते। पुरुषस्य।
केनं। मांसम्। सम्ऽभृतम्। केनं। गुल्फौ।
केनं। अङ्गुलीः। पेशनीः। केनं। खानि। केनं।
उत्ऽश्लङ्खौ। मध्यतः। कः। प्रतिऽस्थाम् ॥ १ ॥

काण्डस्यास्य द्वितीयं सूक्तमिदं ब्रह्मप्रकाशनं नाम। शरीरावयवाः, भूरादिलोक-लोकान्तराणि तदधिष्ठातृदेवताश्च केन निर्मिताः? इत्यत्र स्वकीयामाहार्याम् अज्ञतां प्रकटयता वेदर्षिणा स्फुटीकृतं यत् मानवानामत्र सर्वथा अक्षमत्वात् कस्यापि अनिर्वचनीयशक्तिमत एवैतत् कार्यमिति। स च ब्रह्मपदाभिधेयः। तस्यैवात्र प्रकाशनं विधीयते प्रश्नमुखेन—केन पार्ष्णीत्यादिना।

**पुरुषस्य** मनुजन्मनः **पार्ष्णी** पादपश्चाद्भागौ **केन आभृते** धारिते, समन्तात् पोषिते वा। **केन** वा तस्मिन् **मांसम्** पिशितं **संभृतम्** संपोष्य धृतम्। **केन गुल्फौ** घुटिके, **केन पेशनीः** प्रशस्तरूपकर्त्र्यः, प्रशस्तकर्मकारिण्यो वा अङ्गुलीः, कृताः संभृता वेति शेषः। तथैव **खानि** इन्द्रियजातानि **केन** कृतानि, **केन** वा **उच्छ्लङ्खौ** नितम्बास्थिनी, द्वे पादतले इति केचित्, आभृते इति पूर्वेणान्वयः। एवम् एतेषामङ्गानां **मध्यतः** मध्यदेशे **कः प्रतिष्ठाम्** स्थापनाम्, अकरोदिति शेषः ॥ १ ॥

कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य ।
जङ्घे निर्ऋत्य न्यदधुः क्व स्विज्जानुनोः संधी क उ तच्चिकेत ॥ २ ॥

कस्मात् । नु । गुल्फौ । अधरौ । अकृण्वन् । अष्ठीवन्तौ । उत्ऽतरौ । पुरुषस्य । जङ्घे इति । निःऋत्य । नि । अदधुः । क्व । स्वित् । जानुनोः । संधी इति सम्ऽधी । कः । ऊं इति । तत् । चिकेत ॥ २ ॥

**तेन** अनिर्वचनीयशान्तिमता **कस्मात्** पदार्थात् किमर्थं वा, **गुल्फौ** पादग्रन्थी घुटिके, **अधरौ** अधस्तात् देहस्य **अकृण्वन्** कृतौ ? **अष्ठीवन्तौ** जान्वोः सन्धिस्थाने च **उत्तरौ** ऊर्ध्वं स्थापितौ ? **जङ्घे** गुल्फ-जान्वोः अन्तरालावयवौ, जङ्घाद्वयम् **निर्ऋत्य** बहिर्निष्कृष्य पृथक्कृत्य **न्यदधुः** संस्थापितम् ? **जानुनोः** जङ्घोपरिभागयोः ऊरुजङ्घयोर्मध्यभागस्य **सन्धी** संयोजनं **क्वस्वित्** कुत्र अस्ति ? तत्सर्वं **कः** उ एव **चिकेत** जानाति ? न कोऽपि सामान्यजनो जानातीत्यर्थः ॥ २ ॥

चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।
श्रोणी यदूरू क उ तज्जजान याभ्यां कुसिन्धं सुदृढं बभूव ॥ ३ ॥

चतुष्टयम् । युज्यते । संहितऽअन्तम् । जानुऽभ्याम् । ऊर्ध्वम् । शिथिरम् । कबन्धम् । श्रोणी इति । यत् । ऊरू इति । कः । ऊं इति । तत् । जजान । याभ्याम् । कुसिन्धम् । सुऽदृढम् । बभूव ॥ ३ ॥

**संहितान्ताम्** नाडीनां धारकं भागम्, **जानुभ्याम् ऊर्ध्वम् शिथिरम्** शिथिलं भागम्, **कबन्धम्** को मूर्धा बध्यते यत्र सस्तम्, **श्रोणी** कटि-प्रदेशः, **चतुष्टयं युज्यते**, एतच्चतुष्टयं यत्र युज्यते, एतादृशं शरीरं केन निर्मितम् ? **यत् ऊरू** जङ्घाद्वयम्, **याभ्याम् कुसिन्धम्** श्लेषाधायकं शरीरमिदं **सुदृढं बभूव कः** प्रश्ने उ एव तत् **जजान** जनयामास, एतत्केन निष्पादितमित्यर्थः ॥ ३ ॥

कति॑ दे॒वाः क॑त॒मे त आ॑स॒न्
य उरो॑ ग्री॒वाश्चि॒क्युः पूरु॑षस्य ।
कति॒ स्तना॒ौ व्य॑दधुः कः क॑फो॒डौ
कति॑ स्क॒न्धान् पृ॒ष्टीर॑चिन्वन् ॥ ४ ॥

कति॑ । दे॒वाः । क॒त॒मे । ते । आ॒स॒न् । ये । उरः॑ । ग्री॒वाः ।
चि॒क्युः । पुरु॑षस्य । कति॑ । स्तनौ॑ । वि । अ॒द॒धुः । कः ।
क॒फो॒डौ । कति॑ । स्क॒न्धान् । कति॑ । पृ॒ष्टीः । अ॒चि॒न्व॒न् ॥४॥

देवाः शरीरसंयोजितारो देवाः कति संख्याकाः, ते च कतमे के के आसन्, ये पुरुषस्य उरः उरोभागं ग्रीवाः ग्रीवायाश्च विविधान् भागान् चिक्युः संयोजितवन्तः ? कति स्तनौ व्यदधुः अकार्षुः । यद्वा—संख्यावाची कतिशब्दः 'स्तनौ' इत्यनेन सम्बद्धः स्तनगतनाडीनां द्योतनाय । तथा च स्तनागताः दुग्धनिर्मात्र्यः नाड्यः कतीत्यर्थः । कः कफोडौ मणिबन्धास्थीनि, कति स्कन्धान् बहुभारक्षमानि स्कन्धास्थीनि कति च उरोभागस्थिताः पृष्ठीः अचिन्वन् सम्यक् संचित्य क्रमशः संस्थापितवान् इति ॥ ४ ॥

को अ॑स्य बा॒हू सम॑भरद् वी॒र्यं॑ करवा॒दिति॑ ।
अंसौ॒ को अ॑स्य॒ तद् दे॒वः कुसि॑न्धे॒ अध्या द॑धौ ॥ ५ ॥

कः । अ॒स्य । बा॒हू इति॑ । सम् । अ॒भ॒र॒त् । वी॒र्य॑म् ।
क॒र॒वा॒त् । इति॑ । अंसौ॑ । कः । अ॒स्य । तत् ।
दे॒वः । कुसि॑न्धे । अधि॑ । आ । द॒धौ॒ ॥ ५ ॥

कः देवः अस्य पुरुषस्य बाहू भुजद्वयं समभरत् सम्यक् आदधात्, परिपुष्टौ चकार, येनायं बाहुभ्यां तद् वीर्यम् उद्योगं पराक्रमादिकं वा करवात् इति प्रकटीकरोतु । कः अस्य अंसौ स्कन्धद्वयं कुसिन्धे मध्यदेहस्योपरिभागे अध्यादधौ समस्थापयत् ॥ ५ ॥

कः स॒प्त खानि॒ वि त॑तर्द शी॒र्षणि॒
कर्णा॑वि॒मौ नासि॑के॒ चक्ष॑णी॒ मुख॑म् ।

येषां पुरुत्रा विजयस्य मह्मनि
चतुष्पादो द्विपदो यन्ति यामम् ॥ ६ ॥

कः । सप्त । खानि । वि । ततर्द । शीर्षणि । कर्णौ । इमौ । नासिके इति । चक्षणी इति । मुखम् । येषाम् । पुरुत्रा । विऽजयस्य । मह्मनि । चतुःऽपादः । द्विऽपदः । यन्ति । यामम् ॥ ६ ॥

कः **देवः शीर्षणि** सर्वोच्चज्ञानकेन्द्रे शिरसि **इमौ** एतौ **कर्णौ** कर्ण-द्वयम् **नासिके** छिद्रद्वयापेक्षया द्वे नासिके **चक्षिणी** वाम-दक्षिणनेत्रे 'चक्षिङ व्यक्तायां वाचि दर्शने च' (१०१७ अदा०) इत्यस्मात् अनिः। **मुखम्** आननम् एतानि **सप्त खानि** सप्तेन्द्रियगोलकानि **विततर्द** खनित्वा विस्तारितवान् **येषाम्** इन्द्रियगोलकानां **विजयस्य मह्मनि** महिम्नि, निमित्तसप्तमीयम्। विजयं निमित्तीकृत्य स्वस्वकार्यकरणे सामर्थ्यादेवेत्यर्थः, **चतुष्पादः** पश्वादयः, **द्विपदः** मानवाश्च सर्वे प्राणिनः **पुरुत्रा** बहुषु स्थानेषु सर्वत्रेत्यर्थः, **यामम्** प्राप्तव्यं पदं मार्गं **यन्ति** प्राप्नुवन्ति ॥ ६ ॥

हन्वोर्हि जिह्वामदधात् पुरूचीमधा महीमधि शिश्राय वाचम् ।
स आ वरीवर्ति भुवनेष्वन्तरपो वसानः क उ तच्चिकेत ॥ ७ ॥

हन्वोः । हि । जिह्वाम् । अदधात् । पुरूचीम् । अध । महीम् । अधि । शिश्राय । वाचम् । सः । आ । वरीवर्ति । भुवनेषु । अन्तः । अपः । वसानः । कः । ऊं इति । तत् । चिकेत ॥ ७ ॥

हि निश्चयेन **हन्वोः** ओष्ठमूलयोः मुखपार्श्वयोः, मुखस्योर्ध्वाधो-भागयोर्वा मध्ये यः **पुरूचीम्** पुरूणि बहूनि शास्त्राणि नैकविधरस-सम्पृक्तवस्तुजातानि वा अञ्चतीति ताम्, **जिह्वाम् अदधात्** समस्थापयत् **अधा** अथ, पृषोदरादित्वात् थस्य धः, 'निपातस्य चे'ति दीर्घश्च । **महीम्** महिमामयीं प्रभावकारिणीं **वाचं** वाग्देवताम् **अधि शिश्राय** न्यधत्त । **सः** योऽसौ **अपो वसानः** जले निवसन् जलानि धारयन् वा **भुवनेषुः अन्त**

लोकलोकान्तरेषु **आवरीर्वर्ति** आसमन्तात् परिभ्रमति, **क उ तच्चिकेत** तं निश्चयेन को जानाति ॥ ७ ॥

**मस्तिष्कंमस्य यतमो ललाटं ककाटिकां प्रथमो यः कपालम् ।**
**चित्वा चित्यं हन्वोः पूरुषस्य दिवं रुरोह कतमः स देवः ॥ ८ ॥**

**मस्तिष्कम् । अस्य । यतमः । ललाटम् । ककाटिकाम् । प्रथमः । यः । कपालम् । चित्वा । चित्यम् । हन्वोः । पुरुषस्य । दिवम् । रुरोह । कतमः । सः । देवः ॥ ८ ॥**

**यतमः** बहूनां मध्ये **प्रथमः** आदिपुरुषः **यः**, यद्वा—प्रथमः सर्वतः पूर्वं यः, **अस्य पुरुषस्य मस्तिष्कम्** मस्तकस्नेहं शिरो वा **ललाटं** भालपट्टं **ककाटिकां** ग्रीवायाः पश्चाद्भागं 'घाटा' इति भाषाभाषितम् **कपालम्** शीर्ष्णः कपालद्वयं **हन्वोः** ऊर्ध्वाऽधोमुखभागयोश्च **चित्यम्** चयनम्, 'चिञ् चयने' (१२५२ स्वा०) इत्यस्मात् क्यप् तुक् च । **चित्वा** संचयं विधाय **दिवं** द्युलोकं देहस्य शिरःस्थानं वा, देहे लोकत्रयकल्पनाप्रसङ्गे शास्त्रकृतां शिरसः स्वर्गलोकरूपत्वोक्तेः, **रुरोह** आरूढवान् । कथय, **कतमः सः देवः** ? देवेषु मध्ये कोऽसौ देव इति ॥ ८ ॥

**प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्र्यः ।**
**आनन्दानुग्रो नन्दांश्च कस्माद् वहति पूरुषः ॥ ९ ॥**

**प्रियऽअप्रियाणि । बहुला । स्वप्नम् । संबाधऽतन्द्र्यः । आऽनन्दान् । उग्रः । नन्दान् । च । कस्मात् । वहति । पुरुषः ॥ ९ ॥**

**बहुला** बहूनि **प्रियाप्रियाणि** प्रियाप्रियात्मकानि कर्माणि वस्तूनि वा, **स्वप्नं** निद्राम्, **संबाधतन्द्रयः** कार्योद्योगे बाधाप्रदाः अवसादाः आलस्य-प्रमादादिबहुला अवस्थाः, **आनन्दान्** प्रमोदान् **च नन्दान्** हर्षांश्च एतान् सर्वान् गुणधर्मान् कः **उग्रः** प्रचण्डः, महाबलशाली **पुरुषः कस्मात्** कुतः, कस्माद्धेतोः **वहति** प्राप्नोति ॥ ९ ॥

**आर्तिरवर्तिर्निर्ऋतिः कुतो नु पुरुषेऽमतिः ।**
**राद्धिः समृद्धिरव्यृद्धिर्मतिरुदितयः कुतः ॥ १० ॥**

आर्तिः । अवर्तिः । निःऽऋतिः । कुतः । नु । पुरुषे ।
अमतिः । राद्धिः । समऽऋद्धिः । अविऽऋद्धिः । मतिः ।
उत्ऽइतयः । कुतः ॥ १० ॥

**आर्तिः** दुःखं, पीडा वा, **अवर्तिः** दरिद्रता, **निर्ऋतिः** दुर्गतिः, **अमतिः** अज्ञानं दुर्मतिर्वा, एतत्सर्वं **पुरुषे** कुतः आगतम् ? **राद्धिः** ऋद्धिः, **समृद्धिः** सम्पन्नता, **अव्यृद्धिः** अन्यूनैश्वर्यम्, **मतिः** बुद्धिः, **उदितयः** उत्थानमुदयो वा **कुतः** एतत्सर्वं पुरुषे कुतः समागतमित्यर्थः ॥ १० ॥

को अस्मिन्नापो व्यदधात् विषूवृतः
पुरूवृतः सिन्धुसृत्याय जाताः ।
तीव्रा अरुणा लोहिनीस्ताम्रधूम्रा
ऊर्ध्वा अवाचीः पुरुषे तिरश्चीः ॥ ११ ॥

कः । अस्मिन् । आपः । वि । अदधात् । विषुऽवृतः । पुरूऽवृतः ।
सिन्धुऽसृत्याय । जाताः । तीव्राः । अरुणाः । लोहिनीः । ताम्रऽधूम्राः । ऊर्ध्वाः । अवाचीः । पुरुषे । तिरश्चीः ॥ ११ ॥

**अस्मिन्** पुरुषे ताः आपः रसरक्तात्मिकाः जलधाराः **कः व्यदधात्** समस्थापयत्, याः किल **विषूवृतः** पृथक्-पृथक्रूपेण प्रवहमानाः, **पुरूवृतः** पुरुभिः बहुभिः विविधैरन्नरसैः परिवृताः, **सिन्धुसृत्याय** नाडीषु सततं संसरणाय **जाताः** समुत्पन्नाः । कीदृश्यस्ताः ? काश्चित् **तीव्राः** तीव्रवेगेन देहे भ्रमन्त्यः, काश्चित् **अरुणाः** अरुणवर्णाः वृन्ताकवर्णकल्पाः, काश्चित् **लोहिनीः** लोहितवर्णाः, **ताम्रधूम्राः** ताम्रधातुवत् रक्तधूम्रवर्णाः **ऊर्ध्वाः** उपरिगतीः **अवाचीः**, अधोगतिशीलाः **तिरश्चीः** तिर्यग्गतियुक्ताः विद्यन्ते ॥ ११ ॥

को अस्मिन् रूपमदधात् को मह्मानं च नाम च ।
गातुं को अस्मिन् कः केतुं कश्चरित्राणि पूरुषे ॥ १२ ॥

कः । अस्मिन् । रूपम् । अदधात् । कः । मह्मानम् ।
च । नाम । च । गातुम् । कः । अस्मिन् । कः ।
केतुम् । कः । चरित्राणि । पुरुषे ॥ १२ ॥

**कः अस्मिन्** पुरुषे **रूपम् अदधात्** प्रतिष्ठितमकरोत् **च** पुनः **कः अस्मिन्** पुरुषे **मह्यानं** महिमानं महत्त्वं **च** तथा **नाम** पुरुषस्य नाम **अदधात्**। **अस्मिन्** पुरुषे **कः गातुं** गतिं गमनं यज्ञं वा। 'गातुं गमनम्' (निरु० ४.२१), 'गातुं वित्वेति यज्ञं वित्येत्येवतैदाह' (शत० ब्रा० १.९,२.८)। एवमेव **अस्मिन् कः केतुम्** प्रज्ञाम्, **चरित्राणि** चारित्र्याणि च **कः अदधात्** प्रावेशयदिति ॥ १२ ॥

को अस्मिन् प्राणमवयत् को अपानं व्यानमु।
समानमस्मिन् को देवोऽधि शिश्राय पूरुषे ॥ १३ ॥

कः। अस्मिन्। प्राणम्। अवयत्। कः। अपानम्। विऽआनम्। ऊं इति। सम्ऽआनम्। अस्मिन्। कः। देवः। अधि। शिश्राय। पुरुषे ॥ १३ ॥

कः देवः **अस्मिन्** मानवदेहे, हृदीत्यर्थः। **प्राणम्** प्राणवायुम्, **अवयत्** वीतवान्। मानवदेहेऽस्मिन् प्राणापानादिपञ्चात्मके प्राणतन्तुभिः कः प्राणजालमतन्वतेत्यर्थः। एवं **कः अपानम्** गुदास्थानस्थितमपानवायुम्, उ अपि च **व्यानम्** सर्वशरीरे वर्तमानं व्यानवायुं कः अतन्वतेत्यर्थः। एवम् **अस्मिन् पुरुषे कः देवः समानम्** नाभिमण्डलस्थं समाननामानं वायुम्, **अधि शिश्राय** स्थापितवानित्यर्थः। समानयति अन्नरसादीनि सर्वदेहे इति समानः। मन्त्रेऽस्मिन् पञ्चमस्य कण्ठदेशस्थस्य उदानस्य निर्देशो न कृतः, यद्यपि आयुर्वेदग्रन्थेषु सोऽपि परिगणितः। यथा—'हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः' इति। शतपथे पुनः प्राणादिवायुत्रयस्यैव समुल्लेखो दृश्यते। यथा—'सोऽयं (वायुः) पुरुषेऽन्तःप्रतिष्ठस्त्रेधा विहितः प्राणो उदान व्यान इति' (शत० ब्रा० ३.१.२.२०)। अपानोदानयोश्च एष्वेवान्तर्भावितत्वात्, विभाजने प्रत्येकस्य स्वातन्त्र्यादित्यवधेयम् ॥ १३ ॥

को अस्मिन् यज्ञमदधादेको देवोऽधि पूरुषे।
को अस्मिन्त्सत्यं कोनृतं कुतो मृत्युः कुतोमृतम् ॥ १४ ॥

कः । अस्मिन् । यज्ञम् । अदधात् । एकः । देवः । अधि । पुरुषे । कः । अस्मिन् । सत्यम् । कः । अनृतम् । कुतः । मृत्युः । कुतः । अमृतम् ॥ १४ ॥

कः एकः अद्वितीयः देवः अस्मिन् पुरुषे यज्ञम् अधात् स्थापितवान् 'पुरुषो वाव यज्ञ' इति श्रुतेः । एवमेव कः अस्मिन् सत्यम् अनृतम् असत्यं च अधादित्यन्वयः । तथा अस्मिन् पुरुषे कुतः मृत्युः मरणम्, कुतः च अमृतम् अमरत्वम् समायाते इति प्रश्नार्थः । अनृतं हि ताण्डये वाचश्छिद्ररूपेण व्याहृतम् । यथा—'एतद्वाचश्छिद्रं यदनृतम्' (ता० ब्रा० ८.६.१३) इति ॥ १४ ॥

को अस्मै वासः पर्यदधात् को अस्यायुरकल्पयत् ।
बलं को अस्मै प्रायच्छत् को अस्याकल्पयज्जवम् ॥ १५ ॥

कः । अस्मै । वासः । परि । अदधात् । कः । अस्य । आयुः । अकल्पयत् । बलम् । कः । अस्मै । प्र । अयच्छत् । कः । अस्य । अकल्पयत् । जवम् ॥ १५ ॥

कः देवः अस्मै पुरुषाय वासः त्वग्रूपाणि 'त्वग्धिवासः' (शत० ब्रा० ४.३-४.२६) इति श्रुतेः । पर्यदधात् त्वग्रूपेण वस्त्रेण आच्छादितवानित्यर्थः । कः अस्य आयुः अस्मिन् जन्मनि इयत्कालपर्यन्तं भविष्यतीति कालसीमानम्, अकल्पयत् निश्चिकाय । अस्मै बलम् सामर्थ्यं शरीरसत्त्वादिकं वा कः प्रायच्छत् प्रदत्तवान् । कः अस्य पुंसः जवम् वेगम् अकल्पयत् अददात् ॥ १५ ॥

केनापो अन्वतनुत केनाहरकरोद् रुचे ।
उषसं केनान्वैन्द्ध केन सायंभवं ददे ॥ १६ ॥

केन । आपः । अनु । अतनुत । केन । अहः । अकरोत् । रुचे । उषसम् । केन । अनु । ऐन्द्ध । केन । सायम्ऽभवम् । ददे ॥ १६ ॥

सृष्टिकर्ता **केन** सामर्थ्येन **आपः** जलानि **अन्वतनुत** जगति विस्तारितवानित्यर्थः । **केन** साधनेन वा सः **अहः** दिनं **रुचे** दीप्तये, **अकरोत्**, वस्तूनां प्रकाशाय दिनं निर्मिमायेत्यर्थः । **केन** साधनेन सः **उषसम्** प्रभातवेलाम् **अनु** सततम् **ऐन्द्ध** दीप्तिमतीमकरोत् । 'ञिइन्धी दीप्तौ' (१४४९ रुधा०) लङ्, अन्तर्भावितण्यर्थः । **केन** वा सामर्थ्येन स **सायंभवं** सायंकालसत्तां, सूर्यास्तकालं **ददे** प्रददौ, विरचितवानित्यर्थः ॥ १६ ॥

को अस्मिन् रेतो न्यदधात् तन्तुरा तायतामिति ।
मेधां को अस्मिन्नध्यौहत् को बाणं को नृतो दधौ ॥ १७ ॥

कः । अस्मिन् । रेतः । नि । अदधात् । तन्तुः । आ । तायताम् । इति । मेधाम् । कः । अस्मिन् । अधि । औहत् । कः । बाणम् । कः । नृतः । दधौ ॥ १७ ॥

कः देवः **अस्मिन्** पुरुषे **तन्तुः** प्रजाः 'प्रजा वै तन्तुः' (ऐ० ब्रा० ३.११.३८) इति श्रुतेः, **आतायताम्** आसमन्तात् विस्तारं प्राप्नोतु 'तनोतेर्यकि' (पा० ६.४.४४) आकारोऽन्तादेशो वा, **इति** हेतोः **रेतः** वीर्यं **न्यदधात्** निरन्तरं स्थापयामास, प्रजातन्तोर्विस्ताराय सन्ततेरविच्छेदाय वा वीर्यं स्थापयामासेति भावः । **कः** देवः **अस्मिन्** पुरुषे **मेधां** धारणावतीं बुद्धिं, प्रज्ञामित्यर्थः, **अधि औहत्** उपरि अवहत्, प्रापितवानित्यर्थः । 'वह प्रापणे' (१००४ भ्वा०), लङि छान्दसं रूपम् । एवम् अस्मिन् पुरुषे **कः बाणः** बाणो महावीणा, वाद्यविशेषो वा बाणः 'तथा च ताण्ड्यम्—' 'शततन्त्रीको भवति', 'अन्तो वै बाणः' (वाद्यानाम्) (ता० ब्रा० ५.६.१२-१३) । तदुपलक्षितं गायन-वादनरूपं सङ्गीतम् च **कः नृतः** नृत्यम्, सङ्गीतस्य तृतीयां शाखां देहचालनात्मिकां **दधौ** अदधादित्यर्थः । 'नृती गात्रविक्षेपे' (१११६ दिवा०) असुन्, कित् ॥ १७ ॥

केनेमां भूमिमौर्णोत् केन पर्यभवद् दिवम् ।
केनाभि मह्ना पर्वतान् केन कर्माणि पूरुषः ॥ १८ ॥

केन । इमाम् । भूमिम् । और्णोत् । केन । परि । अभवत् ।

दिवम् । केन । अभि । मह्ना । पर्वतान् । केन । कर्माणि । पुरुषः ॥ १८ ॥

सः प्रभुः केन तत्त्वेन इमाम् परिदृश्यमानां भूमिं पृथिवीम् और्णोत् आच्छादितवान् । 'उर्णुञ् आच्छादने' (१०३९ अदा०)। केन तत्त्वेन दिवं द्युलोकं पर्यभवत् परितः आक्रान्तवान् । केन मह्ना महिम्ना पर्वतान् भूधरान् केन च सामर्थ्येन पूरुषः विराट् पुरुषोऽन्यानि पूर्वोक्तानि च कर्माणि विदधाति । यद्वा—अयं प्राकृतो जनः कस्य देवस्य साहाय्येन स्वकीयानि कर्माणि करोतीत्यर्थः ॥ १८ ॥

केन पर्जन्यमन्वेति केन सोमं विचक्षणम् ।
केन यज्ञं च श्रद्धां च केनास्मिन् निहितं मनः ॥ १९ ॥

केन । पर्जन्यम् । अनु । एति । केन । सोमम् । विऽचक्षणम् । केन । यज्ञम् । च । श्रद्धाम् । च । केन । अस्मिन् । निऽहितम् । मनः ॥ १९ ॥

सः देवः केन प्रयोजनेन पर्जन्यं मेघम् अन्वेति अनुगच्छति । केन वा प्रयोजनेन विचक्षणं दर्शनीयं चैतन्योद्बोधकं सोमम् अन्वेति । केन निमित्तेन यज्ञं च तथा श्रद्धाम् अनुगच्छति । एवं केन देवेन अस्मिन् पुरुषे मनः अन्तःकरणं निहितं संस्थापितम् ॥ १९ ॥

केन श्रोत्रियमाप्नोति केनेमं परमेष्ठिनम् ।
केनेममग्निं पूरुषः केन संवत्सरं ममे ॥ २० ॥

केन । श्रोत्रियम् । आप्नोति । केन । इमम् । परमेऽस्थिनम् । केन । इमम् । अग्निम् । पुरुषः । केन । सम्ऽवत्सरम् । ममे ॥ २० ॥

अयं पुरुषः केन साधनेन श्रोत्रियं वेदज्ञम् आप्नोति अधिगच्छति । वा केन साधनेन इमं परमेष्ठिनं परमे स्थाने स्थितं परमात्मानं प्राप्नोति । केन साधनेन पूरुषः मानवः इमम् साक्षाद्दृश्यमानम् अग्निं प्राप्नोति ।

**केन** साधनेन चायं **संवत्सरं** कालम्, अथवा सम्यक् वसति वासयति वेति व्युत्पत्त्या संवत्सरं नाम सम्यक् निवासम्, सर्वव्यापकं परमात्मानमित्यर्थः, **ममे** मिमीते, मापयति च ॥ २० ॥

**ब्रह्म श्रोत्रियमाप्नोति ब्रह्मेमं परमेष्ठिनम् ।**
**ब्रह्मेममग्निं पूरुषो ब्रह्म संवत्सरं ममे ॥ २१ ॥**

**ब्रह्म । श्रोत्रियम् । आप्नोति । ब्रह्म । इमम् ।**
**परमेऽस्थिनम् । ब्रह्म । इमम् । अग्निम् ।**
**पुरुषः । ब्रह्म । सम्ऽवत्सरम् । ममे ॥ २१ ॥**

पूर्वमन्त्रगतं प्रश्नचतुष्टयं मन्त्रेणानेन उत्तरयति–ब्रह्म इति । ब्रह्मशब्दोऽत्र मन्त्रात्मकवेदपरः । **पूरुषः ब्रह्म** ब्रह्मणा वेदेन, **श्रोत्रियम्** श्रोत्रियत्वं वेदज्ञतां वा आप्नोति । **ब्रह्म** ब्रह्मणा वेदेन **इमम्** जगतः कर्तारं **परमेष्ठिनम्** हिरण्यगर्भं प्राप्नोति । **ब्रह्म** ब्रह्मणा वेदेन **इमम्** अग्निहोत्र-दर्शपूर्णमासादियज्ञसाधकम् **अग्निं** प्राप्नोति । अथ **ब्रह्म** ब्रह्मणा वेदेनैव पूरुषः **संवत्सरम्** कालं **ममे** मापयति । ब्रह्मणो वेदानतिरिक्तत्वेन ब्रह्मप्रकाशकेऽस्मिन् वेदस्य एतावन्महिम्नो नार्थान्तरत्वमित्यवधेयम् ॥ २१ ॥

**केन देवाँ अनु क्षियति केन दैवजनीर्विशः ।**
**केनेदमन्यन्नक्षत्रं केन सत् क्षत्रमुच्यते ॥ २२ ॥**

**केन । देवान् । अनु । क्षियति । केन । दैवऽजनीः ।**
**विशः । केन । इदम् । अन्यत् । नक्षत्रम् । केन ।**
**सत् । क्षत्रम् । उच्यते ॥ २२ ॥**

सः देवः **केन** बलेन शक्त्या वा **देवान्** अमरान् **अनु** अनुलक्ष्य **क्षियति** निवसति । **केन** बलेन शक्त्या वा **दैवजनीः** दैवात् पूर्वजन्मार्जितकर्मणोऽदृष्टात् जनिर्यासां ताः, 'देवाद् यञञौ' (वा० ४.१.८५) इत्यनेन देवशब्दात् अञ् । देवैरुत्पन्नाः **विशः** प्रजाः, मनुष्यान् (निघ० २.३) अनुक्षियति । **केन** बलेन शक्त्या वा **अन्यत्** भिन्नं सत् इदं प्रत्यक्षं **नक्षत्रम्** नक्षत्रजातं नभसि व्याप्तम् । नक्षतिर्गतिकर्मा, व्याप्तिकर्मा वा

(निघ० २.१४.२४) 'णक्ष' धातोः 'अभिनक्षि०' (उणा० ३.१०५) इत्यनेन् अत्रन्-प्रत्ययः। 'नेमानि नक्षत्राणीति च ब्राह्मणम्' (निघ० ३.४.२०)। 'क्षत्रं धननाम' (निघ० २.१०)। इमानि नभसि व्याप्तानि नक्षत्राणि सुवर्णानीव भासन्ते परं न तानि सुवर्णानि, धनानीत्यर्थः। एवम्भूतं नक्षत्रम् उच्यते। अथवा केन बलेन शक्त्या वा सत् सम्पन्नं सत् शोभनं साधु क्षत्रं शोभनं धनम् उच्यते। अथवा केन अन्यत् सदिदं नक्षत्रम् अराज्यम्, केन वा सन्तं क्षत्रं राज्यमित्युच्यते इत्यपि केचित्॥ २२॥

ब्रह्म॑ दे॒वाँ अनु॑ क्षियति॒ ब्रह्म॒ दैव॑जनी॒र्विशः॑।
ब्र॒ह्मेदम॒न्यन्नक्ष॑त्रं॒ ब्रह्म॒ सत् क्ष॒त्रमु॑च्यते॥ २३॥

ब्रह्म॑। दे॒वान्। अनु॑। क्षि॒य॒ति॒। ब्रह्म॑। दैव॑ऽजनीः। विशः॑। ब्रह्म॑। इ॒दम्। अ॒न्यत्। नक्ष॑त्रम्। ब्रह्म॑। सत्। क्ष॒त्रम्। उ॒च्य॒ते॒॥ २३॥

पूर्वोक्तमन्त्रगतं प्रश्नचतुष्टयमुत्तरयति—**ब्रह्म देवान् अनुक्षियति** ज्ञानरूपेण ब्रह्मणा स देवेषु निवसतीत्यर्थः। **ब्रह्म दैवजनीः विशः** मन्त्ररूपेण ज्ञानरूपेण वा ब्रह्मणैव पूर्वोपार्जितकर्मजन्याभिः मानुषीप्रजाभिः सह निवसति। **ब्रह्म इदम् अन्यत् नक्षत्रम्** मन्त्ररूपेण ज्ञानरूपेण वा ब्रह्मणा पृथग्भूतम् इदं जगत् तेजोविहीनमराज्यं वा जायते, **ब्रह्म** ब्रह्मणा च **सत् तत् क्षत्रम् उच्यते** तादृशब्रह्मणः सत्तयैव क्षत्रं तेजस्विधनं सुराज्यं वा उच्यते॥ २३॥

केने॒यं भूमि॒र्विहि॑ता॒ केन॒ द्यौरुत्त॑रा हि॒ता।
केने॒दमू॒र्ध्वं ति॒र्यक् चा॒न्तरि॑क्षं॒ व्यचो॑ हि॒तम्॥ २४॥

केन॑। इ॒यम्। भूमिः॑। विऽहि॑ता। केन॑। द्यौः। उत्ऽत॑राः। हि॒ता। केन॑। इ॒दम्। ऊ॒र्ध्वम्। ति॒र्यक्। च॒। अ॒न्तरि॑क्षम्। व्यचः॑। हि॒तम्॥ २४॥

**इयं भूमिः** पृथिवी **केन विहिता** रचिता, **केन च इयं द्यौः** द्युलोकः **उत्तरा** उपरिभवः **हिता** ऊर्ध्वं धृतः प्रतिष्ठापित इत्यर्थः। **केन च इदम्**

**अन्तरिक्षम् व्यचः** सर्वत्राभिव्याप्तं विस्तृतं वा, **ऊर्ध्वम्** उपरिभागे **तिर्यक्** तिरश्चीनं **च हितम्** स्थापितम् ॥ २४ ॥

ब्रह्म॑णा भूमि॒र्विहि॑ता ब्रह्म॒ द्यौरुत्त॑रा हि॒ता ।
ब्रह्मे॒दमू॒र्ध्वं ति॒र्यक् चा॒न्तरि॑क्षं॒ व्यचो॑ हि॒तम् ॥ २५ ॥

ब्रह्म॑णा । भूमिः॑ । विऽहि॑ता । ब्रह्म॑ । द्यौः । उत्ऽत॑रा । हि॒ता । ब्रह्म॑ । इ॒दम् । ऊ॒र्ध्वम् । ति॒र्यक् । च॒ । अ॒न्तरि॑क्षम् । व्यचः॑ । हि॒तम् ॥ २५ ॥

पूर्वमन्त्रस्य उत्तरमाह—**ब्रह्मणा भूमिः विहिता** मन्त्ररूपेण ज्ञानरूपेण वा ब्रह्मणा भूमिः इत्यादि पूर्ववत्। **ब्रह्म** मन्त्ररूपेण ज्ञानरूपेण वा ब्रह्मणा **उत्तरा द्यौः** इत्यादि यथापूर्वम्। **ब्रह्म** ब्रह्मणा मन्त्ररूपेण ज्ञानरूपेण वा **अन्तरिक्षम्** इत्यादि समानम् ॥ २५ ॥

मू॒र्धान॑मस्य सं॒सीव्याथ॑र्वा॒ हृद॑यं च॒ यत् ।
म॒स्तिष्का॑दू॒र्ध्वः प्रैर॑य॒त् पव॑मा॒नोऽधि॑ शी॒र्ष॒तः ॥ २६ ॥

मू॒र्धान॑म् । अ॒स्य॒ । स॒म्ऽसीव्य॑ । अथ॑र्वा । हृद॑यम् । च॒ । यत् । म॒स्तिष्का॑त् । ऊ॒र्ध्वः । प्र । ऐ॒र॒य॒त् । पव॑मानः । अधि॑ । शी॒र्ष॒तः ॥ २६ ॥

**अथर्वा** अथर्वा ऋषिः। अत्रायमभिसन्धिः—'थर्व' शब्दो गति-चाञ्चल्यवाचकस्तदभाववान् अथर्वा स्थिरचेता योगी। गोपथे अथर्व-शब्द एवं व्युत्पादितः—'अथ अर्वाक् एनम् एतासु अप्सु अन्विच्छ' इति (गो० ब्रा० १.४.)। एवञ्च अन्तः आत्मनोऽन्वेषणस्य विद्या अथर्व-वेदः। ताञ्च असम्प्रज्ञातसमाधिना पश्यन् मन्त्ररूपेण तस्याः विद्यायाः प्रस्तोतुस्तादृशशक्तिशालित्वं सुस्पष्टमेवेति। सोऽयमथर्वा सर्वप्रथमम् **अस्य** पुरुषस्य **मूर्धानम्** मूर्धास्थितं चैतन्यांशं **च** तथा **यत् हृदयं** हृद्गतं चैतन्यांशं (तदुभयं) **संसीव्य** मिथः सम्मेल्य, तयोः एकत्वमापाद्य वा स्थापितवान्। ततः **पवमानः** पूयमानः पवित्रीक्रियमाणः वा **सोमः** प्राणवायुः 'सोमो वै पवमानः' (शत० ब्रा० २,२.३.२२), 'प्राणा वै

पवमानः' (शत० ब्रा० २.२.१.६) इति श्रुतेः। स्वप्रभावेण शीर्षतः अधि शीर्षमधिकृत्य मस्तिष्कात् ऊर्ध्वः ऊर्ध्वभागे प्रसरत् भालपट्टे भ्रूमध्यस्थितम् एकीभूतं तत् ऊर्ध्वाभिमुखं चैतन्यं प्रैरयत् जीवनाय प्रेरितवान्। तात्पर्यमेतत् यद् अथर्वानामा ऋषिः स्वीयैः प्रयोगैः मानवस्य भावनाप्रवणस्य हृदयस्य तर्कप्रवणस्य च मस्तिष्कस्य एकत्र सामञ्जस्यं साधितवान्, प्राणवायुं च सक्रियं कुर्वन् तन्मस्तिष्कं गतिशीलं विधत्ते इति ॥ २६ ॥

तद् वा अथर्वणः शिरो देवकोशः समुब्जितः ।
तत् प्राणो अभि रक्षति शिरो अन्नमथो मनः ॥ २७ ॥

तत् । वै । अथर्वणः । शिरः । देवऽकोशः । सम्ऽउब्जितः । तत् । प्राणः । अभि । रक्षति । शिरः । अन्नम् । अथो इति । मनः ॥ २७ ॥

**अथर्वणः** तत् **वै** **शिरः** नूनम् अथर्वणा, प्रजापतिना वा प्रदत्तं तच्छिरः मन्त्रविशेषसमुदायो मानवमस्तिष्कं वा **समुब्जितः** सम्यक् प्रकारेण योगसाधनेन वा ऋजुतामापादितः **देवकोशः** दिव्यशक्तीनां कोशः, इन्द्रियाणां सञ्चालको वा आस्ते। 'उब्ज आर्जवे' इत्यस्मात् क्त-प्रत्ययः। देवकोशात्मकं **तत् शिरः प्राणः** मुख्यः प्राणः **अभिरक्षति**। **अन्नं** तदनुकूलं भक्षितमन्नम् **अथो** अपि च **मनः**, एते द्वे अपि तत् रक्षतः। एतेन मानव-शरीरे मस्तिष्कस्य जीवनाधायता स्फुटा ॥ २७ ॥

ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः
सर्वा दिशः पुरुष आ बभूवाँ३ ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ २८ ॥

ऊर्ध्वः । नु । सृष्टा३ः । तिर्यङ् । नु । सृष्टा३ः । सर्वाः । दिशः । पुरुषः । आ । बभूवाँ३ । पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः उच्यते ॥ २८ ॥

प्रश्नोत्तररूपेण विराट् वर्ण्यते—ऊर्ध्वो नु सृष्टा इति। **नु** किं विराट्-पुरुषस्य ब्रह्माण्डरूपो देहः **ऊर्ध्वः** ऊर्ध्वाभिमुख एव **सृष्टाः** सृष्टः। अथवा **नु** किं **तिर्यङ्** वक्रगामी **सृष्टाः** सृष्टः ? **अस्यैव सन्देहस्य** उत्तरमेतत् यन्नैवम्, प्रत्युत **सर्वा दिशः पुरुषः**, अयं विराट् पुरुषः, सर्वाः दिशः अभिव्याप्य **आबभूव** संस्थितः, सर्वत्र सृष्टिरचनामकरोदिति भावः। **यः** पुरुषः अस्य ब्रह्मणः ब्रह्माण्डाधिपतेः विराट्पुरुषस्य **पुरं** आवासभूमिम्, ब्रह्माण्डपुरिं **वेद** विजानाति, **यस्याः** अधिकरणार्थे षष्ठी, यस्यामावासभूम्यां निवासहेतोः अयमात्मा **पुरुष** इति उच्यते। स एव वस्तुतस्तत्त्वज्ञो भवतीत्यर्थः॥ २८॥

**यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम्।**
**तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः॥ २९॥**

**यः। वै। ताम्। ब्रह्मणः। वेद। अमृतेन। आऽवृताम्। पुरम्। तस्मै। ब्रह्म। च। ब्राह्माः। च। चक्षुः। प्राणम्। प्रऽजाम्। ददुः॥ २९॥**

**यः वै** खलु **अमृतेन** अमृततत्त्वेन अमरणशीलया प्राणशक्त्या वेत्यर्थः। **आवृतां** समाच्छादिताम् परब्रह्मणः **एनं पुरं** पुरीं **वेद** जानाति स नियन्त्रितजीवनो न केवलं ब्रह्मैवाप्नोति, प्रत्युत **तस्मै ब्रह्म** वेदाः **च ब्राह्माः** वेदाध्येतारो ब्राह्मणाश्च **चक्षुः** चक्षुस्तदुपलक्षितानि सर्वाणि इन्द्रियाणि, **प्राणं** सर्वमायुः **प्रजां** सन्ततिं चापि **ददुः** दत्तवन्तः, तेषां वरप्रदानात् स एतत्सर्वमपि समाप्नोतीत्यर्थः॥ २९॥

**न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा।**
**पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते॥ ३०॥**

**न। वै। तम्। चक्षुः। जहाति। न। प्राणः। जरसः। पुरा। पुरम्। यः। ब्रह्मणः। वेद। यस्याः। पुरुषः। उच्यते॥ ३०॥**

**यस्याः** ब्रह्मपुरः कारणात्, तत्र शयनात् आत्मा **पुरुषः** इति **उच्यते**, यथाह यास्कः—'पुरुषः पुरीषयः, पुरि शेते इति (नि० २. १. ४)। तस्य पुरुषशब्दस्य अन्वर्थताहेतुकं **पुरम्**

**ब्रह्मपुरं यः वेद** विजानाति, **वै** निश्चयेन **तं** पुरुषं **चक्षुः** चक्षुरादीन्द्रिय-जातं **न जहाति** न त्यजते। **जरसः पुरा** वार्धक्यात् पूर्वं **प्राणः** अपि न जहातीत्यर्थः ॥ ३० ॥

**अ॒ष्टाच॑क्रा नव॑द्वारा दे॒वानां॒ पूर॑यो॒ध्या ।**
**तस्यां॑ हिर॒ण्यय॒ः कोश॑ः स्व॒र्गो ज्योति॒षावृ॑तः ॥ ३१ ॥**

**अ॒ष्टाऽच॑क्रा । नव॑ऽद्वारा । दे॒वाना॑म् । पूः । अ॒यो॒ध्या । तस्या॑म् । हि॒र॒ण्यय॑ः । कोश॑ः । स्व॒ःऽगः । ज्योति॑षा । आ-ऽवृ॑तः ॥ ३१ ॥**

**देवानाम् पूः** नगरी, जीवात्मनो निवासस्थानम्। आदरार्थे बहुवचनम्। यद्वा—दिव्यगुणोपेतानां जनानां निवासभूमिः। साधिष्ठातृ-देवैः पञ्चभूतैः निर्मितत्वादस्य शरीरस्य तदधिष्ठातृदेवानां पूंस्त्वमिति वा। किंवा मानवीये देहेऽस्मिन् क्रमशः प्राण-मनोः-रक्तापरपर्याय-सत्त्व-वाक्-बुद्धि-वीर्य-दुःख-रोगादीनां सूर्य-चन्द्र-मंङ्गल-बुध-गुरु-शुक्र-शनैश्चराभिधैः ग्रहदेवैः प्रदानात् तेषां देवानां पूरियमित्यपि केचन। अथवा देवानां मूर्खाणाम् उन्मत्तानां पूः पूतिपुरी, 'दिवु मदे' अच्। देववत् प्रकाशमानानां नगरी देवानां पूरिति निष्कर्षः। सा **अयोध्या** योद्धमशक्या, अजेया, इति यावत्। तामेव विशिनष्टि—**अष्टाचक्रा** करोतेर्घञर्थे कः, द्वित्वम्। मूलाधार-स्वाधिष्ठान-मणिपूरका-ऽनाहत-विशुद्धा-ऽऽज्ञाचक्र-ललनाचक्रापरपर्यायमनश्चक्र - कूर्मचक्र-सहस्रारचक्र-रूपाणि अष्टौ चक्राणि यस्यां सा। चक्रशब्दस्य कर्मवाचित्वे यम-नियमा-ऽऽसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिरूपाणि योग-दर्शनोक्तानि कर्माणि यस्याः सा तादृशी अष्टाचक्रा। **नवद्वारा** द्वे नेत्रे, द्वौ कर्णौ, द्वे नासिके, एकैकं मुख-गुदा-लिङ्गानि इत्येवं नवद्वारवती। अथवा मनोबुद्धिसहितैः सप्तशीर्षण्यच्छिद्रैर्युक्ता। वर्तते इति शेषः। तस्यां तादृश्याम् अयोध्यापुरि, स्थितः **हिरण्ययः कोशः** स्वर्णाभायुक्तः अदृष्टरूपः, मन-प्राण-हृदयरूपो वा कोशः प्रदेशः **स्वर्गः** स्वर्गवत् सुख-प्रदः अस्ति यो हि **ज्योतिषा** आत्मज्योतिषा ज्ञानेन वा **आवृतः** प्रावृतः, आच्छादितो देदीप्यमानो विराजते ॥ ३१ ॥

तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।
तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ३२ ॥

तस्मिन् । हिरण्यये । कोशे । त्रिऽअरे । त्रिऽप्रतिस्थिते ।
तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् । तत् । वै ।
ब्रह्मऽविदः । विदुः ॥ ३२ ॥

त्र्यरे बाल्य-यौवन-जरात्मकाः त्रयः त्रिविधा अराः यत्र तादृशे । यद्वा—त्रिगुणात्मिकायाः प्रकृतेस्त्रैगुण्यमया अराः यत्र तस्मिन्, तादृशे । **त्रिप्रतिष्ठिते** काय-मनो-वाक्सम्बन्धिषु कर्मसु प्रतिष्ठिते । यद्वा—स्थूल-सूक्ष्म-कारणशरीरेषु निहिते, **तस्मिन् हिरण्यये कोशे** सुवर्णमये दहराकाशे **यद् आत्मन्वत्** आत्मसंयुक्तं **यक्षं** यजनीयं परं ब्रह्म विद्यते, तत् परं ब्रह्म **ब्रह्मविदः** ब्रह्मवेत्तारो महर्षयः **वै** एव **विदुः** जानन्ति ॥ ३२ ॥

प्रभ्राजमानां हरिणीं यशसा संपरीवृताम् ।
पुरं हिरण्ययीं ब्रह्मा विवेशापराजिताम् ॥ ३३ ॥

प्रऽभ्राजमानाम् । हरिणीम् । यशसा । सम्ऽपरिवृताम् ।
पुरम् । हिरण्ययीम् । ब्रह्मा । आ । विवेश । अपराऽजिताम् ॥ ३३ ॥

**प्रभ्राजमानां** प्रकृष्टगुणगणैः भासमानां, दीप्तिमतीं **हरिणीं** त्रिविध-दुःखविनाशिनीं **यशसा** यशोद्रवेण सोमात्मकेन **संपरिवृतां** परितः व्याप्ताम्, अपराजिताम् असुरादिभिः अजेयाम् एतादृशीं **हिरण्ययीं** हितां रमणीयां **पुरम्** अयोध्यानाम्नीं नगरीं **ब्रह्मा** परं ब्रह्म **विवेश** प्रविवेश, निवासमकरोत् ॥ ३३ ॥

## तृतीयं सूक्तम् : सपत्नक्षयणो वरणमणिः

(१–२५) ऋषिः—**अथर्वा** । देवता—**वरणमणिः, वनस्पतिः चन्द्रमाश्च** । छन्दः—१, ४, ५, ७, ९, १०, १२ **अनुष्टुप्**; २, ३, ६ **भुरिक् त्रिष्टुप्**; ८, १३, १४ **पथ्यापङ्क्तिः**; ११, १६ **भुरिक्**; १५, १७–२५ **षट्पदा जगती** ।

**विनियोगः**—अस्मिन् सूक्ते वरणस्य नाम्नः मणेः प्रतापो वीर्यं शत्रुक्षयसामर्थ्यं धारयितुः सर्वदुःखपरिहरणं च वर्ण्यते। तदनुसारमेव सांप्रदायिकास्तद् विनियोजयन्ति। यथा—शत्रुक्षयादिकामः 'अयं मे वरणः' इत्यर्थसूक्तेन दध्नि मधुनि च त्रिरात्रं वासितं वरणमणिं संपात्य अभिमन्त्र्य बध्नीयात्। सूत्रितं हि—'अयं मे वरणः' (अथर्व० १०.३) 'अरातीयोः' (अथर्व० १०,६) इति मन्त्रोक्तान् वासितान् बध्नाति' (कौ० सू० १९.२२) इति। तथा 'अभयां भयार्तस्य' (शा० क० १७.५) इति विहितायाम् अभयाख्यायां महाशान्तौ वरणमणिबन्धनेऽपि एतत् सूक्तं विनियुज्यते। उक्तं हि शान्तिकल्पे—'अयं मे वरणो मणिरिति वारणम् अभयायाम्' (शा० क० १९.८) इति।

अयं मे वरणो मणिः संपत्नक्षयंणो वृषा।
तेना रंभस्व त्वं शत्रून् प्र मृणीहि दुरस्यतः॥ १॥

अयम्। मे। वरणः। मणिः। सपत्नऽक्षयंणः। वृषा। तेनं। आ। रभस्व। त्वम्। शत्रून्। प्र। मृणीहि। दुरस्यतः॥ १॥

**अयं मे मम वरणः मणिः** वरणवृक्षविशेषस्य, ओषधिविशेषस्य वा (भावप्रकाशः पूर्वख०, वटादिवर्गः, श्लोक ५६-५७) काष्ठेन निर्मितो मणिः **वृषा** कामानां वर्षको बलवीर्योपेतो वा, **सपत्नक्षयणः** शत्रुविनाशकश्चास्ति। **तेन** मणिना **त्वं** शत्रोर्वधाय **आरभस्व** उद्योगं कुरु, तं निगृहाण वा। **दुरस्यतः** दुर्गतिं कामायमानान् **प्रमृणीहि** प्रकर्षेण मारय॥ १॥

प्रैणाञ्छृणीहि प्र मृणा रंभस्व मणिस्ते अस्तु पुरएता पुरस्तात्।
अवारयन्त वरणेन देवा अभ्याचारमसुराणां श्वःश्वः॥ २॥

प्र। एनान्। शृणीहि। प्र। मृण। आ। रभस्व। मणिः। ते। अस्तु। पुरःऽएता। पुरस्तात्। अवारयन्त। वरणेन। देवाः। अभिऽआचारम्। असुराणाम्। श्वःऽश्वः॥ २॥

एनान् शत्रून् असुरान् वा प्रशृणीहि प्रकृष्टतया जहि 'शृ हिंसायाम्' (तुदादि०) प्रमृण मारय, आरभस्व निगृहाण, हननाय सुभृशमुत्तिष्ठ वा। ते तव पुरस्तात् समक्षं सर्वकार्येषु सततं एष मणिः पुरएता अग्रगामी अस्तु भवतु। देवाः सर्वे वरणेन वरणमणेः साहाय्येन असुराणाम् आसुरशक्तीनाम् अभ्याचारम् अभिचारप्रयोगम् श्वः श्वः प्रत्यहं अवारयन्त निष्फलमकुर्वन् ॥ २ ॥

अयं मणिर्वरणो विश्वभेषजः सहस्राक्षो हरितो हिरण्ययः ।
स ते शत्रूनधरान् पादयाति पूर्वस्तान् दभ्नुहि ये त्वा द्विषन्ति॥३॥

अयम् । मणिः । वरणः । विश्वऽभेषजः । सहस्रऽअक्षः । हरितः । हिरण्ययः । सः । ते । शत्रून् । अधरान् । पादयाति । पूर्वः । तान् । दभ्नुहि । ये । त्वा । द्विषन्ति ॥ ३ ॥

अयं वरणः मणिः विश्वभेषजः समस्तव्याधीनां दुःखानां वा प्रतीकारकर्ता सर्वौषधः, सहस्राक्षः सहस्रेन्द्रियः, इन्द्रियाणां सहस्रशक्तिभिः सम्पन्नः। हरितः दुःखानां हरणकर्ता, हिरण्ययः हितकारी रमणीयश्च अस्ति। एतादृशः सः वरणो मणिः ते तव शत्रुवधकामस्य शत्रून् अरीन् अधरान् अधस्तात्, नीचैः पादयाति निपातयति, निपातयिष्यति, 'वर्तमानसामीप्ये वर्तमानवद्वा'। ये अरयः त्वा त्वाम् द्विषन्ति वैरायन्ते, तथैवाचरन्ति च पूर्वः प्रथमं तान् दभ्नुहि दम्भय, भूमिसात् कुरु, वशीकुरु वा ॥ ३ ॥

अयं ते कृत्यां विततां पौरुषेयादयं भयात् ।
अयं त्वा सर्वस्मात् पापाद् वरणो वारयिष्यते ॥ ४ ॥

अयम् । ते । कृत्याम् । विऽतताम् । पौरुषेयात् । अयम् । भयात् । अयम् । त्वा । सर्वस्मात् । पापात् । वरणः । वारयिष्यते ॥ ४ ॥

अयं वरणः मणिः ते त्वां प्रति विततां शत्रुद्वारा प्रसृताम्, प्रयुक्तां कृत्यां कृत्याप्रयोगं वारयिष्यते निवारयिष्यति। अयम् मणिः त्वा त्वाम् पौरुषेयात् मानवसमुत्पादितात् भयात् सर्वस्मात् पापात् च मोचयिष्यति ॥ ४ ॥

वरणो वारयाता अयं देवो वनस्पतिः ।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् ॥ ५ ॥

वरणः । वारयातै । अयम् । देवः । वनस्पतिः ।
यक्ष्मः । यः । अस्मिन् । आऽविष्टः । तम् ।
ऊं इति । देवाः । अवीवरन् ॥ ५ ॥

**अयं देवः** दिव्यगुणोपेतः **वनस्पतिः** वरणनामकात् वनस्पतेर्निष्पन्नः औषधरूपो **वरणः** मणिः **वारयातै** व्याध्यादिशत्रून् शोकादींश्च निवारयिष्यति । **यः यक्ष्मः** रोगः **अस्मिन्** पुरुषे **आविष्टः** प्रविश्य एनं समाक्रान्तवान्, **तं** रोगं **उ** निश्चयेन **देवाः** देवताः दिव्यौषधिसम्पन्नाः भिषजो वा **अवीवरन्** न्यवारयन् । पुनरुक्तोऽयं मन्त्रः (अथर्व० ६. ८५. १) ॥ ५ ॥

अस्यैव मन्त्रस्यान्यकाण्डान्तर्गतस्य पुरस्तात् सायणभाष्यं पाठकानाम् उपकृतये यथावत् इहोपन्यस्यते—अयं पुरोवर्ती देवः दानादिगुणयुक्तः वरणः वरणाख्यो वनस्पतिः वनानाम् अधिपतिर्वृक्षः । विकारे प्रकृतिशब्दः । वरणवृक्षनिर्मितो मणिः वारयातै राजयक्ष्मादिरोगं वारयतु निवर्तयतु । वारयतेर्लेटि आडागमः । 'वैतोन्यत्र' इति ऐकारः । अस्मिन् पुरुषे यो यक्ष्मः रोग आविष्टः प्रविष्टः । तमु, उशब्दः अप्यर्थे । तं सर्वमपि रोगं देवा इन्द्रादयः सर्वे अवीवरन् वारयन्तु । वारयतेश्छान्दसे लुङि चङि रूपम् ।

स्वप्नं सुप्त्वा यदि पश्यासि पापं मृगः सृतिं यति धावादजुष्टाम् ।
परिक्षवाच्छकुनेः पापवादादयं मणिर्वरणो वारयिष्यते ॥ ६ ॥

स्वप्नम् । सुप्त्वा । यदि । पश्यासि । पापम् । मृगः । सृतिम् ।
यति । धावात् । अजुष्टाम् । परिऽक्षवात् । शकुनेः ।
पापऽवादात् । अयम् । मणिः । वरणः । वारयिष्यते ॥ ६ ॥

**सुप्त्वा** रात्रौ निद्रितो भूत्वा **यदि पापं** पापरूपम् अशुभं स्वप्नम् दुःस्वप्नं **पश्यासि, यति** दस्य तः । अथवा इण्धातोः शतृप्रत्यये यणादेशो च सप्तम्येकवचनम् । यदि त्वयि मार्गे गच्छति सति **मृगः**

मृगबिडालादिपशुः **अजुष्टाम्** असेवितां विरुद्धां **सृतिं** सरणिं **धावात्** प्रधावेत्, **शकुनेः** गृध्रादिपक्षिणः **पापवादात्** भविष्यद्-विपत्तिसूचकात् विशिष्टध्वनेः **परिक्षवात्** नासातो वायुनिस्सरणजन्यशब्दात् 'छींक' इति भाषाभाषितात् सर्वस्मात् एतादृशात् पापात् अनिष्टसूचकात् **अयं वरणः मणि : वारयिष्यते** मोचयिष्यतीति भावः ॥ ६ ॥

अरा॑त्यास्त्वा॒ निर्ऋ॑त्या अभिचा॒राद॒थो॑ भ॒यात् ।
मृ॒त्योरोजी॑यसो व॒धाद् व॑र॒णो वा॑रयिष्यते ॥ ७ ॥

अरा॑त्याः । त्वा॒ । निःऽऋ॑त्याः । अ॒भि॒ऽचा॒रात् । अथो॒ इति॑ । भ॒यात् । मृ॒त्योः । ओजी॑यसः । व॒धात् । व॒र॒णः । वा॒र॒यि॒ष्य॒ते॒ ॥ ७ ॥

**अयं वरणः** मणिः **त्वा** त्वाम् **अरात्याः** अदानशीलतायाः **निर्ऋत्याः** निर्ऋतिः पापदेवता, मृत्युदेवता वा, तादृशदेवतायाः, कृच्छ्रापत्तेर्वा सकाशात्, **अभिचारात्** अभिचारप्रयोगात् **अथो** अपि च अन्यस्मात् **भयात्** भयजातात्, किं बहुना, **ओजीयसः** बलवतः **मृत्योः वधात्** हिंसनात् अपि **वारयिष्यते** निवारयिष्यति ॥ ७ ॥

यन्मे॑ मा॒ता यन्मे॑ पि॒ता भ्रात॑रो॒ यच्च॑ मे॒ स्वा यदेन॑श्चकृ॒मा व॒यम् ।
ततो॑ नो वारयिष्यते॒ऽयं दे॒वो वन॒स्पति॑ः ॥ ८ ॥

यत् । मे॒ । मा॒ता । यत् । मे॒ । पि॒ता । भ्रात॑रः । यत् । च॒ । मे॒ । स्वाः । यत् । एन॑ः । च॒कृ॒म । व॒यम् । तत॑ः । नः॒ । वा॒र॒यि॒ष्य॒ते॒ । अ॒यम् । दे॒वः । वन॒स्पति॑ः ॥ ८ ॥

**यत् एनः** पापं **मे** मम **माता, यत् मे पिता, यत् भ्रातरः, यत् स्वाः** सम्बन्धिनश्च कृतवन्तः **च** तथा यत् **वयम्** अपि **चकृमः** अकरवाम, **ततः** पापात् **अयं देवः** दिव्यगुणोपेतः **वनस्पतिः** वरणात् वनस्पतेः समुत्पन्नः वरणो मणिः **नः** अस्मान् **वारयिष्यते** मोचयिष्यति ॥ ८ ॥

व॒र॒णेन॒ प्रव्य॑थिता॒ भ्रातृ॑व्या मे॒ सब॑न्धवः ।
अ॒सूर्तं॒ रजो॒ अप्य॑गुस्ते॒ यन्त्वध॒मं तम॑ः ॥ ९ ॥

वरणेन । प्रऽव्यथिताः । भ्रातृव्याः । मे । सऽबन्धवः । असूर्तम् । रजः । अपि । अगुः । ते । यन्तु । अधमम् । तमः ॥ ९ ॥

**मे** मम **भ्रातृव्याः** शत्रवः **सबन्धवः** बन्धुबान्धवसहिताः **वरणेन** वरणमणेः प्रभावेण **प्रव्यथिताः** प्रपीडिताः **असूर्तम्**, नञ्पूर्वात् 'सृ गतौ' धातोः क्त-प्रत्ययः, असरणशीलम् अगन्तव्यं **रजः** लोकम् **अगुः** प्राप्नुवन्। **अपि** अथापि **ते** भ्रातृव्याः **अधमं तमः** प्रकाशरहिताम् अधमां योनिं **यन्तु** प्राप्नुवन्तु, अन्धे तमसि निमज्जन्त्विति भावः ॥ ९ ॥

अरिष्टोऽहमरिष्टगुरायुष्मान्त्सर्वपूरुषः ।
तं माऽयं वरणो मणिः परि पातु दिशोदिशः ॥ १० ॥

अरिष्टः । अहम् । अरिष्टऽगुः । आयुष्मान् । सर्वऽपुरुषः । तम् । मा । अयम् । वरणः । मणिः । परि । पातु । दिशःऽदिशः ॥ १० ॥

**अहम् अरिष्टः** अहिंसितः अवध्यो वा । **अरिष्टगुः** 'गौर्वाङ् नाम' (निघ० १.११) : 'गोस्त्रियोरुपसर्जनस्य' (पा० १.२.४८) इत्यनेन गोर्ह्रस्वः, अहिंसितविद्यः, **आयुष्मान्** चिरञ्जीवी, **सर्वपुरुषः** बन्धु-बान्धवादिसम्पन्नश्च स्याम् । **तं** तादृशं **मा** माम् **अयं वरणः मणिः दिशः दिशः** सर्वाः दिशः **परिपातु** रक्षतु ॥ १० ॥

अयं मे वरण उरसि राजा देवो वनस्पतिः ।
स मे शत्रून् वि बाधतामिन्द्रो दस्यूनिवासुरान् ॥ ११ ॥

अयम् । मे । वरणः । उरसि । राजा । देवः । वनस्पतिः । सः । मे । शत्रून् । वि । बाधताम् । इन्द्रः । दस्यून्ऽइव । असुरान् ॥ ११ ॥

**अयं वनस्पतिः** वरणवनस्पतेर्निर्मितः **वरणः** मणिः **देवः** दिव्यगुण-सम्पन्नः सन् **मे उरसि** वक्षसि सन्धारितः सन् **राजा** तेजसा देदीप्यमानो भासते । **सः मे** मम **शत्रून्** अरीन् सर्वान् **विबाधताम्** निवारयताम् । तत्र दृष्टान्तः—**इव** यथा **इन्द्रः** देवाधिदेवः **दस्यून्** चौरान् उपक्षयकारिणः **असुरान्** विबाधते, तद्वत् ॥ ११ ॥

इमं बिभर्मि वरणमायुष्मान्छतशारदः ।
स मे राष्ट्रं च क्षत्रं च पशूनोजश्च मे दधत् ॥ १२ ॥

इमम् । बिभर्मि । वरणम् । आयुष्मान् । शतऽशारदः ।
सः । मे । राष्ट्रम् । च । क्षत्रम् । च । पशून् । ओजः । च ।
मे । दधत् ॥ १२ ॥

अहम् इमं **वरणम्** वरणमणिं **बिभर्मि** धारयामि, येन **शतशारदः आयुष्मान्** शतवर्षजीवी दीर्घायुः भवेयम् । **च** तथा **सः** मणिः **मे** मम राष्ट्रं **च क्षत्रम्** क्षात्रबलम् **च पशून्** गोऽश्वादिपशून् **च मे** मह्यम् **ओजः** बलम् **दधत्** धारयतु, पोषयतु ॥ १२ ॥

यथा वातो वनस्पतीन् वृक्षान् भनक्त्योजसा ।
एवा सपत्नान् मे भङ्‌ग्धि पूर्वान् जाताँ
उतापरान् वरणस्त्वाऽभि रक्षतु ॥ १३ ॥

यथा । वातः । वनस्पतीन् । वृक्षान् । भनक्ति । ओजसा ।
एव । सऽपत्नान् । मे । भङ्‌ग्धि । पूर्वान् । जातान् । उत ।
अपरान् । वरणः । त्वा । अभि । रक्षतु ॥ १३ ॥

**यथा वातः** प्रभञ्जनः **ओजसा** प्रबलजवेन प्रवहमानः **वनस्पतीन्** स्वल्पवृक्षान् **वृक्षान्** अश्वत्थादिमहामहीरुहांश्च **भनक्ति** खण्डयति, उत्पाटयति **एव** एवमेव **मे** मम **पूर्वान् जातान्** पूर्वोत्पन्नान् **उत** अथवा **अपरान्** पश्चात् जातान् **सपत्नान्** अरीन् **भङ्‌ग्धि** भिन्धि, विनाशय । **वरणमणिः त्वा** त्वाम् **अभिरक्षतु** पातु ॥ १३ ॥

यथा वातश्चाग्निश्च वृक्षान् प्सातो वनस्पतीन् ।
एवा सपत्नान् मे प्साहि पूर्वान्० ॥ १४ ॥

यथा । वातः । च । अग्निः । च । वृक्षान् । प्सातः । वनस्पतीन् । एव । सऽपत्नान् । मे । प्साहि । पूर्वान् ।० ॥१४॥

**यथा वातः** प्रभञ्जनः **च** तथा **अग्निः** च उभौ मिलित्वा, पृथक् पृथक् वा, **वृक्षान्** वनस्पतीन् **प्सातः** भक्षयतः, 'प्सा भक्षणे' (अदादिः), **एवा॰** इत्यादि पूर्ववत् ।। १४ ।।

यथा वातेन प्रक्षीणा वृक्षाः शेरे न्यर्पिताः ।
एवा सपत्नांस्त्वं मम प्र क्षिणीहि न्यर्पय ।
पूर्वान् जाताँ उतापरान् वरणस्त्वाऽभि रक्षतु ।। १५ ।।

यथा । वातेन । प्रऽक्षीणाः । वृक्षाः । शेरे । निऽअर्पिताः । एव । सऽपत्नान् । त्वम् । मम । प्र । क्षिणीहि । नि । अर्पय । पूर्वान् । जातान् । उत । अपरान् । वरणः । त्वा । अभि । रक्षतु ।। १५ ।।

**यथा वातेन** प्रभंजनेन **प्रक्षीणाः** जीर्णीभूताः वृक्षाः **न्यर्पिताः** शरैः नीचीकृताः, **शेरे** भूमौ शेरते, 'शेरे' इति छान्दसं रूपम्, **एवा** एवमेव त्वं **मम पूर्वान्** पूर्वजातान् **उत अपरान्** पश्चाद्भवान् **सपत्नान् न्यर्पय** भूमौ अधस्तात् पातय । **प्रक्षिणीहि** विनाशय । **वरणः** मणिः **त्वा** त्वाम् **अभिरक्षतु** ।। १५ ।।

तांस्त्वं प्र च्छिन्द्धि वरण पुरा दिष्टात् पुरायुषः ।
य एनं पशुषु दिप्सन्ति ये चास्य राष्ट्रदिप्सवः ।। १६ ।।

तान् । त्वम् । प्र । छिन्द्धि । वरण । पुरा । दिष्टात् । पुरा । आयुषः । ये । एनम् । पशुषु । दिप्सन्ति । ये । च । अस्य । राष्ट्रऽदिप्सवः ।। १६ ।।

**वरण** ! हे वरणमणे ! **तान् त्वं प्रच्छिन्द्धि** छिन्न-भिन्नान् कुरु **पुरा** पूर्वमेव **दिष्टात्** भाग्यात् **पुरा** पूर्वमेव **आयुषः** आयुष्यात् जीवनात् वा, **ये एनम्** यजमानं **पशुषु दिप्सन्ति** पशुषु रोगं प्रसार्य, तान् क्षीणं विधातुं वाञ्छन्ति **च** तथा **ये अस्य** यजमानस्य **राष्ट्रदिप्सवः** राज्यं विनाशयितुमिच्छन्तीति ।। १६ ।।

यथा सूर्यो अतिभाति यथाऽस्मिन् तेज आहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु ।
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥ १७ ॥

यथा । सूर्यः । अतिऽभाति । यथा । अस्मिन् । तेजः । आऽहितम् । एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु । तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु । मा ॥ १७ ॥

इतः सूक्तान्तं यावत् नवमन्त्रैः सूर्ये, चन्द्रमसि, पृथिव्याम्, अग्नौ, सुकन्यायाम्, रथे, सोमपीथे, मधुपर्के, अग्निहोत्रे, वषट्कारे, यजमाने, यज्ञे, प्रजापतौ, परमेष्ठिनि च यथा यशः आहितम्, देवेषु च यथा अमृतं सत्यञ्च आहितं तथैव भूति-तेजःसहितं यशः वरणमणेः सकाशात् प्रार्थ्यते—**यथा सूर्यः अतिभाति** अत्यधिकं प्रकाशते, **यथा** च **अस्मिन्** सूर्ये **तेजः** दीप्तिः **आहितम्** सततं सन्निहिता सन्तिष्ठते, **एवा** एवमेव अयं **वरणः मणिः मे** मह्यं **कीर्ति** यशः **भूतिम्** ऐश्वर्यं च **नियच्छतु** प्रददातु । **तेजसा** दीप्त्या **मा** माम् **समुक्षतु** वर्धयतु, सिञ्चतु, मयि तेजस्वितां सन्दधातु । **मा** माम् **यशसा समनक्तु** प्रदीपयतु, मां यशस्विनं विदधात्वित्यर्थः ॥ १७ ॥

यथा यशश्चन्द्रमस्यादित्ये च नृचक्षसि । एवा मे० ॥ १८ ॥

यथा । यशः । चन्द्रमसि । आदित्ये । च । नृऽचक्षसि । एव । मे । ० ॥ १८ ॥

**यथा चन्द्रमसि** विधौ **च नृचक्षसि** सर्वद्रष्टरि सूर्ये **यशः** क्रमशः शान्तिप्रदत्वरूपं तमोनिवारकत्वरूपञ्च यशः आहितम्, **एवा मे** इत्यादि पूर्ववत् ॥ १८ ॥

यथा यशः पृथिव्यां यथाऽस्मिन् जातवेदसि । एवा० ॥ १९ ॥

यथा । यशः । पृथिव्याम् । यथा । अस्मिन् । जातऽवेदसि । ० ॥ १९ ॥

यथा पृथिव्यां भमौ यथा वा अस्मिन् जातवेदसि अग्नौ यशः क्रमशः भूतधातृत्वरूपं सर्वपाचकत्वरूपञ्च यशः आहितम्, एवा मे इत्यादि पूर्ववत् ॥ १९ ॥

यथा यशः कन्यायां यथाऽस्मिन्त्संभृते रथे । एवा० ॥ २० ॥

यथा । यशः । कन्यायाम् । यथा । अस्मिन् । सम्ऽभृते । रथे । ० ॥ २० ॥

यथा कन्यायां शुद्धचरितायां कुमारिकायाम् यथा च अस्मिन् संभृते सर्वोपकरणवति सम्यक् सुसज्जिते रथे यशः पूर्वापरसप्त-कुलोत्तारणरूपम् अभीष्टस्थानप्रापकत्वरूपञ्च यशः आहितम्, एवा मे इत्यादि पूर्ववत् ॥ २० ॥

यथा यशः सोमपीथे मधुपर्के यथा यशः । एवा० ॥ २१ ॥

यथा । यशः । सोमऽपीथे । मधुऽपर्के । यथा । यशः । एव । मे० ॥ २१ ॥

यथा सोमपीथे सोमसवने सोमपाने यथा च मधुपर्के मध्वाज्यादि-मिश्रणविशेषे यशः ज्ञानप्रकाशप्राप्तिरूपम्, अतिथिसन्तर्पणरूपञ्च यशः आहितम्, एवा मे इत्यादि पूर्ववत् ॥ २१ ॥

यथा यशोऽग्निहोत्रे वषट्कारे यथा यशः । एवा० ॥ २२ ॥

यथा । यशः । अग्निऽहोत्रे । वषट्ऽकारे । यथा । यशः । ० ॥ २२ ॥

यथा अग्निहोत्रे यथा च वषट्कारे यशः अग्नौ प्रास्ताहुत्या वृष्टि-पूर्वकान्नसमृद्धिकरणरूपम्, पितृसन्तर्पणे च कुलाभिवृद्धिकारित्वरूपञ्च यशः आहितम्, एवा मे इत्यादि पूर्ववत् ॥ २२ ॥

यथा यशो यजमाने यथाऽस्मिन् यज्ञ आहितम् । एवा० ॥ २३ ॥

यथा । यशः । यजमाने । यथा । अस्मिन् । यज्ञे । आऽहितम् । ० ॥ २३ ॥

**यथा यजमाने यथा** च **अस्मिन् यज्ञे यशः** श्रौत-स्मार्तपरम्परा-रक्षणरूपम्, सर्ववर्णानां सन्तृप्तिकरणरूपञ्च यशः **आहितम्, एवा मे** इत्यादि पूर्ववत् ।। २३ ।।

यथा यशः प्रजापतौ यथास्मिन् परमेष्ठिनि । एवा० ।। २४ ।।

यथा । यशः । प्रजाऽपतौ । यथा । अस्मिन् ।
परमेऽस्थिनि । ० ।। २४ ।।

**यथा प्रजापतौ यथा च अस्मिन्** परमेष्ठिनि **यशः** सृष्टिकर्तृत्वरूपम्, सर्वोत्कृष्टस्थानस्थितिरूपञ्च यशः **आहितम्, एवा मे** इत्यादि पूर्ववत् ।। २४ ।।

यथा देवेष्वमृतं यथैषु सत्यमाहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु ।
तेजसा मा समुक्षतु यशसा समनक्तु मा ।। २५ ।।

यथा । देवेषु । अमृतम् । यथा । एषु । सत्यम् । आऽहितम् ।
एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु ।
तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु ।
मा ।। २५ ।।

**यथा देवेषु** इन्द्रादिदेवानां समीपे **अमृतं** विद्यते, **यथा एषु** देवेषु **सत्यं आहितम्** प्रतिष्ठितम्, **एवा मे** इत्यादि पूर्ववत् ।। २५ ।।

## चतुर्थं सूक्तम् : सर्पविष-दूरीकरणम्

(१–२६) ऋषिः—गरुत्मान् । देवता – तक्षकः । १ पथ्यापङ्क्तिः २ त्रिपदा यवमध्यागायत्री; ३,४ पथ्या बृहती; ५–७,९–११,१३–१५,१७–२०, २२,२४,२५ अनुष्टुप्; ८ उष्णिग्गर्भा परा त्रिष्टुप्; १२ भुरिग्गायत्री; १६ त्रिपदा प्रतिष्ठा गायत्री; २१ ककुम्मती; २३ त्रिष्टुप्; २६ त्र्यवसाना षट्पदा बृहती गर्भा ककुम्मती भुरिक् त्रिष्टुप् ।।

विनियोगः—अस्मिन् सूक्ते नानासर्पास्तेषां च विषाणि तत्तत्प्रती-काराश्च कविवाग्विषयाः । सर्पविषभैषज्ये च मन्त्राः । सर्पविषहारिकाश्च

काश्चिदोषधयः। साम्प्रदायिकाः सूक्तमिदमेवं विनियोजयन्ति। यथा— विषभैषज्ये कर्मणि 'इन्द्रस्य प्रथमः' इत्यर्थसूक्तस्य 'ब्राह्मणो जज्ञे' (अथर्व० ४.६) इति सूक्तवद् विनियोगोऽवगन्तव्यः। तथा तत्रैव कर्मणि अनेन सूक्तेन पैद्वं पिष्ट्वा अभिमन्त्र्य दक्षिणेनाङ्गुष्ठेन दक्षिण-नासापुटे नस्यं ददाति। 'पैद्वम्=कीटकम्, 'तालिणीति' लोकप्रसिद्धम्। तं पिष्ट्वा (कौ० सू० ३२.२१) इति केशवः। पैद्वम् हिरण्यवर्णसदृशः कीटश्चित्रितो वा स पैद्व इत्युच्यते (कौ० सू० ३२.१२) इति च। तथा 'अहिभये अनेन सूक्तेन श्वेतवस्त्रवेष्टितं पैद्वम् अभिमन्त्र्य यत्र सर्पभयं तत्र निखनति' (कौ० सू० ३२.२२) इति केशवः। 'सर्पाद्भये पैद्वं वस्त्रे बद्ध्वा स्थापयति तस्मिन् वेश्मनि' इति दारिलः।

शङ्काविषभैषज्ये कर्मणि 'अङ्गादङ्गात् प्र च्यावय' (२५) इति ऋचा सर्पदष्टं शिरःप्रभृति आप्रपदान्तं हस्तेन मार्ष्टि। तत्रैव कर्मणि 'आरे अभूत्' (२६) इति ऋचा उल्मुकं प्रताप्य अभिमन्त्र्य ततो विषव्रणं दृष्ट्वा तत्संमुखं क्षिपति। सर्पादर्शने यतो दष्टस्ततो निरस्यति उल्मुकम्। तदुक्तं कौशिकेन–'इन्द्रस्य प्रथमः' इति तक्षकायेत्युक्तम्। पैद्वं प्रकर्ष्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां न स्तः। अहिभये सिच्यवगूह-यति। 'अङ्गादङ्गात्' इत्याप्रपदात्। 'देश्मोत्तमया निताप्याहिमभि निरस्यति यतो दष्टः' (कौ० सू० ३२,२०-२५) इति।

**इन्द्रस्य प्रथमो रथो देवानामपरो रथो वरुणस्य तृतीय इत्।**
**अहीनामपमा रथ स्थाणुमारदथार्षत् ॥ १ ॥**

**इन्द्रस्य। प्रथमः। रथः। देवानाम्। अपरः। रथः।**
**वरुणस्य। तृतीयः। इत्। अहीनाम्। अपऽमा।**
**रथः। स्थाणुम्। आरत्। अथ। अर्षत् ॥ १ ॥**

**इन्द्रस्य** देवाधिदेवस्य **प्रथमः रथः** स्पर्धायाम् अग्रगामी, प्रमुखः रथः। तदनन्तरं **देवानाम् रथः अपरः** द्वितीयः इन्द्ररथस्य पश्चाद्गामी अस्ति। **वरुणस्य** अपामधिपतेः **तृतीयः इत्** तृतीयस्थाने एव रथः प्रचलति। **अहीनां** सर्पाणां रथः पुनः स्पर्धायाम् **अपमा**, 'अप'पूर्वात् 'माङ माने' इत्यस्मात् डः, 'सुपां सुलुक्०' (पा० ७.१. ३९) इत्यनेन विभक्तेराकारः। तथा च **अवमः**, निकृष्टः, अधमः नीच-

स्थानं प्रतिगन्ता **रथः**। 'अहिरयनादेति अन्तरिक्षे, अयमपीतरोऽहि-रेतस्मादेव, निर्ह्रसित उपसर्ग आहन्तीति' (निरु० २.१७)। सोऽहिरथः **स्थाणुं** लतागुल्मादिकम् **आरत्** प्राप्नोति। **अथ** अधुना स **अर्षत्** अस्मात् स्थानात् गच्छतु, निर्गच्छत्विति। **अध्यात्मपक्षे**—इन्द्रियाणामधिपतेः **इन्द्रस्य** दिव्यमनसः रथः रहणं गमनं सर्वातिशायिवेगतया **प्रथमः** प्रमुखम्। तत्पश्चात् **देवानाम्** इन्द्रियाणां तस्मात् न्यूनवेगतया **तद्रथस्य** द्वितीयं स्थानं भवति। देहमध्ये रसरक्ताद्यपाम् अधीश्वरस्य **वरुणस्य** रथः देवापेक्षया न्यूनवेगत्वात् **तृतीयस्थाने** भवति। **अहीनां** कुटिलवृत्तीनां रथः **अपमा** निकृष्टोऽधोमुखो भवति। स **मनुष्यं स्थाणुत्वं** प्रापयति। एतादृशः स रथः **आर्षत्** अस्मत्सकाशात् दूरे अपगच्छतु॥ १॥

**द॒र्भः शो॒चिस्त॒रूण॑क॒मश्व॑स्य॒ वारः॑ परु॒षस्य॒ वारः॑।**
**रथ॑स्य॒ बन्धु॑रम्॥ २॥**

**द॒र्भः। शो॒चिः। त॒रूण॑कम्। अश्व॑स्य। वारः॑।**
**प॒रु॒षस्य॑। वारः॑। रथ॑स्य। बन्धु॑रम्॥ २॥**

**दर्भः** पवित्रम्, तृणविशेषः, **शोचिः** प्रज्वलितोऽग्निः सूर्यज्योतिर्वा, **तरुणकम्** तृणविशेषः, क्षुद्रनवीनदर्भो वा इति केचित्। **अश्वस्य वारः** अश्वबालैर्निर्मितं दंशमशकादिनिवारणसाधनम् औषधविशेषो वा, **परुषस्य वारः** दण्डपाषाणादिसर्पदूरीकरणसाधनम्, औषध-विशेषो वा। तदेतत् सर्वं **रथस्य** सर्पाणां रंहणस्य गमनस्य **बन्धुरम्** बन्धकरम्। 'नागदमना'ख्यः काष्ठविशेषः हिमाचलप्रदेशे 'नागदौण' इति प्रख्यातः, सोऽपि सर्पगतेः प्रतिबन्धको भवति। **यद्वा—दर्भः** काशः **शोचिः** सर्परथस्य कान्तिः, प्रकाशो वा, **तरुणकम्** क्षुद्रनवीनदर्भः, **अश्वस्य** घोटकस्य **वारः** बालः पुच्छम् **परुषस्य** कठोरदर्भस्य **वारः** पुष्पाणां गुच्छो वा—एतत्सर्वं **सर्परथस्य** सर्पगतेः **बन्धुरम्** स्थितिस्थलं वसतिर्वा भवतीत्यर्थः॥ २॥

**अव॑ श्वेत प॒दा ज॑हि॒ पूर्वे॑ण॒ चाप॑रेण च।**
**उ॒द॒प्लु॒तमि॑व॒ दार्वही॑नामर॒सं वि॒षं वारु॒ग्रम्॥ ३॥**

**अव॑। श्वे॒त॒। प॒दा। ज॒हि॒। पूर्वे॑ण। च॒। अप॑रेण।**

च । उद्प्लुतम्ऽइव । दारुं । अहीनाम् । अरसम् । विषम् । वाः । उग्रम् ॥ ३ ॥

नद्यादिषु जलावगाहने सर्पे समागते सति करणीयमाह—हे **श्वेत** ! गतिमान् तरणकुशल ! **पूर्वेण च अपरेण च** दक्षिणेन सव्येन च **पदा** पादेन तं सर्पम् **अवजहि** ताडय, मा भैषीः । **उदप्लुतम्** जले निमज्जितं **दारु** काष्ठम् **इव**, यथा तत् निःसत्त्वं सारहीनञ्च जायते, तथैव, जलनिवासिनाम् अहीनां सर्पाणां **विषं** गरलम् **अरसं** नीरसं मारणप्रभावशून्यं संपद्यते । यतः **वाः** जलानि **उग्रम्** विषशक्त्युच्चाटने सहजतः समर्थानि भवन्ति । जलीयाः सर्पाः निर्विषाः भवन्तीति लोकप्रसिद्धेः । केचित्तु—श्वेत इति करवीरनाम, तस्याग्रभागो मूलञ्चेति पादद्वयं पादद्वयप्रहारवत् सर्पविषस्य प्रहारकमिति व्याख्यायन्ते ॥ ३ ॥

अरंघुषो निमज्योन्मज्य पुनरब्रवीत् ।
उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम् ॥ ४ ॥

अरम्ऽघुषः । निऽमज्यं । उत्ऽमज्यं । पुनः । अब्रवीत् । उद्प्लुतम्ऽइव । दारुं । अहीनाम् । अरसम् । विषम् वाः । उग्रम् ॥ ४ ॥

**अरंघुषः** अत्यर्थं घोषति, तर्जयते सर्पं यः स तरणकुशलः **निमज्ज्य** जले निलीय **उन्मज्ज्य** जलादुद्गत्य च **पुनः** अब्रवीत् पौनःपुन्येन वारंवारं कथयति यत् **उदप्लुतमिव** इत्यादि पूर्ववत् । अरंघुषः—अलंबुषः 'कटुतुम्बी' स्वभावतः सर्पविषघ्नी । सा यदि विषघ्ने जले निपात्य उन्मज्जिता चेत्साधिकारं वदेत् जलीयसर्पम् 'उदप्लुतमिवे'त्यादि इत्यपि केचित् ॥ ४ ॥

पैद्वो हन्ति कसर्णीलं पैद्वः श्वित्रमुतासितम् ।
पैद्वो रथर्व्याः शिरः सं बिभेद पृदाक्वाः ॥ ५ ॥

पैद्वः । हन्ति । कसर्णीलम् । पैद्वः । श्वित्रम् । उत । असितम् । पैद्वः । रथर्व्याः । शिरः । सम् । बिभेद । पृदाक्वाः ॥ ५ ॥

**पैद्वः** मन्त्रबलेन सर्पाणां गतिप्रतिबन्धकः, यद्वा विषवैद्यः, सर्पवशीकारविद्याविज्ञः **कंसर्णीलम्** कुत्सितायां सरण्यां निलीयमानं सर्पम्, **श्वित्रम्** कर्बुरम् **उत** अपि च **असितं** कृष्णसर्पं **हन्ति** नाशयति। **पैद्वः रथर्व्याः** 'धामन'-नामिकायाः सर्पिण्याः च **पृदाक्वाः** 'पृत्' इति कुत्सितशब्दकारिण्याः सर्पिण्याः 'कडैत' इति भाषाभाषितायाः **शिरः संबिभेद** शिरः सम्यक् भिनन्ति स्म। भाष्यकाराः 'पैद्व'पदस्य विभिन्नानर्थान् प्रकटयन्ति। केचित् करवीर-गिरिकर्णिकाऽश्वक्षुरका-ऽश्वगन्धेत्याद्यासु ओषधिषु काचित् पैद्वाभिधेत्याहुः। विनियोगकाराः पुनः 'पैद्व'पदेन कीटविशेषं गृह्णन्तो वदन्ति यत् 'पैद्वं पिष्ट्वा अभिमन्त्र्य दक्षिणेनाङ्गुष्ठेन दक्षिणनासापुटे नस्यं ददातीति। अतोऽयं नूनं परीक्षणीयो विषयो विशेषज्ञानाम् ॥ ५ ॥

पैद्व प्रेहि प्रथमोऽनु त्वा वयमेमसि।
अहीन् व्यस्यतात् पथो येन स्मा वयमेमसि ॥ ६ ॥

पैद्व। प्र। इहि। प्रथमः। अनु। त्वा। वयम्।
आ। ईमसि। अहीन्। वि। अस्यतात्। पथः।
येन। स्म। वयम्। आऽईमसि ॥ ६ ॥

**पैद्व** हे विषवैद्य! **प्रथमः प्रेहि** सर्वप्रथमं त्वं अग्रे याहि। **वयं त्वा** त्वाम् **अनु** पश्चात् **एमसि** आगच्छामः, अनुसरामः। मार्ग-पतितान् **अहीन्** सर्पान् **पथः** तस्मात् मार्गात् **व्यस्यतात्** इतस्ततः प्रक्षिप, येन **वयम् आ ईमसि** एमसि आगच्छामः। स्मोऽवधारणे ॥ ६ ॥

इदं पैद्वो अजायतेदमस्य परायणम्।
इमान्यर्वतः पदाऽहिघ्न्यो वाजिनीवतः ॥ ७ ॥

इदम्। पैद्वः। अजायत। इदम्। अस्य। पराऽअयनम्।
इमानि। अर्वतः। पदा। अहिऽघ्न्यः। वाजिनीऽवतः ॥ ७ ॥

**इदम्** इति लिङ्गव्यत्ययः, अयम् **पैद्वः अजायत** दृष्टिपथमागतः। यद्वा—**इदं** स्थाननिर्देशकं सर्वनाम, यत्र **पैद्वः अजायत** जन्म लेभे। **अस्य** पैद्वस्य **इदं परायणम्** उत्तमं सद्म, यत्र स पैद्वो निवसति। अस्य

**अर्वतः** शीघ्रगामिनः **वाजिनीवतः** बलवतः **अहिघ्न्यः** सर्पविषविनाशकस्य पैद्वस्य **इमानि** निम्नप्रकाराणि **पदा** पदानि सर्पविषदूरीकरणे क्रमेणावलम्बनीयानि साधनानि सन्तीत्यर्थः। यद्वा—अहिघ्न्यः अहिघ्नस्य, वाजिनीवतः बलशालिनः अर्वतः अश्वस्य पदा पदचिह्नानि सन्ति। संभवतः काचित् एतादृशी ओषधिः अश्ववत् गतिशीला व्यापिका सर्पविषघ्नी च स्यादिति ॥ ७ ॥

संयतं न वि ष्परद् व्यात्तं न सं यमत्।
अस्मिन् क्षेत्रे द्वावही स्त्री च पुमांश्च तावुभावरसा ॥ ८ ॥

सम्ऽयतम्। न। वि। स्परत्। विऽआत्तम्। न।
सम्। यमत्। अस्मिन्। क्षेत्रे। द्वौ। अही इति।
स्त्री। पुमान्। च। तौ। उभौ। अरसा ॥ ८ ॥

हे सर्प ! यत् ते मुखं **संयतं** संकुचितं पिहितं तत् **न विष्परत्** विवृतं न भवेत्, यच्च **व्यात्तं** विवृतं **न** तत् **संयमत्** न संश्लिष्येत्। **अस्मिन्** संमुखीने **क्षेत्रे द्वौ अही** सर्पौ निवसतः। तयोः एकः स्त्रीरूपः **च** अपरः पुंरूपः। **तौ** द्वौ **उभौ अरसा** निर्विषौ स्तः ॥ ८ ॥

अरसास इहाहयो ये अन्ति ये च दूरके।
घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥ ९ ॥

अरसासः। इह। ये। अहयः। ये। अन्ति। ये। च।
दूरके। घनेन। हन्मि। वृश्चिकम्। अहिम्। दण्डेन।
आऽगतम् ॥ ९ ॥

**ये अहयः** सर्पाः **अन्ति** अस्माकं समीपे सन्ति **ये च दूरके** दूरप्रदेशे विद्यन्ते, ते सर्वे अस्माकं सर्पविषघ्नप्रयोगेण **अरसासः** सारहीनाः निर्विषा सञ्जाता इत्यर्थः। अहं **वृश्चिकं** द्रुणम्, छेदकं कीटविशेषं 'अलिद्रुणौ तु वृश्चिके' इत्यमरः ( २. ५. १४ )। **घनेन** मुद्‌गरेण **हन्मि, च आगतम्** आयान्तम् **अहिं दण्डेन** लगुडेन हन्मि, मारयामीत्यर्थः ॥ ९ ॥

अघाश्वस्येदं भेषजमुभयोः स्वजस्य च ।
इन्द्रो मेहिमघायन्तमहिं पैद्वो अरन्धयत् ॥ १० ॥

अघऽअश्वस्य । इदम् । भेषजम् । उभयोः । स्वजस्य ।
च । इन्द्रः । मे । अहिम् । अघऽयन्तम् । अहिम् ।
पैद्वः । अरन्धयत् ॥ १० ॥

**अघाश्वस्य** यस्य विषं शरीरे सपदि व्याप्नोति तस्य उड्डीय दंशकरस्य भुजङ्गविशेषस्य **च** तथा **स्वजस्य** आलिङ्ग्य दंशकस्य सर्पस्य **उभयोः** सर्पयोः **इदम् भेषजम्** सर्पविषविनाशकं औषधमस्ति । **इन्द्रः** इन्द्रदेवः, इन्द्रनामक औषधविशेषो वा **अघायन्तम्** उड्डीय दंशनशीलं भुजङ्गमं तथा **पैद्वः** विषवैद्यः **मे** मम **अहिम्** सर्वसाधारणं सर्पम् **अरन्धयत्** विनाशयतु, अथवा वशीकरोतु । 'दधातिर्वशगमनेऽपि दृश्यते' (निरु० १०.४०) ॥ १० ॥

पैद्वस्य मन्महे वयं स्थिरस्य स्थिरधाम्नः ।
इमे पश्चा पृदाकवः प्रदीध्यत आसते ॥११ ॥

पैद्वस्य । मन्महे । वयम् । स्थिरस्य । स्थिरऽधाम्नः ।
इमे । पश्चा । पृदाकवः । प्रऽदीध्यतः । आसते ॥ ११ ॥

**स्थिरस्य** स्थिरस्वभावस्य **स्थिरधाम्नः** अविचलतेजसश्च **पैद्वस्य** विषये, पैद्वं वा 'अधीगर्थदयेषां कर्मणि षष्ठी (पा० २.३.५२), **मन्महे** चिन्तयामः, ध्यायामः । **इमे पृदाकवः** सर्पाः **प्रदीध्यतः** क्रीडन्तः 'दीधीङ् दीप्ति-देवनयोः' **पश्चा** अस्माकं पृष्ठभागे एव **आसते** तिष्ठति, अस्माकं पुरतो न समायान्तीत्यर्थः ॥ ११ ॥

नष्टासवो नष्टविषा हता इन्द्रेण वज्रिणा ।
जघानेन्द्रो जघ्निमा वयम् ॥ १२ ॥

नष्टऽअसवः । नष्टऽविषाः । हताः । इन्द्रेण ।
वज्रिणा । जघान । इन्द्रः । जघ्निम । वयम् ॥ १२ ॥

**वज्रिणा** वज्रधारिणा **इन्द्रेण** देवाधिपतिना **हताः** मारिताः एते सर्पाः, **नष्टासवः** विगतप्राणाः **नष्टविषाः** गरलरहिताः भवेयुः। **इन्द्रः** देवराजः एनान् **जघान** मारितवान्, वयमपि **जघ्निम** हनाम इति लकार-व्यत्ययः ॥ १२ ॥

हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः ।
दर्विं करिक्रतं श्वित्रं दर्भेष्वसितं जहि ॥ १३ ॥

हताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः । दर्विम् । करिक्रतम् । श्वित्रम् । दर्भेषु । असितम् । जहि ॥ १३ ॥

**तिरश्चिराजयः** तिर्यगवस्थितरेखाः सर्पाः **हताः** नाशिताः। **पृदाकवः** कुत्सितशब्दकारिणः **निपिष्टासः** अतितरां चूर्णिताः। **दर्विं करिक्रतं** करोतेर्यङ्लुकि 'दाधर्तिदर्धर्ति०' (पा० ७.४.६५) इत्यनेन शतृप्रत्ययः, स्वफणं दर्व्याकारं भृशं कुर्वन्तं **श्वित्रं** कर्बुरवर्णं **दर्भेषु** स्थितम् गच्छन्तं वा **असितं** कृष्णसर्पं **जहि** विनाशय ॥ १३ ॥

कैरातिका कुमारिका सका खनति भेषजम् ।
हिरण्ययीभिरभ्रिभिर्गिरीणामुप सानुषु ॥ १४ ॥

कैरातिका । कुमारिका । सका । खनति । भेषजम् । हिरण्ययीभिः अभ्रिऽभिः । गिरीणाम् । उप । सानुषु ॥ १४ ॥

**सका** सा प्रसिद्धा, 'अव्ययसर्वनाम्नामकच् प्राक् टेः' (पा० ५.३.७१) इत्यनेन 'सा' इत्यस्य अकच्। **कैरातिका** भूनिम्बनामा ओषधिः 'चिरायता' इति भाषाभाषिता **कुमारी** घृतकुमारी 'ग्वारपाठा'-नामिका ओषधिः ते उभे विषहन्त्र्यौ **हिरण्ययीभिः** उज्ज्वलाभिः, **अभ्रिभिः** कुदालैः **गिरीणां** पर्वतानां **सानुषु** शिखरेषु **उप** उपरि **खनति** खन्यते। यद्वा—कैरातिका कुमारिका किरातकन्या पर्वतानां शिखरेषु कुदालैः विषघ्न्यः ओषधयः खनति इत्यपि अर्थो बोध्यः ॥ १४ ॥

आयमगन् युवा भिषक् पृश्निहापराजितः ।
स वै स्वजस्य जम्भन उभयोर्वृश्चिकस्य च ॥ १५ ॥

आ । अयम् । अगन् । युवा । भिषक् । पृश्निऽहा । अपराऽजितः । सः । वै । स्वजस्य । जम्भनः । उभयोः । वृश्चिकस्य । च ॥ १५ ॥

अयं पृश्निहा कर्बुरवर्णसर्पिणीनां हन्ता, अपराजितः विषनिवारणे अपराभूत. युवा तरुणः भिषक् वैद्यः आ अगन् आगतवान् । सः वैद्यः वै निश्चयेन स्वजस्य आलिङ्गनशीलस्य सर्पस्य वृश्चिकस्य छेदनकारिणः कीटस्य च उभयोः जम्भनः विनाशकः अस्ति । अथवा–अपराजितानाम्नीम् ओषधिमादाय तद्बलेन विषनिवारणे अपराभूतो युवा भिषगित्यादि पूर्ववत् । निघण्टौ 'अपराजिता'शब्देन 'अश्वक्षुरक'-नाम्नी ओषधिर्गृह्यते या किल विषदोषघ्ना भवति ॥ १५ ॥

इन्द्रो मेऽहिमरन्धयन्मित्रश्च वरुणश्च । वातापर्जन्योभा ॥ १६ ॥

इन्द्रः । मे । अहिम् । अरन्धयत् । मित्रः । च । वातापर्जन्या । उभा ॥ १६ ॥

इन्द्रः देवराजः मे मम घातकम् अहिम् सर्पम् अरन्धयत् मारितवान् । मित्रः च सूर्यः वरुणः च अपां पतिः उभा उभौ तथा वातापर्जन्या पवनः पर्जन्यश्च एतावपि उभौ मे घातकम् अहिम् समये समये अरन्धयत् मारितवन्तः । आसां देवशक्तीनां प्रभावेण एषां सर्पाणां ह्रासो जायेत इति भावः ॥ १६ ॥

इन्द्रो मेऽहिमरन्धयत् पृदाकुं च पृदाक्वम् ।
स्वजं तिरश्चिराजिं कसर्णीलं दशोनसिम् ॥ १७ ॥

इन्द्रः । मे । अहिम् । अरन्धयत् । पृदाकुम् । च । पृदाक्वम् । स्वजम् । तिरश्चिऽराजिम् । कसर्णीलम् । दशोनसिम् ॥ १७ ॥

इन्द्रः देवराजः मे मह्यम् अहिम् सर्प चक्षुः-श्रवसं अरन्धयत् जघान । तथैव पृदाकुं कुत्सितशब्दकारिणं भीषणध्वनिवन्तं सर्पं पृदाक्वम् तत्पत्नीं च पुनः स्वजम् आलिङ्गनशीलम् तिरश्चिराजिम् तिर्यगवस्थितरेखावन्तम्, कसर्णीलम् दुर्गमपथे प्रच्छन्नम्, दशोनसिम् दंशनेन सहैव

प्राणघातकम्, यद्वा स्वल्पदशनवन्तमित्येतान् सर्वान् अहीन् स इन्द्रः अरन्धयत्, हतवान् इत्यन्वयः ॥ १७ ॥

इन्द्रो जघान प्रथमं जनितारमहे तव ।
तेषामु तृह्यमाणानां कः स्वित् तेषामसद् रसः ॥ १८ ॥

इन्द्रः । जघान । प्रथमम् । जनितारम् । अहे । तव । तेषाम् । ऊं इति । तृह्यमाणानाम् । कः । स्वित् । तेषाम् । असत् । रसः ॥ १८ ॥

अहे हे सर्प ! **इन्द्रः** देवाधिपतिः **प्रथमं** आदौ पूर्वमेव **तव जनितारं** जन्मदातारं जनकं **जघान** हतवान् । **तेषां तृह्यमाणानां** हन्यमानानां उ निश्चयेन **कः स्वित् रसः** सारः विषरूपः, **असत्** अवशिष्येत ? न कोऽपि विषसारः स्थातुं शक्नोतीति भावः ॥ १८ ॥

सं हि शीर्षाण्यग्रभं पौञ्जिष्ठ इव कर्वरम् ।
सिन्धोर्मध्यं परेत्य व्य निजमहेर्विषम् ॥ १९ ॥

सम् । हि । शीर्षाणि । अग्रभम् । पौञ्जिष्ठःऽइव । कर्वरम् । सिन्धोः । मध्यम् । पराऽइत्य । वि । अनिजम् । अहेः । विषम् ॥ १९ ॥

हि निश्चयेन अहं सर्पाणां **शीर्षाणि** शिरांसि **समग्रभम्** सम्यक् गृहीतवानस्मि । तत्र दृष्टान्तः—**पौञ्जिष्ठः** पुक्कसः मत्स्यजीवी **इव** यथा **कर्वरम्** नैकविधवर्णयुतं मत्स्यजातं शिरोभिः गृह्णाति । अहं विषवैद्यः **सिन्धोः मध्यम्** नद्याः प्रवाहमध्ये **परेत्य** गत्वा **अहेः विषं व्यनिजम्** शुद्धमकरवम् । वि+असिजम् 'षिजिर् शौचे' । केचन सिन्धोर्मध्यम् नद्याः प्रवाहमध्ये परेत्य गत्वा शिरसि सर्पमादाय अहेस्तस्य विषं पात्रं निपात्य व्यनिजम् शुद्धमकरवम्, औषधरूपेण दातुम्, सर्पविषस्यापि संशुद्धिः परमावश्यकीति व्याचिख्यासुः । मन्यामहे यद् 'विषस्य विषमौषधम्' इति नियममाश्रित्यैवेत्थं व्याख्यातं स्यादिति ॥ १९ ॥

अहीनां सर्वेषां विषं परा वहन्तु सिन्धवः ।
हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः ॥ २० ॥

अहीनाम् । सर्वेषाम् । । विषम् । परा । वहन्तु । सिन्धवः ।
हताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः ॥ २० ॥

**सिन्धवः** नद्यः **सर्वेषाम्** सकलानाम् **अहीनां** सर्पाणां **विषं** गरलं **परावहन्तु** प्रवाहयन्तु, दूरीकुर्वन्तु । **तिरश्चिराजयः** तिर्यग्रेखाभाजः सर्पाः **हताः** विनष्टाः । **पृदाकवः** पृदाकुजातीयाश्च, एते सर्पा अपि **निपिष्टासः** चूर्णीकृताः तिष्ठन्ति ॥ २० ॥

ओषधीनामहं वृण उर्वरीरिव साधुया ।
नयाम्यर्वतीरिवाहे निरैतु ते विषम् ॥ २१ ॥

ओषधीनाम् । अहम् । वृणे । उर्वरीःऽइव । साधुऽया ।
नयामि । अर्वतीःऽइव । अहे । निःऽऐतु । ते । विषम् ॥ २१ ॥

**ओषधीनां** सर्पविषहन्त्रीः ओषधीः, द्वितीयार्थे षष्ठी, **अहं** विषवैद्यः **साधुया** सुखेन **वृणे** प्राप्नुयाम्, तस्या वरणं करोमीत्यर्थः । तत्र दृष्टान्तः— **उर्वरीः इव** यथा उर्वराभूमौ धनधान्यादिकं सुखेन सुलभं भवति, तद्वत् । **अर्वतीः इव** अश्वीः यथा धान्यादिकं नयन्ति तद्वत्, ताः ओषधीः **नयामि**, स्वकीये औषधालये इति शेषः । **अहे** हे सर्प ! **ते विषम्** अधुना **निरैतु** निर्गच्छतु, विषदग्धस्य देहमध्यादिति भावः । यद्वा—ओषधीनाम् विषघ्नौषधीनां मध्ये उर्वरीः ऊरुभिः महद्भिः प्रापणीया ओषधीः अहं विषवैद्यः साधुया सुखेन वृणे, इव पादपूरणार्थं इति केचित् ॥ २१ ॥

यदग्नौ सूर्ये विषं पृथिव्यामोषधीषु यत् ।
कान्दाविषं कनक्नकं निरैत्वैतु ते विषम् ॥ २२ ॥

यत् । अग्नौ । सूर्ये । विषम् । पृथिव्याम् । ओषधीषु । यत् ।
कान्दाऽविषम् । कनक्नकम् । निःऽऐतु । आ । एतु । ते ।
विषम् ॥ २२ ॥

हे विषदग्ध ! **यत्** विषं **अग्नौ, सूर्ये पृथिव्यां,** च **ओषधीषु यत्** विषं जायते तीव्रतापादिप्रभवं विषकल्पं यद्वानिकरं तत्त्वं तेषु जायते, तदित्यर्थः। एवमेव **कान्दाविषम्** कन्द-फलादौ यत् विषं तत्। यद्वा—कन्दो मेघः, तस्माज्जातासु ओषधिषु यद्विषं तत्। **कनक्नकम्** कनके 'धतूरा' इति भाषाभाषिते जातं विषम्, तत् सर्वं **ते** तव त्वचि समागतं विषं मम विषवैद्यस्य चिकित्साप्रभावात् **निरैतु** निर्गच्छतु ॥ २२ ॥

ये अ॒ग्निजा ओष॑धिजा अही॑नां
ये अ॒प्सुजा वि॒द्युत॑ आबभूवुः।
येषां॑ जा॒ताना॑ बहु॒धा म॒हान्ति॒
तेभ्यः॑ स॒र्पेभ्यो॒ नम॑सा विधेम ॥ २३ ॥

ये। अ॒ग्निऽजाः। ओष॒धिऽजाः। अही॑नाम्। ये। अ॒प्सु-ऽजाः। वि॒ऽद्युतः॑। आ॒ऽब॒भूवुः। येषा॑म्। जा॒ताना॑। ब॒हु॒ऽधा। म॒हान्ति॑। तेभ्यः॑। स॒र्पेभ्यः॑। नम॑सा। वि॒धे॒म ॥ २३ ॥

**अहीनां** सर्पाणां मध्ये **ये अग्निजाः** अग्निना जाताः, **ओषधिजाः** ओषधिजन्मानः **अप्सुजाः** जलमध्ये जाताश्च **ये** सर्पाः **विद्युतः** वाचक-लुप्तोपमेयम्, विद्युत इव समन्तात् **आबभूवुः** प्रादुर्बभूवुः, जन्म लेभिरे, एवं **येषां** सर्पाणां **जातानि** जन्मानि **बहुधा** नैकधा अचिन्तनीयानि **महान्ति** आश्चर्यकराणि च सन्ति, **तेभ्यः** सर्वेभ्यः **सर्पेभ्यः** चक्षुश्रवसेभ्यः **नमसा** नमनद्वारा **विधेम** पूजां कुर्मः। नमनात् प्रीतास्ते विषदग्धस्य विषं दूरीकुर्वन्त्वित्यर्थः ॥ २३ ॥

तौदी॒ नामा॑सि क॒न्या॒ घृ॒ताची॒ नाम॒ वा अ॑सि।
अ॒ध॒स्प॒देन॑ ते॒ प॒दमा द॑दे विष॒दूष॑णम् ॥ २४ ॥

तौदी॑। नाम॑। अ॒सि॒। क॒न्या॒। घृ॒ताची॑। नाम॑। वै। अ॒सि॒। अ॒धः॒ऽप॒देन॑। ते॒। प॒दम्। आ। द॒दे॒। वि॒ष॒ऽदूष॑णम् ॥ २४ ॥

हे ओषधे ! त्वं **तौदी नामासि** तव 'तौदी' नाम वर्तते, 'तुद् प्रेरणे'

विषं देहान्निर्गन्तुं प्रेरयति, 'तुद् व्यथने' वा विषं तुदति विनाशयतीति वा। एवमेव त्वं **कन्या घृताची वा नामासि** तव 'कन्या' 'घृताची' इत्याख्ये अपि स्तः। निघण्टौ भद्रैलायाः बृहत्या एलायाः 'बडी इलायची' इत्याख्यायाः नामसु 'कन्या, घृताची'-नामनी मिलतः। भद्रैला च विषघ्नी निगद्यते-'हन्ति कफवातविषव्रणान्' इति स्मरणात्। **ते** तव **अधस्पदेन** पादप्रदेशात् अधःस्थितेन **विषदूषणं** विषविनाशकं **पदं** मूलं 'जड' इति भाषाभाषितम् **आददे** गृह्णामि ॥ २४ ॥

अङ्गा॑दङ्गा॒त् प्र च्या॑वय॒ हृद॑यं॒ परि॑ वर्जय ।
अधा॑ वि॒षस्य॒ यत् तेजो॑ऽवा॒चीनं॒ तदे॑तु ते ॥ २५ ॥

अङ्गा॑त्ऽअङ्गात् । प्र । च्या॒व॒य॒ । हृद॑यम् । परि॑ । व॒र्ज॒य॒ । अध॑ ।
वि॒षस्य॑ । यत् । तेजः॑ । अ॒वा॒चीन॑म् । तत् । ए॒तु॒ । ते॒ ॥ २५ ॥

हे ओषधे ! **अङ्गात् अङ्गात्** शरीरस्य प्रत्यङ्गतः विषं **प्रच्यावय** बहिष्कुरु, निष्कासय। तद्विषेण **हृदयम् परि** सर्वतः **वर्जय** रोधय, विषं कथमपि हृदयाभिमुखं न यात्वित्यर्थः। **अधा** अथ **विषस्य यत् तेजः** तैक्ष्ण्यम्, उग्रता वा, **तत् ते** तव प्रभावात् **अवाचीनम्** अधोमुखम् **एतु** गच्छतु, दूरीभवत्वित्यर्थः ॥ २५ ॥

आ॒रे अ॑भूद् वि॒षम॑रौद् वि॒षे वि॒षम॑प्रा॒गपि॑ ।
अ॒ग्निर्वि॒षमहे॒र्निर॑धा॒त् सोमो॒ निर॑णयी॒त् ।
दं॒ष्टा॒र॒मन्व॑गाद् वि॒षमहि॑रमृत ॥ २६ ॥

आ॒रे । अ॒भू॒त् । वि॒षम् । अ॒रौ॒त् । वि॒षे । वि॒षम् ।
अ॒प्रा॒क् । अपि॑ । अ॒ग्निः । वि॒षम् । अहेः॑ । निः ।
अ॒धा॒त् । सोमः॑ । निः । अ॒न॒यी॒त् । दं॒ष्टार॑म् ।
अनु॑ । अ॒गा॒त् । वि॒षम् । अहिः॑ । अ॒मृ॒त॒ ॥ २६ ॥

उपसंहरति—औषधप्रभावेण विषम् **आरे** दूरे **अभूत्**। तद् विषं **अरौत्** अरौत्सीत्। **विषे** सर्पविषे एतद् **विषं अप्राक् अपि** संपृक्त-मेवेत्यर्थः। 'पृची संपर्के' 'लुङ्'। **अग्निः** वह्निः अग्नेः प्रयोग इति यावत्,

**अहेः** सर्पस्य **विषं निरधात्** निष्कासयामास, भस्मसात् अकरोत्। **सोमः** सोमलतापर्णानि, विषहरणीपर्णानि वा तत् **निरनयीत्** निष्कास्य बहिरानयत्। तत् **विषं दंष्टारम्** दंशनकर्तारम् अहिं सर्पम् **अनु अगात्** अन्वगच्छत्। **अहिः सर्पः अमृत** मृतः। 'मृङ् प्राणत्यागे' लुङ्। **इदमत्रावधेयम्**—अद्याप्येते सर्पविषघ्नाः निम्नलिखिताः प्रयोगाः लोके प्रचलन्तो दरीदृश्यन्ते। यथा—१. विषवैद्यमाहूय विषनिष्कासनम्, २. दंशस्थानेऽस्य सपदि अग्निना दाहः, ३. विषहरणीनाम्न्यः ओषध्यः पर्णानां लेपः, ४. दंशस्थाने व्रणं विधाय शलाकया मुखश्वासत आकर्षणम्, एवमादय इति ॥ २६ ॥

## पञ्चमं सूक्तम् : विजय-प्राप्तिः

[ **सूक्तेऽस्मिन् सप्त पर्यायाः—प्रथमस्य १–६ मन्त्राः, द्वितीयस्य ७–१४ मन्त्राः, तृतीयस्य १५–२१ मन्त्राः, चतुर्थस्य च २२–२४ मन्त्राः। पर्यायचतुष्टये उक्तानां मन्त्राणां ऋषि-देवते समाने एव। अतः पर्यायचतुष्टयगतमन्त्राणाम् १–२४ संख्याकानां छन्दांस्यपि सहैवाऽत्र समुल्लिख्यन्ते। —सम्पादकः** ]

(१–२४) **ऋषिः—सिन्धुद्वीपः।** देवताः—**आपः, चन्द्रमाश्च।** छन्दः— २२,२३ **अनुष्टुप्; १–५ त्रिपदा पुरोभिकृति-ककुम्मतीगर्भा पङ्क्तिः; ६ चतुष्पदा जगतीगर्भा जगती; ७–१४ त्र्यवसाना पञ्चपदा विपरीत-लक्ष्मा बृहती (११,१४ पथ्यापङ्क्तिः;) १५–२१ चतुरवसाना दशपदा त्रैष्टुब्गर्भा अतिधृतिः १९–२० कृतिः; २४ त्रिपदा विराड् गायत्री।**

**अत्रायमभिसन्धिः**—विजयप्राप्तिसंज्ञकं पञ्चममेतत् सूक्तं सूत्रकृतः साम्प्रदायिकाश्चापि अभिचारकर्मणि शत्रोर्वधाय विनियुज्यमानमाहुः। स च विनियोगोऽनुपदमेव सविस्तरं निरूपयिष्यामः। शत्रोर्वधस्तु युद्धमुखेन अन्येन वा प्रसङ्गेन असिधाराद्यायुधैः कुर्वन्त्येव राजन्यादयः। सज्जनान् प्रपीडयताम् अधर्मप्रसाराय बद्धपरिकराणाञ्च शत्रूणां वधाय वेदेनाप्यत्र कतिपये मान्त्रिकाः प्रयोगा उक्ताः, ये च वेदस्यास्य प्रतिपाद्यविषयेषु अन्यतमाः। किन्तु प्रयोगाणामेषां प्रकाशनं कुर्वतोऽपि वेदनारायणस्य नैतत् पर्यवसितमभिमतम्। तस्य हार्दिकं निष्कृष्टतममभिमतं तु वयमिदमेव निश्चिनुमो यत् अतितरां कष्टसाध्यान् प्रयोगानिमान् प्रयुज्य शत्रोर्वधञ्च विधाय अथ यजमानो विचारयतु यदनेन मया किं शाश्वतं वस्तु समासादितम्? किं विश्वाधारभूतात्

वेदनारायणाद् अत्यल्पतमः क्षुद्रतमश्चायं लाभो मया समासादितः। ततो वरमनेन कर्मणा विरज्य अस्मिन्नेव वेदे या गूढतमा आत्मविद्या निरूपिता, तदनुगामी स्यामिति। न केवलं विचारयतु, प्रत्युत तथानुष्ठातुं बद्धपरिकरोऽपि स्यादिति।

विनियोगः—अभिचारकर्मैतत् शत्रोर्नाशाय क्रियमाणम्। अस्मिन् शत्रुनाशनसमर्थं बलम् उदके प्रवेश्य तत्र च वज्रत्वं भावयित्वा शत्रुमभिलक्ष्य तत् प्रक्षिपति शत्रोः उपरि विजयाकाङ्क्षी। तदेवम्—आदौ अपः सम्बोध्य स शत्रुवधकामा 'यस्माद् यूयम् इन्द्रस्यौजो भवथ, इन्द्रस्य सहप्रभृति भवथ, तस्माद् इन्द्रबलैर्युष्मान् युनज्मि 'इति वदति। ततः, 'इन्द्रस्य भागः अर्थात् अंशो भवथ, सोमस्य भागः स्थ, वरुणस्य भागः स्थ, मित्रावरुणयोर्भागः स्थ, यमस्य भागः स्थ, पितॄणां सवितुश्च भागः स्थ' इति वदति। ततः 'योऽपां त्रैलोक्यस्थ-सकलजलानां भागः पूजनीयोंऽशो युष्मासु भवति, यश्च तादृश ऊर्मिः, यश्च तादृशो वत्सः 'अपांनपान्'नाम वैद्युतोऽग्निः, यश्च तादृशो वृषभः महाबलः कश्चित् पशुः, यश्च अपां मध्ये उदपद्यतेति वेदप्रसिद्धो हिरण्यगर्भ इति बलवान् आद्यो देवः, यश्च अप्सु वर्तमानो नानावर्णोऽश्मप्रतीको मेघः, ये च अपां मध्ये वर्तमाना अग्नयस्तान् सर्वान् प्रत्येकं शत्रुं प्रति क्षिपामि तं, शत्रुम् अहं हन्याम्, तमनेन मन्त्रेण अनेन कर्मणा अनेन उदवज्रेण विदारयाणी'ति वदति। अनन्तरं स्वकृतात् त्रैहायणाद् अनृतवचन-पापाद् रक्षणं याचते। ततः शत्रोरुपरि उदवज्रं प्रक्षेप्तुं प्रक्रामति। यच्च प्रक्रामति, स्वक्रमं सम्बोध्य तं वदति—'त्वं विष्णोः क्रमोऽसि। अर्थाद् येन क्रमेण, पादविक्षेपेण वामनावतारे श्रीविष्णुस्त्रीन् लोकान् आक्रमत तादृशो बलवानसि। स्वयं पृथिव्या च तीक्ष्णीकृतं शस्त्रमसि। तेन त्वया शत्रुं पृथिव्याः सकाशान्निर्णोदयामीति। तथैव त्वम् अन्तरिक्ष-तीक्ष्णीकृतोऽसि, द्यौसंशितोऽसि, दिक्संशितोऽसि, आशासंशितोऽसि, ऋक्संशितोऽसि, यज्ञ-संशितोऽसि, ओषधीसंशितोऽसि, अप्संशितोऽसि, कृषि-संशितोऽसि, प्राण-संशितोऽसि। तस्मात् तत्तदभिमानिप्रदेशात् तं शत्रुं निर्णोदयानी'ति। एतदुक्त्वा 'जितमस्माभिर्जिताः शत्रुसेनाः' इति वदति। अनन्तरं दक्षिणां दिशं सरति, किञ्चित्सृत्वा तदभिमुखो भवति। तथैव इतरदिशश्च सप्तर्षिनाम नक्षत्रं ब्राह्मणांश्च अभिमुखो भवति। प्रत्येकं च तेभ्यः सकाशाद् द्रविणं

याचते। ततः परं, 'यं च शत्रुम् अन्विष्यामि तं हनानि। इयं समित् तं हेतिर्भूत्वा भक्षतु' इति वदति। ततः भुवस्पतिमन्नं याचते, अग्निं च वर्चः प्रजाम् आयुश्च याचते। अग्निं यातुधानभेदनञ्चापि याचते। अन्ते च पूर्वोक्तानि यान्युदकानि तान्येव चतुर्भृष्टि वज्रं कल्पयित्वा शत्रुशिरश्छेदाय प्रक्षिपति। आशास्ते च वज्रमेतत् शत्रोरङ्गानि भिनत्तु, देवाश्च तत् सर्वं मेऽनुजानन्त्विति।

साम्प्रदायिकास्तु वक्ष्यमाणप्रकारेण अस्मिन्नेव कर्मणि सूक्तमिदं विनियुञ्जते। अभिचारकर्मणि उदवज्राणां सूत्रोक्तं तद् विधानं यथा—'इन्द्रस्यौजः' (अथर्व० १०.५.१) इति सूक्तस्य आद्यानां षण्णाम् ऋचाम् पूर्वार्धर्चैः कांस्यघटं प्रक्षालयति। 'जिष्णवे योगाय' इति उत्तरार्धर्चैः षड्भिः कांस्यघटम् उदकसमीपे निदधाति। 'इदमहं यो मा प्राच्या दिशः' इत्यष्टर्चेन कल्पजेन सूक्तेन उदकमध्ये निदधाति घटम्। (पुनस्तेनैव) 'इदमहम्' इति कल्पजसूक्तेन उदकमध्ये घटस्य मुखं करोति। (पुनस्तेनैव) 'इदमहं यो मा प्राच्या दिशः' इति सूक्तेन घटम् उदकपूरितं कृत्वा अपक्रामति। (पुनस्तेनैव) 'इदमहम्' इति सूक्तेन उदकपूर्णं घटं मण्डपे स्थापयति।' एतद् अभिचारे उदकाहरणम्।

तदनन्तरं वज्रप्रहरणविधिः—'इन्द्रस्यौजः' इति 'इदमहम्' स्थापनान्तञ्च सर्वं कृत्वा 'अग्नेर्भागः' (अथर्व० १०.५.७–१४) इत्याद्यष्टाभिर्ऋग्भिः आनीतोदकस्य द्विधाकरणम्। अर्धं घटे कृत्वा अर्धं भाजने करोति। तद्भाजनम् अग्नौ तापयति, घटम् अन्यस्मै पुरुषाय प्रदापयति। 'अग्नेर्भागः' इत्यादयोऽष्टौ तापने मन्त्राः। ततो बहिर्दक्षिणामुख उपविश्य भाजनम् अग्रे कृत्वा 'वातस्य रंहितस्य' इति सौत्रमन्त्रेण उदकं संगृह्य 'शमग्नये' इति कल्पजेन सूक्तेन सर्वेभ्यो भूतेभ्योऽभयं दद्यात्। 'यो व आपोऽपाम्' (अथर्व० १०.५.१५) इत्यृचा वज्रप्रक्षेपः। पुनरपि 'वातस्य रंहितस्य' इत्यादि कृत्वा 'यो व आपोऽपामूर्मिः' (अथर्व० १०.५.१६) इति ऋचा वज्रप्रक्षेपः। एवमेव उत्तराभिर्ऋग्भिः (अथर्व० १०.५.१७–२१) वज्रप्रक्षेपः। ततः 'एनानधराचः पराचः' इति कल्पजया ऋचा भाजनस्थमुदकं भूमौ निनयति। एवमेव 'यं वयम्' (अथर्व० १०.५.४२) इति सूक्तेन अन्वृचम्, 'अपामस्मै वज्रम्' (अथर्व० १०.५.५०) इति ऋचा च वज्रप्रक्षेपः। 'विष्णोः क्रमोऽसि' (अथर्व० १०.५.२५–३६) इति

द्वादशभिर्विष्णुक्रमान् क्रमते शत्रोरभिमुखम् । तदुक्तं कौशिकेन— 'इन्द्रस्यौज' इति प्रक्षालयति । 'जिष्णवे योगाय' इत्यापो युनक्ति । 'वातस्य रंहितस्यामृतस्य योनिः' इति प्रतिगृह्णाति । उत्तमाः प्रताप्याधराः प्रदाय 'एनमेनानधराचः पराचोऽवाञ्चस्तपसस्तमूं नयत देवाः पितृभिः संविदानः प्रजापतिः प्रथमो देवतानाम्' इत्यतिसृजति । 'इदम् अहं यो मा प्राच्या दिशोऽघायुरभिदासादपवादीदिषुगूहः । तस्येमौ प्राणापानावपक्रामामि ब्रह्मणा । दक्षिणायाः प्रतीच्या उदीच्या ध्रुवाया व्यध्वाया ऊर्ध्वायाः । इदम् अहं यो मा दिशाम् अन्तर्देशेभ्यः' 'इत्यपक्रामामीति । एवम अभिष्ठानापोहननिवेष्टनानि । सर्वाणि खलु शश्वद् भूतानि ब्राह्मणाद् वज्रम् सद्यच्छमानाच्छङ्कन्ते मां हनिष्यसि मां हनिष्यसीति । तेभ्योऽभयं वदेत्—"शम् अग्नये, शं पृथिव्यै, शम् अन्तरिक्षाय, शं वायवे, शं दिवे, शं सूर्याय, शं चन्द्राय, शं नक्षत्रेभ्यः, शं गन्धर्वाप्सरोभ्यः, शं सर्पेतरजनेभ्यः शिवं मह्यम्" इति । 'यो व आपोऽपां यं वयमपामस्मै वज्रम्' इत्यन्वृचमुदवज्रान् । 'विष्णोः क्रमोऽसि' इति विष्णुक्रमान् '(कौ० सू० ४९.३–१४) इति । यदर्वाचीनम् (२३) इति ऋचा आचामयति अनृतभाषणसञ्जातपापापनोदनकामम् । 'समुद्रं वः प्र हिणोमि' (२२) इति ऋचा पत्न्यञ्जलौ उदपात्रं निनयति सर्वेषु तन्त्रेषु । 'बर्हिषि पत्न्यञ्जलौ निनयति— 'समुद्रं वः प्रहिणोमि' इति (कौ० सू० ६.१७) । 'सूर्यस्यावृतम्' इति पञ्चभिः (अथर्व० १०.५.३७–४१) प्रदक्षिणमावर्तते सर्वेषु । "सूर्यस्यावृतम्' इत्यभिदक्षिणमावर्तते" (कौ० सू० ६.१५) इति सूत्रात् ।

## प्रथमः पर्यायः

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य
वीर्यं१ स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय ब्रह्मयोगैर्वो युनज्मि ॥ १ ॥

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् । स्थ । इन्द्रस्य । नृम्णम् । स्थ । जिष्णवे । योगाय । ब्रह्मऽयोगैः । वः । युनज्मि ॥ १ ॥

हे आपः ! यूयं **इन्द्रस्य** देवराजस्य **ओजः** पराक्रमः **स्थ** भवथ। **इन्द्रस्य सहः** मर्षणं पुरुषार्थः साहसं वा **स्थ** भवथ। **इन्द्रस्य बलम्** भरं सामर्थ्यं वा **स्थ**, 'बलं भरं भवति बिभर्तेरिति' (नि० ३.९)। **इन्द्रस्य वीर्यं** वीरशक्तिः **स्थ**। **इन्द्रस्य नृम्णं** शूरत्वम् स्थ। अतोऽहं **जिष्णवे योगाय** विजयप्रदाय प्रयोगाय, शत्रुहननाय वा **ब्रह्मयोगैः** मन्त्रयोगैः मन्त्रबलैः ब्रह्मशक्तिमाधातुमित्यर्थः, **वः** युष्मान् **युनज्मि** संयोजयामि। यूयं ब्रह्मशक्तिसम्पन्नाः भवथ। स्वभावत एव ओजादिसम्पन्नास्ताः मन्त्रपूतानां तपस्तप्तांनाम् ऋत्विजां हस्ताद्यङ्गस्पर्शैः विशिष्टां शक्तिं बिभ्रतीत्याशयः ॥ १ ॥

**इन्द्रस्यौज० । जिष्णवे योगाय क्षत्रयोगैर्वो युनज्मि ॥ २ ॥**
**इन्द्रस्य । ओजः । ० । जिष्णवे । योगाय । क्षत्रऽयोगैः । वः । युनज्मि ॥ २ ॥**

**इन्द्रस्य ओजः** इत्यादि पूर्ववत्। **जिष्णवे योगाय** विजयोपलब्ध्यै **क्षत्रयोगैः** क्षत्रशक्तिमाधातुं **युनज्मि** तद्योगैः क्षत्रशक्तिसम्पन्नान् करोमि ॥ २ ॥

**इन्द्रस्यौज० । जिष्णवे योगायेन्द्रयोगैर्वो युनज्मि ॥ ३ ॥**
**इन्द्रस्य । ओजः । ० । जिष्णवे । योगाय ।**
**इन्द्रऽयोगैः । वः । युनज्मि ॥ ३ ॥**

**इन्द्रयोगैः**—दिव्यैश्वर्यमाधातुम्, 'इदि परमैश्वर्ये', युनज्मि। शिष्टं सर्वं पूर्ववत् ॥ ३ ॥

**इन्द्रस्यौज० । जिष्णवे योगाय सोमयोगैर्वो युनज्मि ॥ ४ ॥**
**इन्द्रस्य । ओजः । ० । जिष्णवे । योगाय ।**
**सोमऽयोगैः । वः । युनज्मि ॥ ४ ॥**

**सोमयोगैः** सोमशक्तिमाधातुम्। शेषं पूर्ववत् ॥ ४ ॥

**इन्द्रस्यौज० । जिष्णवे योगायाप्सुयोगैर्वो युनज्मि ॥ ५ ॥**
**इन्द्रस्य । ओजः । ० । जिष्णवे ।**
**योगाय । अप्सुऽयोगैः । वः । युनज्मि ॥ ५ ॥**

**अप्सुयोगैः**—जलेषु याः शक्तयः सन्ति तासां योगैः, शेषं पूर्ववत् ॥ ५ ॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य
वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय विश्वानि मा भूतान्युप तिष्ठन्तु
युक्ता म आप स्थ ॥ ६ ॥

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् । स्थ । इन्द्रस्य । नृम्णम् । स्थ । जिष्णवे । योगाय । विश्वानि । मा । भूतानि । उप । तिष्ठन्तु । युक्ताः । मे । आपः । स्थ ॥ ६ ॥

**इन्द्रस्य** इत्यादि **नृम्णं स्थ** इत्यन्तं पूर्ववत् । **जिष्णवे योगाय** विजयोपलब्ध्यै **विश्वानि** सर्वाणि **भूतानि** भूतजातानि, प्राणिजातानि वा समुत्पन्नवस्तूनि वा सत्तावन्ति, तानि **मा** माम् **उपतिष्ठन्तु** सेवन्ताम् । हे **आपः** ! **मे** मम **युक्ताः** अनुकूलाः **स्थ** भवथ । सर्वशक्तियुक्ताः भवन्तो मेऽनुकूलाः भवन्त्वित्यर्थः । अधुनाहं शत्रुसंहननाय मन्त्रबलेन शक्तियुक्ताः युष्मान् शत्रोरुपरि प्रक्षेप्तुं समर्थः स्यामित्याशयः ॥ ६ ॥

———

## द्वितीयः पर्यायः

अग्नेर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नाऽस्मै लोकाय सादये ॥ ७ ॥

अग्नेः । भागः । स्थ । अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु । धत्त । प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ ७ ॥

हे **देवीः** दिव्यशक्तिसम्पन्नाः **आपः** जलानि यूयं **अग्नेः भागः स्थ** युष्मासु अग्निर्विद्यते । अतः यूयं **अस्मासु अपाम्** स्वकीयम् **शुक्रं** युष्माकं

वीर्यं शुभ्रतां वा, **वर्चः** तेजः **धत्त** धारयत । **प्रजापतेः** प्रजापालकस्य परमपितुः प्रजापतेः **धाम्ना** तेजसा **अस्मै लोकाय** पुरोवर्तिनः लोकस्य सर्वविधसुखहितसाधनाय उदकभाजनगतान् युष्मान् **सादये** अग्नौ सादयामि, प्रतिष्ठापयामि ॥ ७ ॥

**इन्द्रस्य भाग स्थ ।०।० ॥ ८ ॥**

**इन्द्रस्य । भागः ।० ॥ ८ ॥**

हे देवीः आपः यूयं **इन्द्रस्य** देवराजस्य **भागः स्थ** । शेषं पूर्ववत् ॥ ८ ॥

**सोमस्य भाग स्थ । ० ० । ॥ ९ ॥**

**सोमस्य । भागः । ० ॥ ९ ॥**

हे देवीः आपः यूयं **सोमस्य** देदीप्यमानस्य सोमराज्ञः **भागः स्थ** । शेषं पूर्ववत् ॥ ९ ॥

**वरुणस्य भाग स्थ । ० ॥ १० ॥**

**वरुणस्य । भागः । ० ॥ १० ॥**

हे देवीः आप यूयं **वरुणस्य** अपां पतेः वरुणस्य भागः स्थ । शेषं पूर्ववत् ॥ १० ॥

**मित्रावरुणयोर्भाग स्थ । ० । ० ॥ ११ ॥**

**मित्रावरुणयोः । भागः । ० ॥ ११ ॥**

हे देवीः आपः । यूय **मित्रावरुणयोः** मित्रावरुणदेवयोः **भागः** स्थ । शेषं पूर्ववत् ॥ ११ ॥

**यमस्य भाग स्थ । ० । ० । ० ॥ १२ ॥**

**यमस्य । भागः । ० ॥ १२ ॥**

हे देवी आपः यूयं **यमस्य** नियामकस्य अन्तकस्य यमस्य **भागः** स्थ । शेषं पूर्ववत् ॥ १२ ॥

**पितृणां भाग स्थ ।०।० ॥ १३ ॥**

पितॄणाम् । भागः । ० ॥ १३ ॥

हे देवी आपः यूयं पितॄणां पितृदेवानां भागः स्थ। शेषं पूर्ववत् ॥ १३ ॥

देवस्य सवितुर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त । प्रजापतेर्वो धाम्नाऽस्मै लोकाय सादये ॥ १४ ॥

देवस्य । सवितुः । भागः । स्थ । अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु । धत्त । प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ १४ ॥

हे देवीः आपः ! यूयम् देवस्य दिव्यगुणसम्पन्नस्य सवितुः सूर्यनारायणस्य भागः स्थ । शेषं पूर्ववत् ॥ १४ ॥

---

## तृतीयः पर्यायः

यो व आपोऽपां भागोऽप्स्वन्तर्यजुष्यो देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणाऽनेन कर्मणाऽनया मेन्या ॥ १५ ॥

यः । वः । आपः । अपाम् । भागः । अप्ऽसु । अन्तः । यजुष्यः । देवऽयजनः । इदम् । तम् । अति । सृजामि । तम् । मा । अभिऽअवनिक्षि ।

तेन । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥ १५ ॥

हे **आपः** ! **यः वः** युष्माकं **अपां भागः** व्यापनशीलो जलीयांशः **अप्सु अन्तः** युष्माकं मध्ये अन्तरतमे भागे प्रविष्टः, स्थितः, यो हि **यजुष्यः देवयजनः** यजुर्मन्त्रैः सेवनीयः देवतार्चनविधौ सम्प्रयुज्यमानो वर्तते, **इदम्** इममिति लिङ्गव्यत्ययः। **तम्** इमम् अंशम् **अतिसृजामि** अभिमन्त्र्य अभिचारकर्मणि सादरं साधयामि। **तम्** अभिमन्त्रितं जलं **मा अभ्यवनिक्षि** परिमार्जनादिकार्येषु तत् नाहं प्रयुञ्जे। 'णिजिर् शौच-पोषणयोः' (१०९३ जुहो०) लुङ्। **तेन** भागेन वज्रकल्पेन **तम्** द्वेष्यं पुरुषं शत्रुमभिलक्ष्य अभि **अतिसृजामः** अभिभूये सर्वतस्त्यजामः। **यः अस्मान् द्वेष्टि** वैरायते **यं च** वा येन सह **द्विष्मः** वैरं कुर्मः तं शत्रुं **वधेयम्** हन्याम्। **तम् स्तृषीयः** आच्छादयामि, अभिभवामी त्यर्थः। 'स्तृञ् आच्छादने'। केन ? **अनेन ब्रह्मणा** मन्त्रबलेन, **अनेन कर्मणा** अभिचारकर्मणा तथा **अनया मेन्या** आपोरूपेण वज्रेण इति ॥ १५ ॥

**यो व आपोऽपामूर्मिरप्स्व१ ।०।०।०।० ॥ १६ ॥**

**यः । वः । आपः । अपाम् । ऊर्मिः । अप्ऽसु ।० ॥ १६ ॥**

हे **आपः यः वः अपाम् ऊर्मिः**—तरंगः 'अर्तेरुच्च' (उणा० ४.४४) ऋ गतौ 'मिः' ऊर्ध्वम्, । शेषं पूर्ववत् ॥ १६ ॥

**यो व आपोऽपां वत्सो३प्स्व१।०।०।०।० ॥ १७ ॥**

**यः । वः । आपः । अपाम् । वत्सः । अप्ऽसु ।० ॥ १७ ॥**

**अपां वत्सः** 'अपांनपात्'-नामा वैद्युतोऽग्निः । शेषं पूर्ववत् ॥ १७ ॥

**यो व आपोऽपां वृषभो३प्स्व१।०।०।०।० ॥ १८ ॥**

**यः । वः । आपः । अपाम् । वृषभः । अप्ऽसु ॥ १८ ॥**

**अपां वृषभः** वर्षणशीलरूपः महापराक्रमी वृष्टिरूप इति । शेषं पूर्ववत् ॥ १८ ॥

**यो व आपोऽपां हिरण्यगर्भो३प्स्व१।०।०।०।० ॥ १९ ॥**

**यः । वः । आपः । अपाम् । हिरण्यऽगर्भः । अप्ऽसु ।० ॥ १९॥**

**हिरण्यगर्भः** हिरण्यगर्भरूपः युष्मासु समुत्पन्नः आदिपूरुषः, हितं रमणीयं चेति हिरण्यं तत् रूपं गर्भे यस्य सः । 'हर्यतेः कन्यन् हिरच्' (उणा० ४.४४) इत्यनेन हर्य गतिकान्त्योः' इत्यस्मात् हिरादेशः । हितरमणं भवतीति वा हृदयरमणं भवतीति वा (नि० २.१०) । शेषं पूर्ववत् ।। १९ ।।

यो वं आपोऽपामश्मा पृश्निर्दिव्योऽप्स्व१ ।०।०।०।० ।। २० ।।

यः । वः । आपः । अपाम् । अश्मा । पृश्निः । दिव्यः । अप्ऽसु । अन्तः । यजुष्यः । देवऽयजनः । इदम् । तम् । अति । सृजामि । तम् । मा । ० ।। तेन । तम् ।० ।। २० ।।

**अपाम् अश्मा** व्यापनशीलो वर्षोपलः **पृश्निः** नानावर्णयुतः **दिव्यः** द्युलोकात् जातः दितिभवो वा । शेषं पूर्ववत् ।। २० ।।

ये वं आपोऽपामग्नयोऽप्स्व१न्तर्यजुष्याऽ देवयजनाः ।
इदं तानति सृजामि तान् माऽभ्यवनिक्षि ।
तैस्तमभ्यतिसृजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणाऽनेन कर्मणाऽनया मेन्या ।। २१ ।।

ये । वः । आपः । अपाम् । अग्नयः । अपऽसु । अन्तः । यजुष्याः । देवऽयजनाः । इदम् । तान् । अति । सृजामि । तान् । मा । अभिऽअवनिक्षि । तैः । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ।। २१ ।।

**अपाम् अग्नयः** अप्सु अन्तः विद्युदादिरूपेण अवस्थिताः अग्नयः । शेषं पूर्ववत् ।। २१ ।।

---

## चतुर्थः पर्यायः

यदर्वाचीनं त्रैहायणादनृतं किं चोदिम ।
आपो मा तस्मात् सर्वस्माद् दुरितात् पान्त्वंहसः ॥ २२ ॥

यत् । अर्वाचीनम् । त्रैहायनात् । अनृतम् । किम् । च । ऊदिम । आपः । मा । तस्मात् । सर्वस्मात् । दुःऽइतात् । पान्तु । अंहसः ॥ २२ ॥

**त्रैहायणात्** वर्षत्रयात् **अर्वाचीनं** अर्वाक्कालिकं **यत् किं च अनृतम्** असत्यं वयं **उदिम** ऊचिम, 'वद' धातोः सम्प्रसारणे कृते रूपम् । यद्वा— त्रयाणां हायनानां गतीनां 'ओहाङ गतौ', ज्ञानकर्मोपासनारूपाणां समाहारस्तस्मात् त्रैहायनात् । अर्वाचीनं अर्वाक् भवं निकृष्टं यत् किं च अनृतम् असत्यादिव्यवहारं उदिम शंसामः, उपदिशामः, कुर्मो वा । 'वदति गतिकर्मा' (निघ० २.१४), 'यद् वै वदन्ति शंसतीति वै तदाहुः (शत० ब्रा० १. ८.२.१२) । **तस्मात् सर्वस्मात् दुरितात्** दुष्टाचरणात् दुर्गतिगमनात् वा, 'दुरितानि दुर्गतिगमनानि' ( निरु० ६.१२ ) जायमानात् **अंहसः** पापात् **मा** माम् **आपः** जलानि **पान्तु** रक्षन्त्विति ॥ २२ ॥

समुद्रं वः प्र हिणोमि स्वां योनिमपीतन ।
अरिष्टाः सर्वहायसो मा च नः किं चनाममत् ॥ २३ ॥

समुद्रम् । वः । प्र । हिणोमि । स्वाम् । योनिम् । अपि । इतन । अरिष्टाः । सर्वऽहायसः । मा । च । नः । किम् । चन । आममत् ॥ २३ ॥

हे आपः **वः** युष्मान् **समुद्रं** प्रति **प्रहिणोमि** प्रेषयामि, 'हि गतिवृद्ध्योः ( १२५८ स्वा० ), अन्तर्भावितणिच् । **स्वाम्** आत्मीयां **योनिम्** उद्भवस्थानं **समुद्रम्**, 'समुद्रः' कस्मात् ? समुद्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः' (निघ० २.१०) । **अपि** एव समुद्रे एवेत्यर्थः, **इतन** प्राप्नुत, 'इण गतौ' लोटि तनादेशः । **अरिष्टाः** अहिंसिताः, कुशलिनः, 'रिष हिंसायाम्' ( १२३२ दिवा० ), वयं **सर्वहायसः**

सम्पूर्णायुष्मन्तः स्याम । किं चन किमपि वस्तु दुखं वा नः अस्मान् मा आममत् मा पीडयेत् रुजापीडितान् मा अकरोत्, 'अम रोगे' लुङि चङि रूपम् ॥ २३ ॥

अरिप्रा आपो अप रिप्रमस्मत् ।
प्रास्मदेनो दुरितं सुप्रतीकाः प्र दुष्वप्न्यं प्र मलं वहन्तु ॥ २४ ॥

अरिप्राः । आपः । अप । रिप्रम् । अस्मत् । प्र । अस्मत् । एनः । दुःऽइतम् । सुऽप्रतीकाः । प्र । दुःऽस्वप्न्यम् । प्र । मलम् । वहन्तु ॥ २४ ॥

आपः जलानि अरिप्राः निर्मलानि सन्ति । तानि अस्मत् रिप्रम् मलादिकं सर्वप्रकारकं दोषं अप दूरीकुर्वन्तु, अपसारयन्तु । सुप्रतीकाः शुभलक्षणाः, सुरूपवत्यः आपः अस्मत् मत्तः एनः पापं दुरितम् दुर्गतिं दुःष्वप्न्यम् दुस्वप्नोत्थं दुष्प्रभावं प्र वहन्तु, मलम् च प्रवहन्तु निवारयन्तु ॥ २४ ॥

---

## पञ्चमः पर्यायः

[२] २५–३५ (१–११) ऋषिः—कौशिकः । देवता—विष्णुक्रमः, मन्त्रोक्ताः ।
छन्दः—२५–३५ त्र्यवसाना षट्पदा यथाक्षरं शक्वर्यतिशक्वरी;
३६ पञ्चपदातिशाक्वरातिजागतगर्भाष्टिः ।

विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितोऽग्नितेजाः ।
पृथिवीमनु वि क्रमेऽहं पृथिव्यास्तं निर्भजामो योऽस्मान्
द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत् तं प्राणो जहातु ॥ २५ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । पृथिवीऽसंशितः । अग्निऽतेजाः । पृथिवीम् । अनु । वि । क्रमे । अहम् । पृथिव्याः । तम् । निः । भजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ २५ ॥

अत्रेयमवधेयम्–शत्रौ विजयप्राप्तये आवश्यवयः सामग्र्याः संयोजनं सूक्तस्यास्य प्रथममन्त्रतः चतुर्विंशतितमन्त्रं यावत् भगवता वेद-नारायणेन विहितम्। एतस्य सिंहावलोकनेन अवगम्यते यद्विजयप्राप्तये सर्वप्रथमं ओज-सह-बल-नृम्णां सर्वथाऽनिवार्यता, यानि चाप्सु स्वाभाविकानि भवन्ति। तद्धि आपोगतं सर्वं बलम् सूक्तस्य आदितः षड्भिर्मन्त्रैः ब्रह्मयोग-क्षत्रयोगे-न्द्रयोग-सोमयोगाऽप्सुयोग-सर्वभूतयोगैः परिपोषितम्। सप्तममन्त्रतः चतुर्दशमन्त्रं यावत् अप्सु स्थितान् अग्नेः सोमस्य, वरुणस्य, मित्रावरुणयोः, यमस्य, पितॄणाम्, सवितुश्च भागान् प्रत्येकशः समुल्लिख्य ता आपः प्रजापतितेजसा संयोज्यन्ते। ततः पञ्चदशमन्त्रतः एकविंशतिमन्त्रं यावत् अपां भागः, अपाम् ऊर्मयः, अपां वत्सः 'अपांनपान्'-नामा, अपां वृषभो वृष्टिरूपः, अप्सु समुत्पन्नो हिरण्यगर्भः, अपाम् अश्मा वर्षोपलः, अपाम् अग्निश्चैते सर्वे शत्रोर्वधाय जलवज्रत्वेन कल्प्यन्ते। द्वाविंशतितममन्त्रतः चतुर्विंशतितममन्त्रं यावत् त्रिभिर्मन्त्रैः शरीर-मनसोः शुद्धये पूर्वकृतानामंहसां क्षालनाय आपोदेव्यः प्रार्थ्यन्ते। नहि दोषसंपृक्तो मानवः सर्वविधसामग्री-संवलितोऽपि अभीष्टसिद्धये प्रभवतीत्यतः अंहसां क्षालनमपि सर्वथाऽनु-पेक्ष्यमेव। इत्थं सूक्तस्यास्य चतुर्भिः पर्यायैः सर्वं साधनजातं संगृह्य पञ्चमेऽस्मिन् पर्याये पञ्चविंशतितममन्त्रतः पञ्चत्रिंशत्तममन्त्रं यावत् एकादशमन्त्रैः महाराजस्य बलेर्विजयाय वामनरूपधारिणा भगवता विष्णुना यथा त्रयः पादविक्षेपाः कृताः, तथैवात्र विजिगीषुः अग्नि-वाय्वाद्येकादशपदार्थगततेजोभिः तीक्ष्णीकृतान् विष्णोः पादविक्षे-पत्वेन प्रकल्पितान् एकादशपादविक्षेपान् प्रकुरुते विजयार्थी। षष्ठ-सप्तमपर्यायगतैर्मन्त्रैश्च अग्रे देवादिब्राह्मणान्तानां द्रविण-ब्राह्मणवर्चसोः प्राप्तये प्रार्थनम् अग्न्यादिभिः शत्रोर्नाशकामनादिकं वर्णितम्। तत्र एकादशपादविक्षेषु पृथिव्यास्तीक्ष्णीकृतः, अग्नेस्तेजसा च परिपूरितो विष्णोः प्रथमः पादो मन्त्रेणानेन ऋषिः प्रस्तौति—

**विष्णोः** व्यापकस्य भगवतो नारायणस्य **क्रमः** वामनावतारे कृतः प्रथमः पादविक्षेपः **असि**। तमेव विशिनष्टि–**सपत्नहा** सपत्नानां शत्रूणां हन्ता। पुनः कीदृशः? **पृथिवीसंशितः** पृथिव्यास्तीक्ष्णीकृतः, 'सम्' पूर्वकात् 'शो तनूकरणे' (११४५ दिवा०) धातुः। तथैव **अग्नितेजाः** अग्नेस्तेजसा परिपूर्णः **अहं** प्राप्तविष्णुरूपो विजयाकाङ्क्षी **पृथिवीम्**

अनु अनुलक्ष्य **विक्रमे** पादविक्षेपं करोमि। पादविक्षेपस्य प्रभावात् अस्याः पृथिव्यास्तं शत्रुं **निर्भजामः** भागरहितं, पृथक् वा कुर्मः। कीदृशः शत्रुः ? **यः अस्मान् द्वेष्टि यं च वयं द्विष्मः** व्याख्यातपूर्वम्। एतादृशः **सः** शत्रुः **मा जीवीत्** जीवनयापनं मा कुर्यात्। तं **प्राणः** जहातु प्राणस्तं विहाय अपगच्छतु ॥ २५ ॥

विष्णोः क्रमोऽसि सपत्नहाऽन्तरिक्षसंशितो वायुतेजाः।
अन्तरिक्षमनु वि क्रमेऽहमन्तरिक्षात् तं निर्भजामो ।०॥ २६ ॥

विष्णोः। क्रमः। असि। सपत्नऽहा। अन्तरिक्षऽसंशितः। वायुऽतेजाः। अन्तरिक्षम्। अनु। वि। क्रमे। अहम्। अन्तरिक्षात्। तम्। ०॥ २६ ॥

**विष्णोः** व्यापनशीलस्य भगवतः **क्रमः** द्वितीयः पादविक्षेपः त्वम् **असि**। **सपत्नहा** शत्रुहन्ता, **अन्तरिक्ष-संशितः** अन्तरिक्षे अन्तरिक्षाद् वा संशितः तीक्ष्णीभूतः **वायुतेजाः** वायुरेव तेजो यस्य सः, वायोस्तेजसा परिपूर्णः। अन्यत् सर्वं पूर्ववत् ॥ २६ ॥

विष्णोः क्रमोऽसि सपत्नहा द्यौसंशितः सूर्यतेजाः।
दिवमनु वि क्रमेऽहं दिवस्तं ०।०॥ २७ ॥

विष्णोः। क्रमः। असि। सपत्नऽहा। द्यौऽसंशितः। सूर्यऽतेजाः।
दिवम्। अनु। वि। क्रमे। अहम्। दिवः। तम्। ०॥ २७ ॥

**विष्णोः** व्यापनशीलस्य तस्य भगवतः **क्रमः** तृतीयः पादविक्षेपः **असि**। **सपत्नहा** अरीणां हन्ता, **द्यौ-संशितः** द्युलोके द्युलोकाद् वा तीक्ष्णीभूतः, तेजस्वी, सूक्ष्मरूपः, **सूर्यतेजाः** सूर्यस्य एव तेजो यस्य सः। सूर्यस्य तेजसा परिपूर्ण इत्यर्थः। शिष्टं समानम् ॥ २७ ॥

विष्णोः क्रमोऽसि सपत्नहा दिक्संशितो मनस्तेजाः।
दिशोऽनु वि क्रमेऽहं दिग्भ्यस्तं ०।०॥ २८ ॥

विष्णोः। क्रमः। असि। सपत्नऽहा। दिक्ऽसंशितः।

मनः॑ऽतेजाः । दिशः॑ । अनु॑ । वि । क्र॒मे । अ॒हम् । दि॒क्ऽभ्यः ।
तम् । ० ॥ २८ ॥

**विष्णोः क्रमः** चतुर्थः पादविक्षेपः **असि । सपत्नहा दिक्संशितः** दिक्ष प्रसृत्य तीक्ष्णीभूतः, **मनस्तेजाः** मनसा तेजस्त्वमवाप्तः, मनस्तेजसा परिपूर्णः । शिष्टं समानम् ॥ २८ ॥

विष्णो॒ः क्रमो॑ऽसि सपत्न॒हाशा॑संशि॒तो वात॑तेजाः ।
आशा॒ अनु॒ वि क्र॑मे॒ऽहमाशा॑भ्यस्तं ० । ० ॥ २९ ॥

विष्णोः॑ । क्रमः॑ । अ॒सि । स॒पत्न॒ऽहा । आशा॑ऽसंशितः । वात॑ऽतेजाः ।
आशाः॑ । अनु॑ । वि । क्र॒मे । अ॒हम् । आशा॑भ्यः । तम् । ० ॥ २९ ॥

**विष्णोः क्रमः** पञ्चमः पादविक्षेपः **असि । सपत्नहा, आशासंशितः** आशाः अवान्तरदिशो मध्या दिशो वा, ताभ्यः संशितः तीक्ष्णीकृतः **वाततेजाः** वातेन तेजस्वी जातः, वाततेजसा परिपूर्ण इत्यर्थः । शेषं पूर्ववत् ॥ २९ ॥

विष्णो॒ः क्रमो॑ऽसि सपत्न॒ह ऋक्सँशि॒तः साम॑तेजाः ।
ऋचोऽनु॒ वि क्र॑मे॒ऽहमृ॒ग्भ्यस्तं ० । ० ॥ ३० ॥

विष्णोः॑ । क्रमः॑ । अ॒सि । स॒पत्न॒ऽहा । ऋक्ऽसँशितः ।
साम॑ऽतेजाः । ऋचः॑ । अनु॑ । वि । क्र॒मे । अ॒हम् ।
ऋ॒क्ऽभ्यः । तम् । ० ॥ ३० ॥

**विष्णोः क्रमः** षष्ठः पादविक्षेपः **असि । सपत्नहा, ऋक्संशितः** ऋग्भ्यः तीक्ष्णीभूतः । **सामतेजाः** साम्नस्तेजसा परिपूर्णः, ऋचामुपरि साम्नि आरूढे अतितरां तेजस्विता जायते । शेषं पूर्ववत् ॥ ३० ॥

विष्णो॒ः क्रमो॑ऽसि सपत्न॒हा य॒ज्ञसँशि॒तो ब्रह्म॑तेजाः ।
य॒ज्ञमनु॒ वि क्र॑मे॒हं य॒ज्ञात् तं ० । ० ॥ ३१ ॥
विष्णोः॑ । क्रमः॑ । अ॒सि । स॒पत्न॒ऽहा । य॒ज्ञऽसँशितः । ब्रह्म॑ऽतेजाः ।
य॒ज्ञम् । अनु॑ । वि । क्र॒मे । अ॒हम् । य॒ज्ञात् । तम् । ० ॥ ३१ ॥

**विष्णोः क्रमः** सप्तमः पादविक्षेपः **असि। सपत्नहा यज्ञसंशितः** यज्ञेन तीक्ष्णीकृतः, यज्ञेन तीक्ष्णतामवाप्तः यज्ञाध्यक्षेण ब्रह्मणा तत्र तेजस्विता आपाद्यते इत्यर्थः। शेषं पूर्ववत् ॥ ३१ ॥

विष्णोः क्रमोऽसि सपत्नहौषधीसंशितः सोमतेजाः।
ओषधीरनु वि क्रमेऽहमोषधीभ्यस्तं ०।० ॥ ३२ ॥

विष्णोः। क्रमः। असि। सपत्नऽहा। ओषधीऽसंशितः। सोमऽतेजाः। ओषधीः। अनु। वि। क्रमे। अहम्। ओषधीभ्यः। तम्। ० ॥ ३२ ॥

**विष्णोः** अष्टमः **क्रमः** पादविक्षेपः **असि। सपत्नहा ओषधीसंशितः** ओषधितेजसा परिपूर्णः तीक्ष्णीकृतः। **सोमतेजाः** सोमादवाप्ततेजाः, यदा ओषध्यादिसेवनेन स्वास्थ्ये तीक्ष्णता जायते तदा तत्र सोमरसेन विशेषतेजस्विता सम्पाद्यतेति भावः। शेषं पूर्ववत् ॥ ३२ ॥

विष्णोः क्रमोऽसि सपत्नहाऽप्सुसंशितो वरुणतेजाः।
अपोऽनु वि क्रमेऽहमद्भ्यस्तं ०।० ॥ ३३ ॥

विष्णोः। क्रमः असि। सपत्नऽहा। अप्सुऽसंशितः। वरुणऽतेजाः। अपः। अनु। क्रमे। अहम्। अत्ऽभ्यः। तम्। ० ॥ ३३ ॥

**विष्णोः क्रमः** नवमः पादविक्षेपः **असि। सपत्नहा अप्सुसंशितः** जलेन तीक्ष्णीभूतः **वरुणतेजाः** वरुणतेजसा तेजस्वीकृत इत्यर्थः। शेषं पूर्ववत् ॥ ३३ ॥

विष्णोः क्रमोऽसि सपत्नहा कृषिसंशितोऽन्नतेजाः।
कृषिमनु वि क्रमेऽहं कृष्यास्तं ०।० ॥ ३४ ॥

विष्णोः। क्रमः। असि। सपत्नऽहा। कृषिऽसंशितः। अन्नऽतेजाः। कृषिम्। अनु। वि। क्रमे। अहम्। कृष्याः। तम्। ० ॥ ३४ ॥

**विष्णोः क्रमः** दशमः पादविक्षेपः **असि** । **सपत्नहा कृषिसंशितः** कृषिकर्मणा तीक्ष्णतामवाप्तः, **अन्नतेजाः** अन्नेन प्राप्ततेजस्कः । शेषं पूर्ववत् ॥ ३४ ॥

विष्णोः क्रमोऽसि सपत्नहा प्राणसंशितः पुरुषतेजाः ।
प्राणमनु वि क्रमेऽहं प्राणात् तं निर्भजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः । स मा जीवीत् तं प्राणो जहातु ॥ ३५ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । प्राणऽसंशितः पुरुषऽतेजाः । प्राणम् । अनु । वि । क्रमे । अहम् । प्राणात् । तम् । निः । भजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ ३५ ॥

**विष्णोः क्रमः** एकादशः पादविक्षेपः **असि** । **सपत्नहा प्राणसंशितः** प्राणेन तीक्ष्णीकृतः । **पुरुषतेजाः** पुरुषेण तेजस्वीकृतः । शेषं पूर्ववत् ॥ ३५ ॥

---

## षष्ठः पर्यायः

[ ३ ] ३६–४१ (१–६) ऋषिः–ब्रह्मा । देवता–मन्त्रोक्ताः । छन्दः–३७ विराट् पुरस्ताद् बृहती; ३८ पुरोष्णिक्; ३९,४१ आर्षी गायत्री; ४० विराड् विषमा गायत्री ।

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां विश्वाः पृतना अरातीः ।
इदमहमामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेजः
प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥ ३६ ॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । अभि । अस्थाम् । विश्वाः । पृतनाः । अरातीः । इदम् । अहम् । आमुष्यायणस्य । अमुष्याः । पुत्रस्य । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ३६ ॥

एवम् पूर्वोक्तमन्त्रेषु प्रतिपादितानां साधनानामवलम्बनेन यदा विजिगीषौ तीक्ष्णता तेजस्विता च समुत्पद्येते तदा ऋषिः पूर्णनिष्ठया सुदृढेनात्मबलेन प्रोच्चारयति— **जितम्** शत्रोर्विजयेन यत्समासादितं तत्सर्वम् **अस्माकं** वर्तते । **उद्भिन्नं** शत्रुं विभेद्य निर्गतं सर्वं तत् **अस्माकं** वर्तते । **विश्वाः** सकलाः **पृतनाः** सेनाः **अरातीः** सर्वांश्च शत्रून् **अभि** अभितः **अस्थाम्** अहं निरुद्धवानस्मि । **इदम् अहम्** सन्निकृष्टो वीरोऽहं **अमुष्यायणस्य** अमुकस्य पुंसः पुत्रस्य, 'अमुष्य' 'इत्यस्मात् 'नडादिभ्यः फक्' (पा० ४.१.९९) इत्यनेन फक्,' अमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च (पा० ६.३.२१) इति वार्तिकेन षष्ठ्या अलुक् । **अमुष्याः** अमुकस्त्रियाः च **पुत्रस्य वर्चः तेजः प्राणं** जीवनं **आयुः** सर्वमेतत् **निवेष्टयामि** नितराम् आच्छादयामि, परिवार्य विनाशयामि । इदम् पुरोवर्तिनम् **एनम्** शत्रुम् **अधराञ्चं पादयामि** पादतले प्रक्षिप्य संपिनष्मि ॥ ३६ ॥

**सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम् ।**
**सा मे द्रविणं यच्छतु सा मे ब्राह्मणवर्चसम् ॥ ३७ ॥**

**सूर्यस्य । आऽवृतम् । अनुऽआवर्ते । दक्षिणाम् । अनु । आऽवृतम् । सा । मे । द्रविणम् । यच्छतु । सा । मे । ब्राह्मणऽवर्चसम् ॥ ३७ ॥**

**सूर्यस्य** सूर्यनारायणस्य, दिग्विशेषे **आवृतम्** आवर्तनं परिभ्रमणं च **अनु** अनुसृत्य **आवर्ते** आवर्तनं करोमि, निरन्तरं वा अनुसरामीत्यर्थः । सूर्यस्य आवर्तनमिदं दक्षिणत उत्तरस्यां दिशि जायते । अत एव कर्कराशितो धनराशिपर्यन्तं स्थितः स दक्षिणस्यामावर्तते येन तद् दक्षिणायनमिति कथ्यते । मकरराशितः मिथुनराशिं यावत् स्थितः स उत्तरस्यामावर्तते तदा तद् उत्तरायणमिति गीयते । सत्येवं विजयी वीरः सूर्यस्य किमावर्तनमनुसरतीति चेदुच्यते— **दक्षिणाम् अन्वावृतम्** सूर्यस्य दक्षिणस्यां दिशि यदन्वावर्तनं तदनुसरामीत्यर्थः, यतो हि दक्षिणायने सवितरि गते सति सस्यादीनां विपुला सम्पज्जायते । अत एव वीरोऽग्रे कामयते **सा** दक्षिणा दिक् **मे** मह्यं **द्रविणं** धनधान्यादिकम् अन्यच्च **ब्राह्मणवर्चसम्** ब्राह्मं तेजोऽपि **यच्छतु** प्रददातु ॥ ३७ ॥

दिशो ज्योतिष्मतीरभ्यावर्ते ।
ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ॥ ३८ ॥

दिशः । ज्योतिष्मतीः । अभिऽआवर्ते । ताः । मे ।
द्रविणम् । यच्छन्तु । ताः । मे । ब्राह्मणऽवर्चसम् ॥ ३८ ॥

अथ ज्योतिष्मतीः प्रकाशवतीः दिशाः पूर्वादिदिशः अपि अभ्यावर्ते अभितः गच्छामि । ताः पूर्वाद्या दिशः अपि मे इत्यादि पूर्ववत् ॥ ३८ ॥

सप्तऋषीनभ्यावर्ते ।
ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ ३९ ॥

सप्तऽऋषीन् । अभिऽआवर्ते । ते । मे । द्रविणम् ।
यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥ ३९ ॥

ततः परं सप्तऋषीन् नभसि नक्षत्ररूपेण ये अवस्थिताः सप्तर्षय-स्तान् सप्तऋषीन् अरुन्धत्याख्य-वशिष्ठपत्नीसहितान् पुराणोक्तान् सप्तऋषीन् । यथा—'कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः । जमदग्निर्भरद्वाजः सप्तैते ऋषयः स्मृताः' इति । तान् तेषां गतीश्च अभ्यावर्ते ते यथा जीवनं यापयन्ति, तथैवाहं जीवनं यापयामि । ते सप्तऋषयः मे इत्यादि पूर्ववत् ॥ ३९ ॥

ब्रह्माभ्यावर्ते ।
तन्मे द्रविणं यच्छतु तन्मे ब्राह्मणवर्चसम् ॥ ४० ॥

ब्रह्म । अभिऽआवर्ते । तत् । मे । द्रविणम् ।
यच्छतु । तत् । मे । ब्राह्मणऽवर्चसम् ॥ ४० ॥

ब्रह्म मन्त्रात्मको वेदः, परमात्मा वा तत् अभ्यावर्ते अनुसरामि वेदानुसारं जीवनं यापयामीत्यर्थः । तत् ब्रह्म मे इत्यादि पूर्ववत् ॥ ४० ॥

ब्राह्मणाँ अभ्यावर्ते ।
ते मे द्राविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ ४१ ॥

ब्राह्मणान् । अभिऽआवर्ते । ते । मे । द्रविणम् ।
यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥ ४१ ॥

**ब्राह्मणान्** ब्रह्म जानन्तीति ब्राह्मणाः ब्रह्मज्ञानिनः, तान् तेषां परिपाटीं रीतिं वा **अभ्यावर्ते** अनुसरामि । तानुद्दिश्य तेषामुपदेशानुसारं वा जीवयामीत्यर्थः । **ते** ब्राह्मणाः **मे** इत्यादि पूर्ववत् ॥ ४१ ॥

---

## सप्तमः पर्यायः

[४] ४२–५० (१–९) ऋषिः–विहव्यः । देवता–प्रजापतिः । छन्दः–४२,४३,४४,४५,४६,४७,४८,४९, त्रिपदा गायत्रीगर्भानुष्टुप्; ५० त्रिष्टुप् ।

यं वयं मृगयामहे तं वधै स्तृणवामहै ।
व्यात्ते परमेष्ठिनो ब्रह्मणापीपदाम तम् ॥ ४२ ॥

यम् । वयम् । मृगयामहे । तम् । वधैः । स्तृणवामहै ।
विऽआत्ते । परमेऽस्थिनः । ब्रह्मणा । आ । अपीपदाम ।
तम् ॥ ४२ ॥

यं शत्रुं **वयम्** तेजस्विनो वीराः **मृगयामहे** अन्वेषयामः, लब्ध्वा च **तम्** शत्रुं **वधैः** वधसाधनैः वज्रैः **स्तृणवामहै** प्रहरामः, विनाशयामः । 'स्तृणातिर्वधकर्मा' (निघ० २.१९) । **तं परमेष्ठिनः** परमे स्थाने स्थितस्य परमेश्वरस्य **व्यात्ते** विवृते मुखे **ब्रह्मणा** मन्त्रबलेन **अपीपदाम** पातयामः । 'पद गतौ' (१८९९ चुरा०) यङ्लुकि रूपम् ॥ ४२ ॥

वैश्वानरस्य दंष्ट्राभ्यां हेतिस्तं समधादभि ।
इयं तं प्सात्वाहुतिः समिद् देवी सहीयसी ॥ ४३ ॥

वैश्वानरस्य । दंष्ट्राभ्याम् । हेतिः । तम् । सम् ।
अधात् । अभि । इयम् । तम् । प्सातु । आऽहुतिः ।
समऽइत् । देवी । सहीयसी ॥ ४३ ॥

**हेतिः** अस्माकं शस्त्रमिदं **तं** शत्रुं **वैश्वानरस्य** तन्नाम्नोऽग्नेः **दंष्ट्राभ्यां** दंष्ट्रयोः, सप्तम्यर्थे पञ्चमी, **समाधात्** समस्थापयत् । **इयम् आहुतिः** मन्त्रेणाग्नौ प्रास्ताहुतिः, या किल **देवी** दिव्यगुणोपेता **सहीयसी** बलवत्तरा **समित्** होमार्थं विनियोज्यमाना पालाशकाष्ठदण्डखण्डरूपा तत्करणका भवति । **सा तं** शत्रुं **प्सातु** अत्तु, भक्षयत्वित्यर्थः । 'प्सा अक्षणे (१०५५ अदा०) ।। ४३ ।।

**राज्ञो वरुणस्य बन्धोऽसि ।**
**सोऽमुमामुष्यायणममुष्याः पुत्रमन्ने प्राणे बधान ।। ४४ ।।**

**राज्ञः । वरुणस्य । बन्धः । असि । सः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । अन्ने । प्राणे । बधान ।। ४४ ।।**

हे मन्त्ररूप पाश ! त्वं **राज्ञः वरुणस्य** वरुणदेवस्य **बन्धः** शत्रूणां बन्धनकारकः पाशः **असि** । 'वरुणो वा एतं गृह्णाति यः पाप्मना गृहीतो भवति' (शत० ब्रा० १२.७.२.१७) । **सः** त्वं **अमुम्** पुरोवर्तिनम् **अमुष्यायणम्** अमुकस्य पुत्रं **अमुष्याः** स्त्रियश्च **पुत्रं अन्ने प्राणे** च **बधान** बद्धं कुरु, अन्नेन प्राणेन च विरहितो भूयादिति भावः ।। ४४ ।।

**यत् ते अन्नं भुवस्पत आक्षियति पृथिवीमनु ।**
**तस्य नस्त्वं भुवस्पते संप्रयच्छ प्रजापते ।। ४५ ।।**

**यत् । ते । अन्नम् । भुवः । पते । आऽक्षियति । पृथिवीम् । अनु । तस्य । नः । त्वम् । भुवः । पते । सम्ऽप्रयच्छ । प्रजाऽपते ।। ४५ ।।**

हे **भुवस्पते** ! हे पृथिवीपते ! **यत् ते अन्नं पृथिवीम् अनु** वृष्टिरूपेण पृथिव्याम् **आक्षियति** वसति, हे **भुवस्पते** प्रजापते, प्रजापालक ! **तस्य** द्वितीयार्थे षष्ठी, तदर्थं **त्वं नः** अस्मान् **संप्रयच्छ** देहीति ।। ४५ ।।

**अपो दिव्या अचायिषं रसेन समपृक्ष्महि ।**
**पयस्वानग्न आगमं तं मा सं सृज वर्चसा ।। ४६ ।।**

अपः । दिव्याः । अचायिषम् । रसेन । सम् । अपृक्ष्महि । पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ ४६ ॥

**दिव्याः** दिवि भवाः, दिव्यगुणोपेता वा **अपः** अहम् **अचायिषम्** सम्पूजितवान् । अतो वयं **रसेन समपृक्ष्महि** सम्पृक्ता अभूम । हे अग्ने ! **पयस्वान्** दुग्धघृतादिपदार्थयुतः अहम् **आगमम्** तव समीपे समुपस्थितोऽस्मि । **तं** तादृशं **मा** मां **वर्चसा** तेजसा **संसृज** सम्पृक्तं कुरु, तेजस्विनं कुर्वित्यर्थः ॥ ४६ ॥

अस्यैव मन्त्रस्यान्यकाण्डान्तर्गतस्य (७.८९.२) पुरस्तात् सायणभाष्यं पाठकानाम् उपकृतये यथावत् इहोपन्यस्यते—दिव्याः दिवि भवा अपः उदकानि । "ऊडिदम्" इति शस उदात्तत्वम् । अचायिषम् पूजयामि । स्नानार्थम् अभिष्टौमीत्यर्थः । 'चामृ पूजानिशामनयोः', लुङि रूपम् । आसाम् अपां रसेन समपृक्ष्महि संगताः स्मः । रसेन संसिक्ता भवाम इत्यर्थः । वचनव्यत्ययो वा । समपृक्षि संगतोऽस्मि । 'पृची संपर्के । 'लिङ्सिचावात्मनेपदेषु' (पा० १.२.११) इति सिचः कित्त्वम् । हे अग्ने अहं त्वा पयस्वान् अन्नवान् हविर्भिस्तद्वान् आगमम् आगतोऽस्मि । हविषा यष्टुं तव समीपम् आगतोऽस्मीत्यर्थः । गमे र्लुङि लृदित्वाद् अङ् । तं तादृशं त्वत्समीपं प्राप्तं मा मां वचसा । वर्चो वृणक्तेः । तेजोविशेषेण **संसृज** संयोजय । "अग्ने यत् ये दिवि वर्चः पृथिव्याम्" इति हि निगमः" (ऋ० ३.२२.२) ।

**सं माऽग्ने वर्चसा सृज सं प्रजया समायुषा ।**
**विद्युर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः ॥ ४७ ॥**

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा । विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ ४७ ॥

हे **अग्ने** ! **मा** मां **वर्चसा** तेजसा **संसृज** संयुक्तं कुरु, **प्रजया** सन्तत्या संसृज, **आयुषा** दीर्घायुष्येण च **संसृज** संसक्तं विधेहि । **देवा अस्य** एतादृशस्य **मे** मम वैशिष्ट्यं **विद्युः** जानीयुः । **ऋषिभिः सह** वसिष्ठ-

विश्वामित्रादिभिः ऋषिभिः सह **इन्द्रः** देवाधिपतिः मघवा अपि **मां विद्यात्** मम वैशिष्ट्यं जानीयात् ॥ ४७ ॥

अस्यैव मन्त्रस्यान्यकाण्डान्तर्गतस्य (७.८९.२) पुरस्तात् सायण-भाष्यं पाठकानामुपकृतये यथावदिहोपन्यस्यते—हे अग्ने मा मां वर्चसा तेजसा बलेन वा संसृज संयोजय। प्रजया पुत्रादिकया संसृज। आयुषा जीवनेन च संसृज। किं च अस्य एनम्, अन्वादेशे इदमः अशादेशोऽनुदात्तः। विभक्तिः सुप्त्वाद् अनुदात्ता। अतः सर्वानुदात्तं पदम्। एनं मे माम्। कर्मार्थे षष्ठ्यौ। देवा विद्युः असौ पूत इति जानीयुः। तथा ऋषिभिः अतीन्द्रियदर्शिभिर्मुनिभिः सह इन्द्रश्च विद्यात् मां पूतं जानीयात्। यद्वा अस्य एतादृशस्य मे अभिमतफलं साधयितुम् इन्द्रादयो विद्युरिति।

**यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः।**
**मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥ ४८ ॥**

**यत्। अग्ने। अद्य। मिथुना। शपातः। यत्। वाचः। तृष्टम्। जनयन्त। रेभाः। मन्योः। मनसः। शरव्या। जायते। या। तया। विध्य। हृदये। यातुऽधानान् ॥ ४८ ॥**

**अग्ने ! यद्** यस्मात् शत्रुकृतापवादात् **अद्य मिथुना** दम्पती स्त्री-पुरुषौ मां **शपातः** आक्रोशेते, अन्यच्च **रेभाः** स्तोतारः, 'रेभः स्तोतृ-नाम' (निघ० ३.१६) बहुश्रुता वा, मद्विषये **यत् वाचः** वाण्याः तृष्टं कार्कश्यं **जनयन्त** प्रकटयन्ति, एवम् **मनसः मन्योः** क्रोधस्य या **शरव्या** शरवृष्टिर्मयि **जायते** तैः क्रियते **तया** शरवृष्ट्या तदुपलक्षितैः पूर्वोक्तैः सर्वैः अपायैः त्वम् **यातुधानान्** गूढाभिचारकर्तॄन् **हृदये विध्य** तैः अपायैस्तेषां हृदयानि विन्धीत्यर्थः ॥ ४८ ॥

अस्यैव मन्त्रस्यान्यकाण्डान्तर्गतस्य (८.३.१२) पुरस्तात् सायण-भाष्यं पाठकानाम् उपकृतये इहोपन्यस्यते— हे अग्ने **अद्य** अस्मिन्नहनि यत् यस्मात् **मिथुना** स्त्रीपुंसौ **शपातः** शपतः परस्परम् आक्रोशतः, यश्च वाचास्तृष्टम् तृषायुक्तम्, कटुकम् इत्यर्थः, जनयन्त जनयन्ति

उत्पादयन्ति । के ? रेभाः स्तोतारः । यातुधानेभ्यो निमित्तेभ्यः इत्यभिप्रायः, मन्योः तव क्रोधयुक्ताद् दीप्ताद् वा मनसः सकाशाद् या **शरव्या** इषुः ज्वालारूपा जायते तया इष्वा यातुधानान् हृदये हृदयदेशे विध्य ताडय ।

**परा॑ शृणीहि॒ तप॑सा यातु॒धाना॒न् परा॑ऽग्ने॒ रक्षो॒ हर॑सा शृणीहि ।**
**परा॒ऽर्चिषा॒ मूर॑देवां छृणीहि॒ परा॑ऽसुतृप॒ः शोशु॑चतः**
**शृणीहि ॥ ४९ ॥**

**परा॑ । शृ॒णी॒हि॒ । तप॑सा । या॒तु॒ऽधाना॑न् । परा॑ । अ॒ग्ने॒ । रक्षः॑ । हर॑सा । शृ॒णी॒हि॒ । परा॑ । अ॒र्चिषा॑ । मूर॑ऽदेवान् । शृ॒णी॒हि॒ । परा॑ । अ॒सु॒ऽतृप॑ः । शोशु॑चतः । शृ॒णी॒हि॒ ॥ ४९ ॥**

हे **अग्ने** ! त्वं **तपसा** स्वोग्रतापेन **यातुधानान्** दस्यून्, राक्षसान्, अभिचारकर्तॄन् **पराशृणीहि** भस्मसात् कृत्वा पराकुरु । **हरसा** स्वहरणशक्त्या, स्वार्चिभिर्वा रक्षः राक्षसान् **पराशृणीहि** दह । **मूरदेवान्** देवान् प्रति ये मूढाः, देवान् अजानतो वा देवदम्भिनस्तान् **अर्चिषा** स्वकीयज्वालया **पराशृणीहि** भस्मीकुरु । **असुतृपः** परप्राणैः स्वतृप्ति मन्यमानान्, कुर्वतो वा **शोशुचतः** भृशं शोषयतः दुष्टान् **पराशृणीहि** भस्मसात् कुरु ।। ४९ ।।

अस्यैव मन्त्रस्यान्यकाण्डान्तर्गतस्य ( ८.३.१३ ) पुरस्तात् सायण-भाष्यं पाठकानां उपकृतये यथावत् इहोपन्यस्यते—हे अग्ने यातुधानान् राक्षसान् तपसा तापकेन तेजसा पराशृणीहि पराङ्मुखं विनाशय । तथा रक्षः राक्षसं हरसा प्राणापहारकेण तेजसा पराशृणीहि । तथा मूरदेवान् मारणेन कर्मणा दीव्यन्तीति मूरदेवाः, तान् अर्चिषा दीप्यमानया ज्वालया पराशृणीहि । असुतृपः असुभिः परप्राणैरात्मानं तर्पयन्तो ये तान् । शोशुचतः भृशं दीप्तान् राक्षसान् परा शृणीहि । अथवा शोशुचतः भृशं दीप्यमानान्, तव ज्वालयेति शेषः ।

**अ॒पाम॑स्मै॒ वज्रं॒ प्र ह॑रामि॒ चतु॑र्भृष्टिं शीर्॒षभिद्या॑य वि॒द्वान् ।**
**सो अ॒स्याङ्गा॑नि प्र शृ॑णातु॒ सर्वा॒ तन्मे॑ दे॒वा अनु॑**
**जानन्तु॒ विश्वे॑ ॥ ५० ॥**

अपाम् । अस्मै । वज्रम् । प्र । हरामि । चतुःऽभृष्टिम् । शीर्षऽभिद्याय । विद्वान् । सः । अस्य । अङ्गानि । प्र । शृणातु । सर्वा । तत् । मे । देवाः । अनु । जानन्तु । विश्वे ॥ ५० ॥

**विद्वान्** मन्त्रबलप्रयोक्ता आभिचारिको वा अहं **अस्मै** अस्य शत्रोः, षष्ठ्यर्थे चतुर्थी **शीर्षभिद्याय** शिरोभेदनाय **चतुर्भृष्टिं** चतस्रो भृष्टयोऽयःफालानि यस्मिन् तम् । यद्वा—'भृशु अधःपतने', चतुर्षु दिक्षु भ्रंशयितारम् । **अपाम्** मन्त्रपूतानां जलानां **वज्रम्** आयुधं **प्रहरामि** **प्रक्षिपामि** । **सः** वज्रः **अस्य** दस्योः **अङ्गानि प्रशृणातु** पचतु, भस्मीकरोतु । **देवाः विश्वेदेवाः** सर्वे देवाः **मे** मम **तत्** कर्म अनुजानन्तु, अङ्गीकुर्वन्तु, स्वीकुर्वन्तु, अनुमन्यन्तामिति भावः ॥ ५० ॥

## षष्ठं सूक्तम् : मणि-वन्धनम्

(१–३५) ऋषिः—बृहस्पतिः । देवता—१. फालमणिः, २. वनस्पतिः, ३ आपश्च । छन्दः—२, ३, १९, २२, २८–३०, ३२–३४ अनुष्टुप्; १, ४, २१ गायत्री; ५ षट्पदा जगती, ६ सप्तपदा विराट् शक्वरी; ७–१० व्यवसाना अष्टपदाष्टिः (१० नवपदा धृतिः); ११, २०, २३–२७ पथ्यापङ्क्तिः; १२–१७ व्यवसाना सप्तपदा शक्वरी; ३१ व्यवसाना षट्पदा जगती; ३५ पञ्चपदा व्यनुष्टुब्गर्भा जगती ।

**विनियोगः**—खदिरकाष्ठफालविकारं मणिं शत्रुनाशाय सर्वकामाप्तये च बध्नाति सूक्तेनानेन । साम्प्रदायिका हि वक्ष्यमाणप्रकारेणेदं विनियुञ्जते—सर्वकामसिद्धयर्थं खदिरफालमणिं त्रिवासितं कृत्वा 'एतमिध्मम्' (३५) इत्यृचा इध्मम् उपसमाधाय 'तमिमं देवताः' (२९) इति वासितम् उल्लुप्य आसाद्य 'अरातीयोः' इत्यर्थसूक्तेन संपात्याभिमन्त्र्य 'ब्रह्मणा तेजसा' (३०) इति ऋचा बध्नाति । यस्मात् सर्वे कामाः संपद्यन्तेऽनेन मणिना तस्माद् अयं मणिः सर्वकामः । तथा च सूत्रम्—'आयमगन्' (अथर्व. ३.५), 'अयं प्रतिसरः' (अथर्व. ८.५), 'अयं मे वरणः' (अथर्व. १०.३), 'अरातीयोः' इति मन्त्रोक्तान् वासितान् बध्नाति । उत्तमस्य चतुरो जातरूपशकलेनानुसूत्रं गमयित्वाऽवभुज्य

त्रैधं पर्यस्यति । 'एतमिध्मम्' इत्युपसमाधाय 'तमिमं देवताः' इति वासितमुल्लुप्य 'ब्रह्मणा तेजसा' इति बध्नाति (कौ०सू० १९-२२-२५) इति । 'मन्त्रोक्तान्=मन्त्रोक्त द्रव्यविकारान वासितान्=त्रयोदश्यादयस्तिस्रो यास्तिथयस्तासु विधिवद् दधिमधुनि वासितान्। बन्धनस्थानं च मन्त्रस्थम् । उत्तमस्य= 'अरातीयोः' इति सूक्तस्य । अवभुज्य= कुटिलां कृत्वा । त्रैधं पर्यस्यति=त्रिरावेष्टयति । पार्श्वे सर्वतो वेष्टनम् आयसेन । शिरसि बन्धनकरणम् अधिरोहत्विति लिङ्गात्' इत्यादि दारिलः ।

अरातीयोर्भ्रातृव्यस्य दुर्हार्दो द्विषतः शिरः ।
अपि वृश्चाम्योजसा ॥ १ ॥

अरातिऽयोः । भ्रातृव्यस्य । दुःऽहार्दः । द्विषतः । शिरः ।
अपि । वृश्चामि । ओजसा ॥ १ ॥

**अरातीयोः** अदानशीलस्य अनुदारस्य **दुर्हार्दः** दुष्टहृदयस्य **द्विषतः** द्वेषं कुर्वतः **भ्रातृव्यस्य** शत्रोः **शिरः** शीर्षम् **ओजसा** शक्तया **अपि वृश्चामि** अवछिनद्मि, कर्तित्वा दूरं प्रक्षिपामीत्यर्थः । 'ओव्रश्चू छेदने' (१२९३ तुदा०) ॥ १ ॥

वर्म मह्यमयं मणिः फालाज्जातः करिष्यति ।
पूर्णो मन्थेन मागमद् रसेन सह वर्चसा ॥ २ ॥

वर्म । मह्यम् । अयम् । मणिः । फालात् । जातः । करिष्यति ।
पूर्णः । मन्थेन । मा । आ । अगमत् । रसेन । सह । वर्चसा ॥ २ ॥

**फालात् जातः** खदिरफलविकारात् समुत्पन्नः **अयं मणिः** फालमणिः **मह्यं वर्म** कवचकार्यं **करिष्यति**, कवचरूपेण परिणतो भविष्यतीत्यर्थः । अयं मणिः **मन्थेन** शत्रोर्मथनबलेन, सूक्ष्मविचारेण वा **पूर्णः रसेन** बलेन तथा **वर्चसा** ब्रह्मवर्चसा, तेजसा **सह मा** माम् **अगमत्** प्राप्नोतु । अहं तं फालमणिं प्राप्नुवम् ॥ २ ॥

यत् त्वा शिक्वः परावधीत् तक्षा हस्तेन वास्या ।
आपस्त्वा तस्माज्जीवलाः पुनन्तु शुचयः शुचिम् ॥ ३ ॥

यत् । त्वा । शिक्वः । पराऽअवधीत् । तक्षा । हस्तेन । वास्या । आपः । त्वा । तस्मात् । जीवलाः । पुनन्तु । शुचयः । शुचिम् ॥ ३ ॥

हे फालमणे ! **यत् त्वा** त्वां **शिक्वः** काष्ठं छित्त्वा तीक्ष्णीकरणे कुशलः, यद्वा काष्ठं तीक्ष्णीकृत्य सौन्दर्यापादने चतुरः । 'शिञ् निशाने' (१२५० स्वा०) 'अशूप्रुषिलटि कणि०' (उणा० १.१२५) इति क्वन्, कुगागमश्च । **तक्षा** तनूकर्ता **हस्तेन** करधृतेन **वास्या** कुठारेण 'बसूला' इति भाषाभाषितेनेत्यर्थः । **परावधीत्** अत्यधिकमतक्षत्, तनूकार्ये अहिंसदित्यर्थः । तस्मात् हिंसनात् **जीवलाः** जीवनप्रदायिनः **शुचयः** शुद्धाः पूताः **आपः त्वा** त्वाम् **शुचिं** समुज्ज्वलं कुर्वन्त्यः **पुनन्तु** शोधयन्तु ॥३॥

हिरण्यस्रगयं मणिः श्रद्धां यज्ञं महो दधत् ।
गृहे वसतु नोऽतिथिः ॥ ४ ॥

हिरण्यऽस्रक् । अयम् । मणिः । श्रद्धाम् । यज्ञम् । महः । दधत् । गृहे । वसतु । नः । अतिथिः ॥ ४ ॥

**हिरण्यस्रक्** सुवर्णवत् कमनीयतेजसां स्रष्टा । 'सृज उत्पादने' क्विन्, अमागमः । **अयं मणिः श्रद्धां यज्ञं** यज्ञयागादिकं श्रौतादि श्रेष्ठकर्म तथा **महः** महिमां तेजो वा **दधत्** धारयन् **अतिथिः** अतिथिवत् पूज्यः सन् **नः** अस्माकं **गृहे** हर्म्ये **वसतु** निवसतु ॥ ४ ॥

तस्मै घृतं सुरां मध्वन्नमन्नं क्षदामहे ।
स नः पितेव पुत्रेभ्यः श्रेयःश्रेयश्चिकित्सतु
भूयोभूयः श्वःश्वो देवेभ्यो मणिरेत्य ॥ ५ ॥

तस्मै । घृतम् । सुराम् । मधु । अन्नम्ऽअन्नम् । क्षदामहे । सः । नः । पिताऽइव । पुत्रेभ्यः । श्रेयःऽश्रेयः । चिकित्सतु । भूयःऽभूयः । श्वःऽश्वः । देवेभ्यः । मणिः । आऽइत्य ॥ ५ ॥

**तस्मै** तस्य मणेः सम्प्राप्त्यै **वयं** 'देवेभ्यः' इत्यध्याहार्यम् । **घृतम्** आज्यम्, **सुराम्** ऐश्वर्यम् 'षुर ऐश्वर्यदीप्त्योः' कः, टाप् च । **मधु अन्नं**

नानाविधम् अन्नजातं **क्षदामहे** भक्षयामः, अन्तर्भावितण्यर्थः, भक्षणाय दद्म इत्यर्थः । **सः मणिः देवेभ्यः** देवानां सकाशात् अस्माकं समीपे **एत्य** आगत्य **पुत्रेभ्यः पिता इव** जनको यथा पुत्राणां कल्याणकारी भवति तद्वत्, **भूयोभूयः** बहुतरं **श्वः श्वः** प्रतिदिनं **श्रेयः श्रेयः** अत्यधिकं श्रेयः कल्याणं **चिकित्सतु** ददातु, धातूनामनेकार्थत्वात् । यद्वा–रोगविघ्नादिनिवारणोपायं करोत्वित्यर्थः ॥ ५ ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तमग्निः प्रत्यमुञ्चत सो अस्मै दुह आज्यं भूयोभूयः**
**श्वःश्वस्तेन त्वं द्विषतो जहि ॥ ६ ॥**

**यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । अग्निः । प्रति । अमुञ्चत । सः । अस्मै । दुहे । आज्यम् । भूयःऽभूयः । श्वःऽश्वः । तेन । त्वम् । द्विषतः । जहि ॥ ६ ॥**

**अयमभिसन्धिः**—इत आरभ्य एकविंशतितममन्त्रं यावत् अर्थवादपद्धत्या मणेः प्राशस्त्यं वर्णयति मन्त्रकृत् । तत्र सप्तदशमन्त्रं यावत् वर्णितं यत् बृहतां पतिर्ब्रह्माण्डनायको ब्रह्माण्डपालको वा परमात्मा अमुं मणिम् अग्निम्, इन्द्रम्, सोमम्, सूर्यम्, चन्द्रमसम्, वातम्, अश्विनौ, सवितारम्, अपः, राजानम्, वरुणम्, देवांश्च बबन्ध । तेन च तैस्तैः स्वकीया अभीष्टाः समासादिताः, शत्रवश्च निर्जिताः । शिष्टैश्चतुर्भिर्मन्त्रैः ऋतवः, आर्तवाः, संवत्सरः, अथर्वाणः, धाता च स्वयमेव मणिमादाय अबध्नन्, अभीष्टञ्च समासादितवन्त इति । अष्टादशैकोनविंशतिमन्त्रौ विहाय इतः एकविंशतिमन्त्रं यावत् सर्वेष्वपि मन्त्रेषु अन्ते प्रत्येकशो मन्त्रकृता शत्रुविमर्दनेच्छुः प्रतिबोधितो यत् 'तेन ( मणिधारणेन ) त्वं द्विषतो जहि' इति । वेदविदां नैतत् तिरोहितं यदर्थवादानां स्वार्थे तात्पर्यं न भवति । प्रस्तुतकर्मणः प्राशस्त्यबोधने एव तेषां पर्यवसितं तात्पर्यम्, तदेव च तेषां लक्षणम् ।

**बृहस्पतिः देवः** बृहतां ब्रह्माण्डानां पतिः पालको दिव्यगुणवान् परमेश्वरः **यं फालं** फलनिर्मितं **खदिरं** खदिरवृक्षोत्पन्नं **घृतश्चुतं**

घृतस्राविणम् उग्रं तेजस्कं **मणिम् ओजसे** बलप्रकाशनाय अग्निम् **अबध्नात्** बबन्ध, **तम्** तादृशं मणिम् **अग्निः प्रत्यमुञ्चत** स्वीकृतवान्। **सः** मणिः **अस्मै** मणिधारकाय अग्नये **भूयोभूयः** पौनःपुन्येन श्वः श्वः प्रतिदिनम् **आज्यं** घृतं **दुहे** अदुग्ध। **तेन** एतादृशेन मणिना त्वं **द्विषतः** द्वेषकर्तॄन् शत्रून् **जहि** विनाशय ॥ ६ ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तमिन्द्रः प्रत्यमुञ्चतौजसे वीर्याय कम् ।**
**सो अस्मै बलमिद् दुहे भूयोभूयः । ० ॥ ७ ॥**

**यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । इन्द्रः । प्रति । अमुञ्चत । ओजसे । वीर्याय । कम् । सः । अस्मै । बलम् । इत् । दुहे । भूयःऽभूयः । ० ॥ ७ ॥**

**यम्, अबध्नात्** इत्यादि पूर्ववत्। **तं** बृहस्पतिना बद्धं मणिम् **इन्द्रः** देवाधिपतिः **ओजसे वीर्याय कम्** सुखेन **प्रत्यमुञ्चत** स्वीकृतवान्। **सः** मणिः **अस्मै** इन्द्राय **बलम् इत्** नूनं **दुहे** दोग्धि। शिष्टं समानम् ॥ ७ ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तं सोमः प्रत्यमुञ्चत महे श्रोत्राय चक्षसे ।**
**सो अस्मै वर्च इद् दुहे भूयोभूयः । ० ॥ ८ ॥**

**यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । सोमः । प्रति । अमुञ्चत । महे । श्रोत्राय । चक्षसे । सः । अस्मै । वर्चः । इत् । ० ॥ ८ ॥**

......**तम्** मणिम् **सोमः** ओषधीनामधिपतिः **श्रोत्राय** श्रवणशक्त्यै **चक्षसे** दृष्टिशक्त्यै च **प्रत्यमुञ्चत** स्वीकृतवान्। **स** मणिः **अस्मै** सोमाय **वर्चः** तेजः **इत्** नूनं **दुहे** इत्यादि पूर्ववत् ॥ ८ ॥

यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं सूर्यः प्रत्यमुञ्चत तेनेमा अजयद् दिशः ।
सो अस्मै भूतिमिद् दुहे भूयोभूयः । ० ॥ ९ ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । सूर्यः । प्रति । अमुञ्चत । तेन । इमाः । अजयत् । दिशः । सः । अस्मै । भूतिम् । इत् । ० ॥ ९ ॥

……तम् मणिं सूर्यः प्रत्यमुञ्चत स्वीकृतवान् । तेन मणिनाऽसौ इमाः दिशः काष्ठाः अजयत् । सः मणिः अस्मै सूर्याय भूतिम् ऐश्वर्याधिवयम् इत् नूनं दुहे दुग्धे । शेषं पूर्ववत् ॥ ९ ॥

यमबध्नात् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं बिभ्रच्चन्द्रमा मणिमसुराणां पुरोऽजयद् दानवानां हिरण्ययीः ।
सो अस्मै श्रियमिद् दुहे भूयोभूयः । ० ॥ १० ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । बिभ्रत् । चन्द्रमाः । मणिम् । असुराणाम् । पुरः । अजयत् । दानवानाम् । हिरण्ययीः । सः । अस्मै । श्रियम् । इत् । दुहे । ० ॥ १० ॥

……तम् मणिं बिभ्रत् धारयन् चन्द्रमाः विधुः असुराणां पुरः नगराणि दानवानाम् दनुपुत्राणां च हिरण्ययीः सुवर्णमयीः पुरीः अजयत् जितवान् । सः मणिः अस्मै चन्द्रमसे श्रियम् इत् नूनं दुहे प्रपूरयति । शेषं पूर्ववत् ॥ १० ॥

यमबध्नात् बृहस्पतिर्वाताय मणिमाशवे ।
सो अस्मै वाजिनं दुहे भूयोभूयः । ० ॥ ११ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे । सः । अस्मै । वाजिनम् । दुहे । ० ॥ ११ ॥

**बृहस्पतिः** ब्रह्माण्डपालकः परमेश्वरः **यं** मणिम् **आशवे** शीघ्रगामिने **वाताय** वायवे **अबध्नात्** बबन्ध, **सः** मणिः **अस्मै** वायवे **वाजिनं** वेगसां बलं **भूयोभूयः** बहुवारं पुनः पुनः **श्वः श्वः** प्रतिदिनं **दुहे** दुग्धे, इत्यादि पूर्ववत् ।। ११ ।।

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तेनेमां मणिना कृषिमश्विनावभि रक्षतः ।
स भिषग्भ्यां महो दुहे भूयोभूयः । ० ।। १२ ।।

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।
तेन । इमाम् । मणिना । कृषिम् । अश्विनौ । अभि । रक्षतः ।
सः । भिषक्ऽभ्याम् । महः । दुहे । ० ।। १२ ।।

मन्त्रेऽस्मिन् 'आशवे' पर्यन्तं 'पूर्ववत् । **तेन मणिना अश्विनौ** नासत्यौ **कृषिं** सस्यादिसम्पत्त्या क्षेत्रम् **अभिरक्षतः** क्षेत्रस्य रक्षां विदधतः यत्र औषध्यादीनां बाहुल्यं जायते । इत्थं **सः** मणिः **भिषग्भ्यां** भिषग्रूपाभ्याम् अश्विभ्यां 'अश्विनौ वै देवानां भिषजौ' ( ऐ० ब्रा० १.१८ ) **महः** महिमानं **दुहे**, दोग्धि । शेषं पूर्ववत् ।। १२ ।।

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तं विभ्रत् सविता मणिं तेनेदमजयत् स्वः ।
सो अस्मै सूनृतां दुहे भूयोभूयः ।०।। १३ ।।

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।
तम् । विभ्रत् । सविता । मणिम् । तेन । इदम् । अजयत् ।
स्वः । सः । अस्मै । सूनृताम् । दुहे । ० ।। १३ ।।

'आशवे' पर्यन्तं पूर्ववत् । **तम् मणिं सविता** सर्वप्रेरकः सर्वोत्पादको वा स देवः **बिभ्रत्** अधारयत् । **तेन** मणिना **इदं स्वः** स्वर्गाख्यं देवस्थानं **सः** सविता **अजयत्** जितवान् । **सः** मणिः **अस्मै** सवित्रे **सूनृतां** शोभनां परिमिताम्, ऋतात्मिकां च **वाचं दुहे** दोग्धि । प्रिय-सत्यात्मिकां वाणीम् वा । सु+'ऊन परिहाणे' सुष्टु ऊनयति दूरीकरोति, अप्रियं परिहाणं नयति कटुतामिति । 'भूयोभूय' इत्यादि पूर्ववत् ।। १३ ।।

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तमापो बिभ्रतीर्मणिं सदा धावन्त्यक्षिताः ।
स आभ्योऽमृतमिद् दुहे भूयोभूयः । ० ॥ १४ ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । वाताय । आशवे ।
तम् । आपः । बिभ्रतीः । मणिम् । सदा । धावन्ति ।
अक्षिताः । सः । आभ्यः । अमृतम् । इत् । दुहे । ० ॥ १४ ॥

'आशवे'पर्यन्तं पूर्ववत् । आपः जलानि तं मणिं बिभ्रतीः धारयन्तीः अक्षिताः अक्षीणाः सत्यः सदा सततम् अहर्निशं धावन्ति प्रवहन्ति । सः मणिः आभ्यः अद्भ्यः अमृतं साक्षादमृतत्वं अमृततुल्यं पौष्टिक-रसादिकं वा, दुहे प्रपूरयति । शेषं पूर्ववत् ॥ १४ ॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तं राजा वरुणो मणिं प्रत्यमुञ्चत शंभुवम् ।
सो अस्मै सत्यमिद् दुहे भूयोभूयः । ० ॥ १५ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।
तम् । राजा । वरुणः । मणिम् । प्रति । अमुञ्चत । शम्-
ऽभुवम् । सः । अस्मै । सत्यम् । इत् । दुहे । ० ॥ १५ ॥

'आशवे'पर्यन्तं पूर्ववत् । तं मणिं शंभुवं शान्तिप्रदं कल्याणकारकं राजा वरुणः प्रत्यमुञ्चत स्वीकृतवान् । सः मणिः अस्मै वरुणाय इत् नूनं सत्यं यथार्थतां दुहे दुग्धे । 'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' (तै० ब्रा० १. ७. २. ६ ) । शेषं पूर्ववत् ॥ १५ ॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तं देवा बिभ्रतो मणिं सर्वांल्लोकान् युधाऽजयन् ।
स एभ्यो जितिमिद् दुहे भूयोभूयः । ० ॥ १६ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।

तम् । देवाः । बिभ्रतः । मणिम् । सर्वान् । लोकान् । युधा । अजयन् । सः । एभ्यः । जितिम् । इत् । दुहे । ० ॥ १६ ॥

'आशवे' पर्यन्तं पूर्ववत् । तं मणिं देवाः अमराः बिभ्रतः धारयन्तः सर्वान् लोकान् युधा युद्धेन अजयन् जितवन्तः । सः मणिः एभ्यः देवेभ्यः जितिं जयम्, दुहे दुग्धे । शेषं पूर्ववत् ॥ १६ ॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तमिमं देवता मणिं प्रत्यमुञ्चन्त शंभुवम् ।
स आभ्यो विश्वमिद् दुहे भूयोभूयः
श्वःश्वस्तेन त्वं द्विषतो जहि ॥ १७ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे । तम् । इमम् । देवताः । मणिम् । प्रति । अमुञ्चन्त । शम्ऽभुवम् । सः । आभ्यः । विश्वम् । इत् । दुहे । भूयःऽभूयः । श्वःऽश्वः । तेन । त्वम् । द्विषतः । जहि ॥ १७ ॥

'आशवे'पर्यन्तं पूर्ववत् । शंभुवं कल्याणकारिणं मणिं देवताः सूर्यचन्द्राद्याः सर्वा देवताः प्रत्यमुञ्चन्त स्वीकृतवन्तः । अतः सः मणिः आभ्यः देवताभ्यः विश्वम् सकलभुवनम् इत् निश्चयेन दुहे दुग्धे । शेषं पूर्ववत् ॥ १७ ॥

ऋतवस्तमबध्नतार्तवास्तमबध्नत ।
संवत्सरस्तं बद्ध्वा सर्वं भूतं वि रक्षति ॥ १८ ॥

ऋतवः । तम् । अबध्नत । आर्तवाः । तम् । अबध्नत । सम्ऽवत्सरः । तम् । बद्ध्वा । सर्वम् । भूतम् । वि । रक्षति ॥ १८ ॥

तं मणिम् ऋतवः वसन्त-ग्रीष्मादयः षड् ऋतवः, आर्तवाः ऋतुषु समुत्पन्नाः पदार्थाश्च अबध्नत अधारयन् । एवमेव संवत्सरः तं मणिं बद्ध्वा सर्वं भूतम् अखिलं भूतजातं विरक्षति पालयति ॥ १८ ॥

अन्तर्देशा अबध्नत प्रदिशस्तमबध्नत ।
प्रजापतिसृष्टो मणिर्द्विषतो मेऽधराँ अकः ॥ १९ ॥

अन्तःऽदेशाः । अबध्नत । प्रऽदिशः । तम् । अबध्नत ।
प्रजापतिऽसृष्टः । मणिः । द्विषतः । मे । अधरान् । अकः ॥१९॥

अन्तर्देशाः अन्तराले स्थिताः प्रदेशाः, यद्वा अवान्तरदिशः । प्रदिशः पूर्वादयो दिशः तं मणिम् अबध्नत अधारयन् । प्रजापतिसृष्टः प्रजापतिना समुत्पादितो मणिः मे मम द्विषतः शत्रून् अधरान् नीचान् अकः अकार्षीत् ॥ १९ ॥

अथर्वाणो अबध्नताथर्वणा अबध्नत ।
तैर्मेदिनो आङ्गिरसो दस्यूनां बिभिदुः पुरस्तेन त्वं द्विषतो जहि ॥ २० ॥

अथर्वाणः । अबध्नत । आथर्वणाः । अबध्नत ।
तैः । मेदिनः । अङ्गिरसः । दस्यूनाम् । बिभिदुः । पुरः ।
तेन । त्वम् । द्विषतः । जहि ॥ २० ॥

तं मणिम् अथर्वाणः अथर्वगोत्रोत्पन्नाः ऋषयः अबध्नत अधारयन् । तदनन्तरं आथर्वणाः तत्पुत्राश्चापि अबध्नत बबन्धुः । तैः अथर्वभिः सह मेदिनः स्नेहिनः 'ञिमिदा स्नेहने', अङ्गिरसः अङ्गिरागोत्रोत्पन्नाः महर्षयः दस्यूनाम् उपक्षयकर्तॄणां पुरः नगराणि बिभिदुः चिच्छिदुः, व्यनाशयन् इत्यर्थः । तेन मणिना त्वम् अपि द्विषतः शत्रून् जहि मारय, घातय ॥ २० ॥

तं धाता प्रत्यमुञ्चत स भूतं व्यकल्पयत् ।
तेन त्वं द्विषतो जहि ॥ २१ ॥

तम् । धाता । प्रति । अमुञ्चत । सः । भूतम् । वि ।
अकल्पयत् । तेन । त्वम् । द्विषतः । जहि ॥ २१ ॥

तं मणिं धाता सर्वस्य धारकः प्रत्यमुञ्चत स्वीकृतवान् । तस्य मणेः प्रभावेण सः धाता भूतं प्राणिजातं व्यकल्पयत् विरचयामास । तेन मणिना त्वम् अपि द्विषतः शत्रून् जहि विनाशय ॥ २१ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं मणिरागमद् रसेन सह वर्चसा ॥ २२ ॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् ।
सः । मा । अयम् । मणिः । आ । अगमत् । रसेन । सह ।
वर्चसा ॥ २२ ॥

इत आसूक्तं मणिधारणेच्छुः मणेः गौरवं वर्णयन् तमभीष्ट-पूरणाय प्रार्थयते—असुरक्षितिम् असुराणां क्षयकर्तारं यं मणिं बृहस्पतिः देवेभ्यः अबध्नात् देवान् बबन्ध, द्वितीयार्थे चतुर्थी। रसेन अन्नादि-विविधरसेन वर्चसा तेजसा सह सः अयं मणिः मा माम् आगमत् प्राप्तवान् ॥ २२ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं मणिरागमत् सह गोभिरजाविभिरन्नेन प्रजया सह ॥ २३ ॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् ।
सः । मा । अयम् । मणिः । आ । अगमत् । सह । गोभिः ।
अजाविऽभिः । अन्नेन । प्रऽजया । सह ॥ २३ ॥

'असुरक्षितिम्' यावत् पूर्ववत्। सः मणिः गोभिः धेनुभिः, अजाविभिः अजाश्च अवयश्च ताभिः अन्नेन प्रजया सन्तत्या सह, आगमत् प्राप्तवान् ॥ २३ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं मणिरागमत् सह व्रीहियवाभ्यां महसा भूत्या सह ॥ २४ ॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् ।
सः । मा । अयम् । मणिः । आ । अगमत् । सह । व्रीहि-ऽयवाभ्याम् । महसा । भूत्या । सह ॥ २४ ॥

आगमत् यावत् पूर्ववत्। व्रीहियवाभ्याम् धान्ययवाभ्यां महसा तेजसा भूत्या ऐश्वर्येण च सह। शेषं पूर्ववत् ॥ २४ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम्।
स माऽयं मणिरागमन्मधोर्घृतस्य धारया कीलालेन मणिः सह ॥ २५ ॥

यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्। मणिः। आ। अगमत्। मधोः। घृतस्य। धारया। कीलालेन। मणिः। सह ॥ २५ ॥

'आगमत्' यावत् पूर्ववत्। मधोः मधुररसस्य, 'ओषधीनां वा एष परमो रसो यन्मधु' (शत० ब्रा० ११. ५. ४. १८) घृतस्य च धारया प्रवाहेण कीलालेन सात्त्विकान्नेन सह 'कीलालः अन्ननाम' (निघ० २. ७)। शिष्टं समानम् ॥ २५ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम्।
स माऽयं मणिरागमदूर्जया पयसा सह द्रविणेन श्रिया सह ॥२६॥

यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्। मणिः। आ। अगमत्। ऊर्जया। पयसा। सह। द्रविणेन। श्रिया। सह ॥ २६ ॥

'आगमत्' यावत् पूर्ववत्। ऊर्जया बलेन पयसा दुग्धेन सह द्रविणेन धनेन श्रिया लक्ष्म्या च सह। शिष्टं समानम् ॥ २६ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम्।
स माऽयं मणिरागमत् तेजसा त्विष्या सह
यशसा कीर्त्या सह ॥ २७ ॥

यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्। मणिः। आ। अगमत्। तेजसा। त्विष्या। सह। यशसा। कीर्त्या। सह ॥ २७ ॥

**'आगमत्** यावत् पूर्ववत् । **तेजसा त्विष्या** दीप्त्या 'त्विष् दीप्तौ' इन्, कित्, **सह यशसा** वैदिकानुष्ठानप्रभवेन यशसा, **कीर्त्या** लौकिक-कीर्त्या **च सह** । शिष्टं समानम् ॥ २७ ॥

**यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।**
**स माऽयं मणिरागमत् सर्वाभिर्भूतिभिः सह ॥ २८ ॥**

**यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरक्षितिम् । सः । मा । अयम् । मणिः । आ । अगमत् । सर्वाभिः । भूतिऽभिः । सह ॥ २८ ॥**

**'आगमत्'** यावत् पूर्ववत् । **सर्वाभिः** अखिलाभिः **भूतिभिः सह** सर्वविद्याभिः संपत्तिभिः सह । शिष्टं समानम् ॥ २८ ॥

**तमिमं देवता मणिं मह्यं ददतु पुष्टये ।**
**अभिभुं क्षत्रवर्धनं सपत्नदम्भनं मणिम् ॥ २९ ॥**

**तम् । इमम् । देवताः । मणिम् । मह्यम् । ददतु । पुष्टये । अभिऽभुम् । क्षत्रऽवर्धनम् । सपत्नऽदम्भनम् । मणिम् ॥ २९ ॥**

**देवताः** सर्वे इन्द्रादिदेवाः **तम् इमं मणिं मह्यं पुष्टये** आध्यात्मिकाधि-भौतिकादिसर्वविधक्षेत्रेषु पुष्टिलाभाय वृद्ध्यै च **ददतु** प्रयच्छतु । मणिं विशिनष्टि—**अभिभुम्** शत्रूणां अभिभवकर्तारम्, **क्षत्रवर्धनम्** क्षात्रशक्तिसंवर्धनकरम्, च **सपत्नदम्भनम्** प्रतिस्पर्द्धिशत्रूणां दमन-कारकमिति ॥ २९ ॥

**ब्रह्मणा तेजसा सह प्रति मुञ्चामि मे शिवम् ।**
**असपत्नः सपत्नहा सपत्नान् मेऽधराँ अकः ॥ ३० ॥**

**ब्रह्मणा । तेजसा । सह । प्रति । मुञ्चामि । मे । शिवम् । असपत्नः । सपत्नऽहा । सऽपत्नान् । मे । अधरान् । अकः ॥ ३० ॥**

**ब्रह्मणा तेजसा** मन्त्रतेजसा, ब्राह्मतेजसा वा **सह मे** मह्यं **शिवं** कल्याणकारिणं मणिं **प्रतिमुञ्चामि** स्वीकरोमि, धारयामीत्यर्थः । अयं

मणिः **असपत्नः** शत्रुरहितः अपि **सपत्नहाः** शत्रुहन्ता विद्यते। एतादृशोऽयं मणिः **मे** मम **सपत्नान्** शत्रून् **अधरान्** नीचान् **अकः** अकरोत् ॥ ३० ॥

**उत्त॑रं द्वि॒षतो॒ माम॒यं म॒णिः कृ॑णोतु दे॒व॒जाः ।**
**यस्य॑ लो॒का इ॒मे त्रय॒ः पयो॑ दु॒ग्धमु॒पास॑ते ।**
**स मा॒ऽयमधि॑ रोहतु म॒णिः श्रैष्ठ्या॑य मूर्ध॒तः ॥ ३१ ॥**

**उत्ऽत॑रम् । द्वि॒षतः॑ । माम् । अ॒यम् । म॒णिः । कृ॒णोतु॒ । दे॒व॒ऽजाः । यस्य॑ । लो॒काः । इ॒मे । त्रय॑ः । पय॑ः । दु॒ग्धम् । उ॒प॒ऽआस॑ते । सः । मा॒ । अ॒यम् । अधि॑ । रो॒ह॒तु॒ । म॒णिः । श्रैष्ठ्या॑य । मू॒र्ध॒तः ॥ ३१ ॥**

**देवजाः** देवेभ्यो जातः समुत्पन्नः **अयम् मणिः मां द्विषतः** शत्रोः **उत्तरम्** उत्कृष्टं **कृणोतु** विदधातु, समुन्नतपदे स्थापयतु। **यस्य** मणेः **दुग्धं** दोहनक्रियया सम्पादितं **पयः** दुग्धं, रसम्, सारतत्त्वमिति यावत्। **इमे त्रयः लोकाः**, त्रिषु लोकेषु स्थिताः सर्वा विशः, **उपासते** सेवन्ते। **सः** एतादृशः **अयं मणिः श्रैष्ठ्याय** सर्वोच्चपदाय **मूर्धतः** शिरसः **अधि** उपरि **मा** मां **रोहतु** आरोहताम्, शोभतामित्यर्थः ॥ ३१ ॥

**यं दे॒वाः पि॒तरो॑ मनु॒ष्या॒ उप॒जीव॑न्ति स॒र्व॒दा ।**
**स मा॒यमधि॑ रोहतु म॒णिः श्रैष्ठ्या॑य मूर्ध॒तः ॥ ३२ ॥**

**यम् । दे॒वाः । पि॒तर॑ः । म॒नु॒ष्या॒ः । उ॒प॒ऽजीव॑न्ति । स॒र्व॒दा । सः । मा॒ । अ॒यम् । अधि॑ । रो॒ह॒तु॒ । म॒णिः । श्रैष्ठ्या॑य । मू॒र्ध॒तः ॥ ३२ ॥**

**देवाः पितरः मनुष्याः** एते सर्वे **यं** मणिम् **सर्वदा** निरन्तरम् **उपजीवन्ति** मणिं सन्धार्य साधु जीवन्ति। शेषं पूर्ववत् ॥ ३२ ॥

**यथा॒ बीज॑मु॒र्वरा॑यां कृ॒ष्टे फाले॑न॒ रोह॑ति ।**
**ए॒वा मयि॑ प्र॒जा प॒शवोऽन्न॑मन्न॒ं वि रो॑हतु ॥ ३३ ॥**

यथा । बीजम् । उर्वरायाम् । कृष्टे । फालेन । रोहति । एव ।
मयि । प्रऽजाः । पशवः । अन्नम्ऽअन्नम् । वि । रोहतु ॥ ३३ ॥

**यथा उर्वरायां** सर्वसस्याढ्यायां भूमौ **फालेन** सीरोपकरणेन कृष्टे सति, विलेखनद्वारा सज्जीभूते सति **बीजम् रोहति** उत्पद्यते, **एवा** एवमेव मणिप्रभावेण **मयि प्रजाः** सन्तत्यः **पशवः** गवाश्वादयः **अन्नं** सर्वविधमन्नं **विरोहतु** जायताम् ॥ ३३ ॥

यस्मै त्वा यज्ञवर्धन मणे प्रत्यमुचं शिवम् ।
तं त्वं शतदक्षिण मणे श्रैष्ठ्याय जिन्वतात् ॥ ३४ ॥

यस्मै । त्वा । यज्ञऽवर्धन । मणे । प्रतिऽअमुचम् । शिवम् । तम् ।
त्वम् । शतऽदक्षिण । मणे । श्रैष्ठ्याय । जिन्वतात् ॥ ३४ ॥

हे **यज्ञवर्धन** यज्ञयागादीनां वर्धयितः ! **मणे** ! **यस्मै** प्रयोजनाय **शिवं** शिवरूपं **त्वा** त्वाम् अहं **प्रत्यमुचम्** अधारयम्, हे **शतदक्षिण** ! बहुप्रवृद्ध बहुकुशल ! मणे ! **त्वम् तं** मणेर्धारिकम् मां **श्रैष्ठचाय** श्रेष्ठपदप्राप्त्यै **जिन्वतात्** तर्पयतु, प्रीणयतु, श्रेष्ठतां प्रापयत्विति ॥ ३४ ॥

एतमिध्मं समाहितं जुषाणो अग्ने प्रति हर्य होमैः ।
तस्मिन् विदेम सुमतिं स्वस्ति प्रजां चक्षुः पशून्त्समिद्धे
जातवेदसि ब्रह्मणा ॥ ३५ ॥

एतम् । इध्मम् । समऽआहितम् । जुषाणः । अग्ने । प्रति ।
हर्य । होमैः । तस्मिन् । विदेम । सुऽमतिम् । स्वस्ति । प्रऽजाम् ।
चक्षुः । पशून् । समऽइद्धे । जातऽवेदसि । ब्रह्मणा ॥ ३५ ॥

हे अग्ने ! **एतं समाहितं** सुष्ठु निहितं त्वयि समर्पितम् **इध्मं** समिधम्, आहुतिद्रव्यं वा **जुषाणः** प्रीतिपूर्वकं सेवमानः त्वं **होमैः** होमकाले मन्त्रोच्चारणैः सह **प्रतिहर्य** कामयस्व । **ब्रह्मणा** वेदमन्त्रेण **समिद्धे** प्रदीप्ते **तस्मिन् जातवेदसि** अग्नौ, आहुतिसमकालमेव **सुमतिं** सुबुद्धिं **स्वस्ति** कल्याणं **प्रजां** सन्ततिं **चक्षुः** दृष्टिशक्तिं **पशून्** च **विदेम** प्राप्नुयाम ॥ ३५ ॥

## सप्तमं सूक्तम् : सर्वाधार-वर्णनम्

(१–४४) ऋषिः—अथर्वा। देवता—स्कम्भः आत्मा वा। छन्दः—३–६,९, ३८,४२,४३ त्रिष्टुप्; १ विराड् जगती; २, ८ भुरिक्; ७,१३ पुरोष्णिक्; १०,१४,१६,१८,१९ उपरिष्टाद् बृहती; ११,१२,१५, २०,२२,३९ उपरिष्टाज्ज्योतिर्जगती; १७ त्र्यवसाना षट्पदा जगती; २१ बृहतीगर्भा उष्णिक्; २३–३०,३७,४० अनुष्टुप्; ३१ मध्ये ज्योतिर्जगती; ३२,३४,३६ उपरिष्टाद्विराड् बृहती; ३३ परा विराडनुष्टुप्; ३५ चतुष्पदा जगती; ३८,४२,४३ त्रिष्टुप्; ४१ आर्षी त्रिपदा गायत्री; ४४ एका० आर्च्यनुष्टुप्।

विनियोगः—'कस्मिन्नङ्गे' इति स्कम्भसूक्तम्। 'स्कम्भ' इति सनातनतमो देवो ब्रह्मणोऽप्याद्यभूतः। अतो ज्येष्ठं ब्रह्मेति तस्य संज्ञा। तस्मिन् सर्वमेतत् तिष्ठसि। एतत्सर्वं तेनाविष्टम्। विराडपि तस्मिन्नेव समाहितः। तस्मिन्नेव देवादयः सर्वे समाहिता इत्यादि वर्णनम्। अत एव अन्यसूक्तवत् अस्य लौकिकक्रियासु न विनियोगः। तत्त्वबुभुत्सव एव आत्मज्ञानाय इदं सूक्तम् अष्टमञ्च विनियोजयन्त्विवति।

कस्मिन्नङ्गे तपो अस्याधि तिष्ठति
कस्मिन्नङ्ग ऋतमस्याध्याहितम्।
क्व व्रतं क्व श्रद्धाऽस्य तिष्ठति
कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम्॥ १॥

कस्मिन्। अङ्गे। तपः। अस्य। अधि। तिष्ठति। कस्मिन्। अङ्गे। ऋतम्। अस्य। अधि। आऽहितम्। क्व। व्रतम्। क्व। श्रद्धा। अस्य। तिष्ठति। कस्मिन्। अङ्गे। सत्यम्। अस्य। प्रतिऽस्थितम्॥ १॥

**अस्य** सर्वाधारभूतस्य परब्रह्मणः **कस्मिन् अङ्गे** अवयवे **तपः** ब्रह्मचर्यादितपश्चरणं 'स तपोऽतप्यत' इति श्रुतेः। **अधितिष्ठति** सुदृढभवतिष्ठते। **अस्य कस्मिन् अङ्गे** अवयवे **ऋतं** गत्यात्मकं सत्यं ऋततन्तुर्वा **अध्याहितं** निहितो विद्यते। **अस्य क्व** कस्मिन्नङ्गे **व्रतम्** वरणीयो नियमः च **श्रद्धा** सत्ये दृढविश्वासः **क्व** कुत्र **तिष्ठति** प्रतिष्ठिते

स्तः। **अस्य कस्मिन् अङ्गे सत्यम्** यथार्थं कर्म **प्रतिष्ठितम्** दृढतया स्थितमिति विद्वद्भिः ब्रह्मजिज्ञासुभिः प्रश्नाः समाधेया इति ।। १ ।।

**कस्मादङ्गाद् दीप्यते अग्निरस्य कस्मादङ्गात् पवते मातरिश्वा ।**
**कस्मादङ्गाद् वि मिमीतेऽधि चन्द्रमा मह स्कम्भस्य मिमानो अङ्गम् ॥ २ ॥**

**कस्मात् । अङ्गात् । दीप्यते । अग्निः । अस्य । कस्मात् । अङ्गात् । पवते । मातरिश्वा । कस्मात् । अङ्गात् । वि । मिमीते । अधि । चन्द्रमाः । महः । स्कम्भस्य । मिमानः । अङ्गम् ॥ २ ॥**

**अस्य** स्कम्भभूतस्य परब्रह्मणः **कस्मात् अङ्गात् अग्निः दीप्यते** प्रकाशते, प्रज्वलति । **कस्मात् अङ्गात्** अयं **मातरिश्वा** सदागतिः पवनः **पवते** प्रवहति, 'पवते गतिकर्मा' (निघ० २.१४)। तथाऽयं **चन्द्रमाः** अस्य **महः** महतः **स्कम्भस्य** 'स्कभि प्रतिबन्धे' (३०७ भ्वा०) अच् । स्कम्भस्य सर्वाधारकस्य परमेश्वरस्य **मिमानः** मानं कुर्वाणः **वि** विविध-प्रकारेण **अधि मिमीते** स्वमार्गस्य मानं कुर्वन् आस्ते, स्वमार्गं विरचयन् प्रचलतीत्यर्थः ।। २ ।।

**कस्मिन्नङ्गे तिष्ठति भूमिरस्य कस्मिन्नङ्गे तिष्ठत्यन्तरिक्षम् ।**
**कस्मिन्नङ्गे तिष्ठत्याहिता द्यौः कस्मिन्नङ्गे तिष्ठत्युत्तरं दिवः ॥ ३ ॥**

**कस्मिन् । अङ्गे । तिष्ठति । भूमिः । अस्य । कस्मिन् । अङ्गे । तिष्ठति । अन्तरिक्षम् । कस्मिन् । अङ्गे । तिष्ठति । आऽहिता । द्यौः । कस्मिन् । अङ्गे । तिष्ठति । उत्ऽतरम् । दिवः ॥ ३ ॥**

**अस्य** सर्जनशीलस्य सर्वव्यापकस्य स्कम्भस्य **कस्मिन् अङ्गे भूमिः** पृथिवी **तिष्ठति** विराजते । इदम् अन्तरिक्षमस्य **कस्मिन् अङ्गे तिष्ठति** । एवम् **आहिता** आसमन्तात् निहिता **द्यौः** द्युलोकः अस्य **कस्मिन् अङ्गे तिष्ठति** । तथैव **दिवः** द्युलोकादपि **उत्तरम्** ऊर्ध्वतरं यल्लोकजातं

श्रूयते, तत् अस्य महतः स्कम्भस्य कस्मिन् अङ्गे तिष्ठति विराजते इति सूक्ष्मदृष्ट्या निभालनीयम् ॥ ३ ॥

क्वं॑ प्रेप्सन् दीप्यत ऊर्ध्वो अग्निः क्वं॑ प्रेप्सन् पवते मातरिश्वा॑ ।
यत्र प्रेप्सन्तीरभियन्त्यावृतः स्कम्भं तं ब्रूहि कतमः स्विदेव सः॥४॥

क्व । प्रऽईप्सन् दीप्यते । ऊर्ध्वः । अग्निः । क्व । प्रऽईप्सन् ।
पवते । मातरिश्वा । यत्र । प्रऽईप्सन्तीः । अभिऽयन्ति । आऽवृतः ।
स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ४ ॥

**क्व** कुत्र **प्रेप्सन्** प्राप्तुमिच्छन्, कमधिगन्तुम् **अग्निः ऊर्ध्वम्** ज्वालाभिरूर्ध्वाभिमुखो भूत्वा **दीप्यते** प्रज्वलति । अयमपरः अन्तरिक्षाधिपतिः **मातरिश्वा** वायुः **क्व** कुत्र **प्रेप्सन्** प्राप्तुं गन्तुमिच्छन् सततं **पवते** प्रवहति । **यत्र** यं स्थानम्, स्थानिनोरभेदात् **प्रेप्सन्ती** अभिकाङ्क्षमाणाः **आवृतः** समन्तात् वर्तनशीलाः मार्गाः, पद्धतयो वा **अभियन्ति** तमभिलक्ष्य यान्ति यत्र सततम् आगमप्रत्यागमक्रियाः प्रचलन्त्यो दृश्यन्ते । **तम्** निर्दिष्टं **स्कम्भं** सर्वाधारभूतं परमात्मानं **ब्रूहि** निर्दिश, कथय यत् **सः कतमः स्विदेव** नैकासां दृश्यमानानां दिव्यशक्तीनां मध्ये स अन्यतमः कः । स्वित् अवधारणे, निश्चयेन ब्रूहि इत्यर्थः ॥ ४ ॥

क्वार्धमासाः क्व यन्ति मासाः संवत्सरेण सह संविदानाः ।
यत्र यन्त्यृतवो यत्रार्तवाः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ ५ ॥

क्व । अर्धऽमासाः । क्व । यन्ति । मासाः । सम्ऽवत्सरेण ।
सह । सम्ऽविदानाः । यत्र । यन्ति । ऋतवः । यत्र । आर्तवाः ।
स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ५ ॥

**संवत्सरेण** हायनेन वर्षेण **सह संविदानाः** मिलिताः सन्तः **क्व** कुत्र **मासाः** चैत्रादिद्वादशमासाः, एवम् **अर्धमासाः** शुक्ल-कृष्णभेदेन स्थिताः पक्षाश्च **क्व यन्ति**, गच्छति । अथ च, **यत्र ऋतवः** वसन्तादयः षट्, **यत्र** च **आर्तवाः** ऋतुषु उत्पन्नाः धान्यफलादयश्च **यन्ति** गच्छन्ति, **तं स्कम्भं ब्रूहि** इत्यादि पूर्ववत् ॥ ५ ॥

क्वं१ प्रेप्संन्ती युवती विरूपे अहोरात्रे द्रंवतः संविदाने ।
यत्र प्रेप्संन्तीरभियन्त्यापंः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ ६ ॥

क्व । प्रेप्संन्ती इति प्रऽईप्संन्ती । युवती इति । विरूपे इति विऽरूपे । अहोरात्रे इति । द्रवतः । संविदाने इति सम्ऽविदाने । यत्रं । प्रऽईप्संन्तीः । अभिऽयान्ति । आपंः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ६ ॥

युवती यौवनवत्यौ विरूपे शुक्लकृष्णवर्णात्मके विरुद्धस्वरूपे अहोरात्रे अहश्च रात्रिश्च, उषा-सानक्तौ संविदाने मिथः सम्पृक्ते संश्लिष्टे वा भूत्वा क्व प्रेप्सन्ती कं लब्धुमिच्छन्त्यौ द्रवतः अनारतं धावतः । अहो ऋषेरथर्वणः कल्पनाविजृम्भितमेतत्, अहोरात्रयोः स्त्रीरूपत्वम्, विरुद्धरूपयोस्तयोः परस्परं संश्लेषो धावनञ्च, तदपि सपत्न्योरिव एकं पतिं परमात्मानं संगन्तुमिति ! कथञ्चित् समादधति—यत्र प्रेप्सन्तीः गन्तुमिच्छन्तीः आपः अभियन्ति सततं गच्छन्ति, प्रवहन्तीत्यर्थः, तं स्कम्भम् इत्यादि पूर्ववत् ॥ ६ ॥

यस्मिन्त्स्तब्ध्वा प्रजापतिर्लोकान्त्सर्वाँ अधारयत् ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ ७ ॥

यस्मिन् । स्तब्ध्वा । प्रजाऽपंतिः । लोकान् । सर्वान् । अधारयत् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ७ ॥

यस्मिन् स्कम्भे स्तब्ध्वा अवरुद्ध्य प्रजापतिः प्रजापालकः परमेष्ठी सर्वान् लोकान् अखिलानि भवनानि, भूतजातानि वा अधारयत् धारितवान्, तं स्कम्भम् इत्यादि पूर्ववत् ॥ ७ ॥

यत् परममवमं यच्चं मध्यमं
प्रजापंतिः ससृजे विश्वरूपम् ।
कियंता स्कम्भः प्र विवेश तत्र
यन्न प्राविंशत् कियत् तद् बंभूव ॥ ८ ॥

यत् । प॒रम॑म् । अ॒व॒मम् । यत् । च॒ । म॒ध्य॒मम् । प्र॒जाऽप॑तिः । स॒सृ॒जे । वि॒श्वऽरू॑पम् । किय॑ता । स्क॒म्भः । प्र । वि॒वे॒श॒ । तत्र॑ । यत् । न । प्र॒ऽअवि॑शत् । किय॑त् । तत् । ब॒भू॒व॒ ॥ ८ ॥

प्रजापतिः प्रजास्रष्टा ब्रह्मदेवो **यत् परमं** सर्वोत्कृष्टम्, **अवमम्** निकृष्टं **यत् च** मध्यमं **विश्वरूपं** नानारूपात्मकं जगदिदं **ससृजे** विरचयामास, तत्र **स्कम्भः** सर्वाधाररूपः परमात्माऽयं **कियता** कियदंशेन **प्रविवेश** प्रविष्टो बभूव। पक्षान्तरे **यत्** यावदंशेन स तत्र **न प्राविशत्**, ब्रह्माण्डव्यतिरिक्तः स सर्वाधाररूपस्य परमात्मनः **तत्** तादृशोंऽशः **कियत् बभूव** ब्रह्माण्डव्यतिरिक्तः सन् स कियत्परिमाणः आसीदित्यर्थः ॥ ८ ॥

किय॑ता स्क॒म्भः प्र वि॑वेश भू॒तं किय॑द् भ॒वि॒ष्यद॒न्वाश॑येऽस्य ।
एकं॒ यदङ्ग॒मकृ॑णोत् सहस्र॒धा किय॑ता स्क॒म्भः प्र वि॑वेश॒ तत्र॑ ॥ ९ ॥

किय॑ता । स्क॒म्भः । प्र । वि॒वे॒श॒ । भू॒तम् । किय॑त् । भ॒वि॒ष्यत् । अ॒नु॒ऽआश॑ये । अ॒स्य॒ । एक॑म् । यत् । अङ्ग॑म् । अकृ॑णोत् । स॒ह॒स्र॒ऽधा । किय॑ता । स्क॒म्भः । प्र । वि॒वे॒श॒ । तत्र॑ ॥ ९ ॥

**स्कम्भः भूतं** भूतकाले भूतकालिके विश्वस्मिन् **कियता** अंशेन **प्रविवेश** प्रविष्टवान् आसीत्। **अस्य** स्कम्भस्य **कियत्** अंशः **भविष्यत्** भविष्यकालीने, विश्वस्मिन् **अन्वाशये** प्रसुप्तः सन् तिष्ठते, कियता अंशेन भविष्यत्कालीने विश्वस्मिन् स्वात्मानमाविर्भूतं विधास्यतीति भावः। अस्य सर्वाधारभूतस्य **एकम्** अत्यल्पं **यद् अङ्गं** जगद्रूपं **सहस्रधा** अनेकधा विभक्तं स **अकृणोत्** कृतवान्। **तत्र** तेषु सूक्ष्मातिसूक्ष्मेषु भागेषु स **स्कम्भः कियता** कियत्परिमाणेन, कियता रूपेण वा **प्रविवेश** प्रविष्टवानिति प्रश्नाशयः ॥ ९ ॥

यत्र॑ लो॒कांश्च॒ कोशां॒श्चापो॒ ब्रह्म॒ जना॑ वि॒दुः ।
अस॑च्च॒ यत्र॒ सच्चा॒न्तः स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ १० ॥

यत्र॑ । लो॒कान् । च॒ । कोशा॑न् । च॒ । आपः॑ । ब्रह्म॑ । जनाः॑ ।

विदुः । असत् । च । यत्र । सत् । च । अन्तः । स्कम्भम् ।
तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ १० ॥

**यत्र** यस्मिन् सर्वाधारभूते स्कम्भे समाश्रितान् **लोकान्** भुवनानि **च कोशान्** धनसम्पत्त्यागारान्, पुञ्जीभूतशक्तिसञ्चयान् **च आपः** आपस्तत्त्वं **जनाः ब्रह्म** ब्रह्मरूपेण **विदुः** जानन्ति । यद्वा **आपो जनाः**, आप्ताः पुरुषाः एतान् सर्वान् ब्रह्म ब्रह्मरूपेण जानन्ति । **यत्र** यस्य षष्ठयर्थे सप्तमी, **अन्तः** अन्तर्गते **असत् च सत् च** व्यक्ताव्यक्ते स्तः । यद्वा यत्र सदसतोः अन्तः समाप्तिः, द्वयोः पराकाष्ठा भवति, तं स्कम्भम् इत्यादि पूर्ववत् ॥ १० ॥

यत्र तपः पराक्रम्य व्रतं धारयत्युत्तरम् ।
ऋतं च यत्र श्रद्धा चापो ब्रह्म समाहिताः । स्कम्भं तं० ॥ ११ ॥

यत्र । तपः । पराऽक्रम्य । व्रतम् । धारयति । उत्ऽतरम् ।
ऋतम् । च । यत्र । श्रद्धा । च । आपः । ब्रह्म ।
समूऽआहिताः । स्कम्भम् । ० ॥ ११ ॥

**यत्र** यस्मिन् ब्रह्मणि आधारभूते सति **तपः पराक्रम्य** परमां वृद्धिमवाप्य **उत्तरम्** उत्कृष्टतरं **व्रतं** वीर्यं सत्याचरणादिकं कर्म, 'एतत् खलु वै व्रतस्य रूपं यत् सत्यम्' ( माध्य० शत० १२.८.२.४ ), 'वीर्यं वै व्रतम्' (शत० १३.४.१.१५) **धारयति** दधाति । **च** पुनः **यत्र च** यस्मिश्च **ऋतं** यज्ञादिकम्, सृष्टयाधारभूता नियमा वा **श्रद्धा** सत्यधारणविश्वासः, **आपः** जलानि **च** अपि च **ब्रह्म** मन्त्राः **समाहिताः** संस्थिताः । **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ ११ ॥

यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यार्पिताः । स्कम्भम् तम्० ॥ १२ ॥

यस्मिन् । भूमिः । अन्तरिक्षम् । द्यौः । यस्मिन् ।
अधि । आऽहिता । यत्र । अग्निः । चन्द्रमाः । सूर्यः ।
वातः । तिष्ठन्ति । आर्पिताः । स्कम्भम् । तम्० ॥ १२ ॥

**यस्मिन्** ब्रह्मणि **भूमिः** पृथिवी **अन्तरिक्षं च समाहितम्**। **यस्मिन् द्यौः** द्युलोकः **अध्याहिता** निहितः, आश्रयं प्राप्तो वर्तते। अपि च **यत्र** ब्रह्मणि **अग्निः चन्द्रमाः सूर्यः वातः** एते सर्वे देवाः **आर्पिताः** आश्रिताः सन्तः **तिष्ठन्ति तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १२ ॥

**यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्वे समाहिताः।**
**स्कम्भं तं० ॥ १३ ॥**

**यस्य। त्रयःऽत्रिंशत्। देवाः। अङ्गे। सर्वे।**
**सम्ऽआहिताः। स्कम्भम्। तम्० ॥ १३ ॥**

**यस्य** ब्रह्मणः **अङ्गे** अङ्गेषु जातावेकवचनम्, **सर्वे** वसुरुद्रादित्यादयो **देवाः समाहिताः** सम्यक् निहिताः सन्ति, **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १३ ॥

**यत्र ऋषयः प्रथमजा ऋचः साम यजुर्मही।**
**एकर्षिर्यस्मिन्नार्पितः स्कम्भं तं० ॥ १४ ॥**

**यत्र। ऋषयः। प्रथमऽजाः। ऋचः। साम। यजुः। मही।**
**एकऽऋषिः। यस्मिन्। आर्पितः। स्कम्भम्। ० ॥ १४ ॥**

**यत्र** यस्मिन् परब्रह्मणि **प्रथमजाः** सृष्टयादौ सर्वप्रथमं समुत्पन्नाः **ऋषयो** वसिष्ठ-विश्वामित्रादयः, **ऋचः** ऋग्वेदः **साम** सामवेदः **यजुः** यजुर्वेदः एवं **मही** महती आत्मविद्या अथर्ववेदः आदरातिशयेन व्यञ्जनया बोधितः, पृथिवी वा। पुनः **यस्मिन् एकर्षिः** हिरण्यगर्भाख्यः, एकाकी विचरणशीलो दर्शनशक्तेः केन्द्रं सूर्यो वा **आर्पितः** सर्वाधारे तस्मिन् संस्थितः, आश्रितः **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १४ ॥

**यत्रामृतं च मृत्युश्च पुरुषेऽधि समाहिते।**
**समुद्रो यस्य नाड्यः पुरुषेऽधि समाहिताः। स्कम्भं तं० ॥ १५ ॥**

**यत्र। अमृतम्। च। मृत्युः। च। पुरुषे। अधि। समाहिते इति सम्ऽआहिते। समुद्रः। यस्य। नाड्यः। पुरुषे। अधि।**
**सम्ऽआहिताः। स्कम्भम्। ० ॥ १५ ॥**

**यत्र** यस्मिन् **पुरुषे अधि** ब्रह्माण्डपुरे शयनकर्तरि परब्रह्मणि **अमृतं मृत्युः च** परस्परविरुद्धावपि **समाहिते** सहैव स्थापितौ। **यस्य** परम-पुरुषस्य **समुद्रः** नाडीवत् गमनागमनक्रियाबहुलः सागरो **नाड्यः** तदीया आपश्च **पुरुषे** परमपुरुषे **समाहिताः** प्रतिष्ठिताः **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १५ ॥

यस्य चतस्रः प्रदिशो नाड्य१स्तिष्ठन्ति प्रथमाः।
यज्ञो यत्र पराक्रान्तः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ १६ ॥

यस्य। चतस्रः। प्रऽदिशः। नाड्यः। तिष्ठन्ति। प्रथमाः। यज्ञः। यत्र। पराऽक्रान्तः। स्कम्भम्। तम्। ब्रूहि। कतमः। स्वित्। एव। सः ॥ १६ ॥

**चतस्रः** पूर्वाद्याः **प्रदिशः यस्य प्रथमाः** प्रमुखाः **नाड्यः** नाडीसदृशाः **तिष्ठन्ति। यत्र** यस्मिश्च **यज्ञः पराक्रान्तः** सर्वोत्कृष्टरूपेण अभिव्याप्य संस्थितः, **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १६ ॥

ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम्।
यो वेद परमेष्ठिनं यश्च वेद प्रजापतिम्।
ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनुसंविदुः ॥ १७ ॥

ये। पुरुषे। ब्रह्म। विदुः। ते। विदुः। परमेऽस्थिनम्। यः। वेद। परमेऽस्थिनम्। यः। च। वेद। प्रजाऽपतिम्। ज्येष्ठम्। ये। ब्राह्मणम्। विदुः। ते। स्कम्भम्। अनुऽसंविदुः ॥ १७ ॥

**ये** योगिनः, तत्त्वज्ञानिनो वा **पुरुषे** विराट्पुरुषे **ब्रह्म विदुः** ब्रह्म-साक्षात्कारं कुर्वन्ति **ते परमेष्ठिनं** परमे स्थाने हृदयगुहायां स्थितं हिरण्यगर्भनामानमपि वस्तुतः **विदुः**। यद्वा—मूर्धान्तर्गतब्रह्मकोशे द्युलोकादपि ऊर्ध्वतमप्रदेशे स्थितं देदीप्यमानं तं परमेष्ठिनं **विदुः** लभन्ते, जानन्ति च। इत्थं **यः** परमेष्ठिनं **वेद च यः प्रजापतिं** प्रजोत्पादकं **वेद** जानाति **ये च ज्येष्ठं** सर्वातिशायिनं प्रशस्यतमं **ब्राह्मणं** ब्रह्मवेत्तारं **विदुः**

जानन्ति, लभन्ते, लब्ध्वा च प्रणिपातेन, परिप्रश्नेन, सेवया तं परिचरन्ति, **ते सर्वे स्कम्भम्** सर्वाधारं परमं ब्रह्म **अनुसंविदुः** समग्ररूपेण विजानन्ति ॥ १७ ॥

यस्य॒ शिरो॒ वैश्वान॒रश्चक्षु॑रङ्गि॒रसोऽभ॑वन् ।
अङ्गा॑नि॒ यस्य॑ या॒तवः॑ स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ १८ ॥

यस्य॑ । शिरः॑ । वै॒श्वा॒न॒रः । चक्षुः॑ । अङ्गि॑रसः । अभ॑वन् ।
अङ्गा॑नि । यस्य॑ । या॒तवः॑ । स्क॒म्भम् । तम् । ब्रू॒हि॒ । क॒त॒मः ।
स्वि॒त् । ए॒व । सः ॥ १८ ॥

**वैश्वानरः** मूर्धस्थानीयो विश्वनियन्ता वैश्वानराख्यः पुरुषः 'यः स वैश्वानरः असौ स आदित्यः' (शत० ब्रा० ९. ३. १. २५), **यस्य** स्कम्भस्य **शिरः** स्थानीयः, **अङ्गिरसः** अङ्गिरेभ्यो जाताः अग्नेर्विशिष्ट-रूपाः ऋषयश्च **चक्षुः** चक्षुस्थानीयाः अभवन् । यस्य च **यातवः** यान्ति पृथक् भवन्ति पृथक् भूत्वा ब्रह्माण्डं विरचयन्ति च ते, राक्षसा वा, ता एताः सर्वाः शक्तयः **यस्य** सर्वाधारभूतस्य **अङ्गानि** अवयवरूपाणि सन्ति **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १८ ॥

यस्य॒ ब्रह्म॒ मुख॑मा॒हु॒र्जि॒ह्वां मधु॑क॒शामु॒त ।
वि॒रा॒ज॒मूधो॒ यस्या॒हुः स्क॒म्भं तं० ॥ १९ ॥

यस्य॑ । ब्रह्म॑ । मुख॑म् । आ॒हुः । जि॒ह्वाम् । म॒धु॒ऽक॒शाम् । उ॒त ।
वि॒ऽराज॑म् । ऊधः॑ । यस्य॑ । आ॒हुः । स्क॒म्भम् । ० ॥ १९ ॥

**यस्य** स्कम्भस्य **ब्रह्म** ब्रह्मशक्ति मन्त्रराशि वा **मुखम्** मुखस्थानीयम् **आहुः** कथयन्ति विपश्चितः, **उत** अपि च **जिह्वां मधुकशां** संसारगत-सर्ववस्तुभ्यो मधुरसः कश्यते आकृष्यते यया तां परब्रह्मणः शक्तिम् । यद्वा मधुविद्यां या अश्विभ्यां समुपदिष्टा, ताम् **जिह्वां** जिह्वा-स्थानीयामाहुः । अथ च **विराजम्** विराड्पुरुषम् **ऊधः** दुग्धाधारमाहुः, **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ १९ ॥

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ २० ॥

यस्मात् । ऋचः । अपऽअतक्षन् । यजुः । यस्मात् । अपऽअकषन् ।
सामानि । यस्य । लोमानि । अथर्वऽअङ्गिरसः । मुखम् ।
स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव सः ॥ २० ॥

मन्त्रद्रष्टारः ऋषयः **यस्मात्** स्कम्भात् **ऋचः** ऋग्वेदम् **अपातक्षन्** पातयामासुः । **यस्मात्** सर्वधारात् ते **यजुः** यजुर्वेदम् **अपाकषन्** आकृष्टवन्तः । **यस्य** स्कम्भस्य **सामानि** सामवेदः **लोमानि** सन्ति । **अथर्वाङ्गिरसः** अथर्ववेदश्च **यस्य** मुखमास्ते, **तं स्कम्भम्** इत्यादि पूर्ववत् ॥ २० ॥

असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः ।
उतो सन्मन्यन्तेऽवरे ये ते शाखामुपासते ॥ २१ ॥

असत्ऽशाखाम् । प्रऽतिष्ठन्तीम् । परमम्ऽइव । जनाः ।
विदुः । उतो इति । सत् । मन्यन्ते । अवरे । ये ।
ते । शाखाम् । उपऽआसते ॥ २१ ॥

**प्रतिष्ठन्तीं** प्रकृष्टरूपेण, सूक्ष्मरूपेण विद्यमानाम् अस्य ब्रह्माण्डस्य **असत्-शाखाम्** अव्यक्तां शाखां **जनाः** आप्ताः पुरुषाः **परममिव** सर्वोत्कृष्टरूपेण **विदुः** जानन्ति, **उत** अपि च **ये** तेभ्यः आप्तेभ्यो **अवरे** अल्पज्ञाः पुरुषाः **सत्** व्यक्तमेव **मन्यन्ते** व्यक्तारिक्तमव्यक्तं न मन्यन्ते, **ते सत्-शाखां** सत्-शाखामेव **उपासते** सर्वतोभावेन **तत्रैव** संसक्ता भवन्ति ॥ २१ ॥

यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः ।
भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ २२ ॥

यत्र । आदित्याः । च । रुद्राः । च । वसवः । च । सम्ऽआहिताः । भूतम् । च । यत्र । भव्यम् । च । सर्वे । लोकाः । प्रतिऽस्थिताः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ २२ ॥

**यत्र** यस्मिन् सर्वाधारभूते ब्रह्मणि **आदित्याः** द्वादशादित्याः, **च रुद्राः** एकादश रुद्राः **च वसवः** अष्टौ वसुदेवाः, **च** एकत्रिंशद् देवाः **समाहिताः** सन्निहिताः सन्ति । **यत्र च भूतं** भूतकाले यत् किञ्चित् समुत्पन्नं तत्सर्वम् **भव्यं च** भविष्यत्कालेऽपि यद् भावि तत्सर्वम्, तथा **सर्वे लोकाः** भुवनानि **प्रतिष्ठिताः** प्रतिष्ठितानि सन्ति, **तं स्कम्भम्** इत्यादि पूववत् ॥ २२ ॥

यस्य त्रयस्त्रिंशद् देवा निधिं रक्षन्ति सर्वदा ।
निधिं तमद्य को वेद यं देवा अभिरक्षथ ॥ २३ ॥

यस्य । त्रयःऽत्रिंशत् । देवाः । निऽधिम् । रक्षन्ति । सर्वदा । निऽधिम् । तम् । अद्य । कः । वेद । यम् । देवाः । अभिऽरक्षथ ॥ २३ ॥

**यस्य** परब्रह्मणः **निधिं** ब्रह्माण्डरूपं कोशं **त्रयस्त्रिंशद् देवाः** वस्वादयः त्रयस्त्रिंशत्संख्याकाः देवाः **सर्वदा** सततं **रक्षन्ति** गोपायन्ति । **अद्य** अधुना कलियुगे **तम्** ब्रह्माण्डरूपं सुगुप्तं **निधिं** कोशं **कः वेद** विजानाति, **यं** निधिं हे देवाः ! यूयं **अभिरक्षथ** पालयथ ॥ २३ ॥

यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते ।
यो वै तान् विद्यात् प्रत्यक्षं स ब्रह्मा वेदिता स्यात् ॥ २४ ॥

यत्र । देवाः । ब्रह्मऽविदः । ब्रह्म । ज्येष्ठम् । उपऽआसते । यः । वै । तान् । विद्यात् । प्रतिऽअक्षम् । सः । ब्रह्मा । वेदिता । स्यात् ॥ २४ ॥

**यत्र** यस्मिन् प्रदेशे **ब्रह्मविदः** ब्रह्मवेत्तारो **देवाः** दिव्यपुरुषाः **ज्येष्ठं**

सर्वश्रेष्ठं **ब्रह्म उपासते** भजन्ते, सेवन्ते। **यः** जनः **वै** निश्चयेन **तान्** ब्रह्मविदः, तेषु विद्यमानं चैतन्यमिति यावत्, **प्रत्यक्षं विद्यात्** साक्षात्-कुर्यात् **सः ब्रह्मा** सर्वेषां वेदानां ज्ञाता, ब्रह्मसाक्षात्कर्ता स्कम्भ-रूपस्य सर्वाधारस्यापि **वेदिता** ज्ञाता **स्यात्** भवेत् ॥ २४ ॥

बृहन्तो नाम ते देवा येऽसतः परि जज्ञिरे।
एकं तदङ्गं स्कम्भस्यासदाहुः परो जनाः ॥ २५ ॥

बृहन्तः। नाम। ते। देवाः। ये। असतः। परि। जज्ञिरे। एकम्। तत्। अङ्गम्। स्कम्भस्य। असत्। आहुः। परः। जनाः ॥ २५ ॥

**ये असतः** अव्यक्तात् प्रकृतेः सकाशात् **परिजज्ञिरे** समुत्पन्नाः, **ते** ब्रह्माण्डस्य संरक्षकाः **देवाः बृहन्तः नाम** कामं महान्त इत्याख्यया प्रसिद्धाः स्युः। किन्तु **जनाः** तत्त्ववेत्तारः **तत् असत्** अपि **स्कम्भस्य परः** परम् **एकम्** अत्यल्पम् **अङ्गम्** अङ्गमेव **आहुः** कथयन्ति ॥ २५ ॥

यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्तयत्।
एकं तदङ्गं स्कम्भस्य पुराणमनु संविदुः ॥ २६ ॥

यत्र। स्कम्भः। प्रऽजनयन्। पुराणम्। विऽअवर्तयत्। एकम्। तत्। अङ्गम्। स्कम्भस्य। पुराणम्। अनुऽसंविदुः ॥२६॥

**यत्र स्कम्भः** सर्वाधारः परमात्मा **प्रजनयन्** सृष्टयुत्पत्तिं कुर्वन् **पुराणम्** पुराणमेव **व्यवर्तयत्** पूर्वतनीयसत्यादिचतुर्युगान् पुनरपि सत्यादि-युगरूपेण आवर्तयति, **पुराणम्** पुराणमिति आख्यया बोध्यमानं तदपि स्कम्भस्यैव अङ्गमिति तत्त्वज्ञाः **अनुसंविदुः** जानन्तीत्यर्थः ॥ २६ ॥

यस्य त्रयस्त्रिंशद् देवा अङ्गे गात्रा विभेजिरे।
तान् वै त्रयस्त्रिंशद्देवानेके ब्रह्मविदो विदुः ॥ २७ ॥

यस्य। त्रयःऽत्रिंशत्। देवाः। अङ्गे। गात्रा। विऽभेजिरे। तान्। वै। त्रयःऽत्रिंशत्। देवान्। एके। ब्रह्मऽविदः। विदुः ॥ २७ ॥

यस्य स्कम्भरूपस्य सर्वाधारस्य अङ्गे शरीरे त्रयस्त्रिंशत् वस्वादयो देवाः गात्रा स्व-स्वशरीराणि विभेजिरे विभज्य स्थापितवन्तः। एके ब्रह्मविदः ब्रह्मवेत्तारः वै एव तान् त्रयस्त्रिंशद्देवान् सर्वाधारशक्तिरूपेण विदुः जानन्ति ॥ २७ ॥

हिरण्यगर्भं परममनत्युद्यं जना विदुः।
स्कम्भस्तदग्रे प्रासिञ्चद्धिरण्यं लोके अन्तरा ॥ २८ ॥

हिरण्यऽगर्भम्। परमम्। अनतिऽउद्यम्। जनाः। विदुः। स्कम्भः। तत्। अग्रे। प्र। असिञ्चत्। हिरण्यम्। लोके। अन्तरा ॥ २८ ॥

जनाः सामान्यज्ञानवन्तो जनाः हिरण्यगर्भम् हिरण्यगर्भाख्यं पुरुषम् परमं सर्वोत्कृष्टम् अनत्युद्यं वर्णनातीतं 'नेति-नेति' पदैः यथाकथञ्चित् व्यवहार्यं परमात्मरूपत्वेन विदुः जानन्ति। किन्तु स्कम्भः सर्वाधारभूतं ब्रह्मैव अग्रे आदिकाले, सृष्टयादौ तत् हिरण्यम् हिरण्यगर्भम् लोके अन्तरा लोकानामन्तः प्रासिञ्चत् सिक्तवान्, स्थापितवानित्यर्थः ॥ २८ ॥

स्कम्भे लोकाः स्कम्भे तपः स्कम्भेऽध्यृतमाहितम्।
स्कम्भं त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम् ॥ २९ ॥

स्कम्भे। लोकाः। स्कम्भे। तपः। स्कम्भे। अधि। ऋतम्। आऽहितम्। स्कम्भं। त्वा। वेद। प्रतिऽअक्षम्। इन्द्रे। सर्वम्। सम्ऽआहितम् ॥ २९ ॥

स्कम्भे सर्वाधारभूते ब्रह्मणि लोकाः चतुर्दश भुवनानि निहितानि। स्कम्भे एव तपः सामर्थ्यं तपश्चरणं वा निहितम्। अपिच स्कम्भे अधि ऋतं सृष्टियज्ञप्रवर्तकं नियमादिकम् आहितम् समाहितमास्ते। हे स्कम्भ सर्वाधार! अहं भवत्कृपया त्वा त्वां प्रत्यक्षं वेद साक्षात्करोमि। इन्द्रे परमैश्वर्यसम्पन्ने त्वयि सर्वम् निखिलं जगत् समाहितम् सम्यग्धृतम्, वर्तत इति शेषः ॥ २९ ॥

इन्द्रे लोका इन्द्रे तप इन्द्रेऽध्यृतमाहितम् ।
इन्द्रं त्वा वेद प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम् ॥ ३० ॥

इन्द्रे । लोकाः । इन्द्रे । तपः । इन्द्रे । अधि । ऋतम् । आऽहितम् । इन्द्रम् । त्वा । वेद । प्रतिऽअक्षम् । स्कम्भे । सर्वम् । प्रतिऽस्थितम् ॥ ३० ॥

इन्द्रे परमैश्वर्यसम्पन्ने स्कम्भरूपे ब्रह्मणि। पूर्वमन्त्रतोऽत्र केवलं उद्दिष्टस्य नामतो भेदः–एकत्र स्कम्भ इति, अत्र च इन्द्र इति। शिष्टं सर्वं समानम् ॥ ३० ॥

नाम नाम्ना जोहवीति पुरा सूर्यात् पुरोषसः ।
यदजः प्रथमं संबभूव स ह तत् स्वराज्य-
मियाय यस्मान्नान्यत् परमस्ति भूतम् ॥ ३१ ॥

नाम । नाम्ना । जोहवीति । पुरा । सूर्यात् । पुरा । उषसः । यत् । अजः । प्रथमम् । सम्ऽबभूव । सः । ह । तत् । स्वऽराज्यम् । इयाय । यस्मात् । न । अन्यत् । परम् । अस्ति । भूतम् ॥ ३१ ॥

**पुरा सूर्यात्** सूर्योदयात् पूर्वम् **पुरा उषसः** उषसश्चापि पूर्वं ब्राह्मे-मुहूर्ते । यद्वा–'सूर्यात् पुरा, उषसः पुरा' इत्यस्य सूर्योत्पत्तेः उषसश्च उत्पत्तेः पूर्वं सृष्टिकाले इत्यर्थः । प्रबुध्य यः जनः **नाम** परमेश्वरस्य **नाम नाम्ना जोहवीति** प्रणवाद्यनेकनामभिः जोहवीति=पौनःपुन्येन, भृशं आह्वयति । **यत्** अनेन नामजपेन, भृशमाह्वानेन वा **अजः** अजन्मा सः भगवान् **यत् प्रथमं** येन रूपेण सर्वप्रथमं **सम्बभूव** भक्तहृदये प्रकाशितो भवति तेन **सः** भक्तः **ह** नूनं **तत् स्वराज्यं** स्वयं देदीप्यमान-प्रदेशं सततं ज्योतिर्मयम् आत्मराज्यम् **इयाय** प्राप्नोति, **यस्मात् अन्यत् परम्** उत्कृष्टं **भूतम्** अधिगन्तव्यं तत्त्वं स्थानं वा **न** विद्यते। यद्वा— **पुरा सूर्यात्** सूर्यस्य पूर्वम्, **पुरा उषसः** उषातः पर्वञ्च सृष्टेः प्रारम्भे **नाम्ना नाम** भक्तास्तं परमात्मानं विभिन्नैः नामभिः **जोहवीति** भृशं पौनःपुन्येन वा आकारयन्ति, **यत् अजः** अजन्मा अपि **प्रथमं** सर्वप्रथ

  

संबभूव समुत्पन्न इति, ह निश्चयेन, नूनम्, सः आह्वाता तत् स्वराज्यम् तं स्वयंप्रकाशमानं रूपम् इयाय प्राप, प्राप्नोति, यस्मात् परम् श्रेष्ठम् अन्यत् भूतम् अन्यः कोऽपि पदार्थो नास्ति न वर्तते इति ॥ ३१ ॥

यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३२ ॥

यस्य । भूमिः । प्रऽमा । अन्तरिक्षम् । उत । उदरम् । दिवम् । यः । चक्रे । मूर्धानम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३२ ॥

इतः ईश्वरशरीरं वर्ण्यते—भूमिः इयं पृथिवी यस्य सर्वाधारस्य प्रमा मापनसाधनं पादमूलमित्यर्थः । उत अपि च अन्तरिक्षम् उदरम् उदरस्थानीयमस्ति । यः पुनः परब्रह्म दिवं द्युलोकं मूर्धानम् आत्मनः मूर्धस्थानीयं चक्रे कल्पयामास, तस्मै वेदान्तवेद्याय ज्येष्ठाय ब्रह्मणे तृतीये ज्येष्ठस्थाने स्थिताय परब्रह्मणे नमः । प्रकृति-जीवावपि ब्रह्मनाम्ना उच्येते, 'यदा त्रयं विन्दते ब्रह्ममेतत्' इति श्रुतेः । त्रयम् प्रकृति-जीव-परमात्मन इत्यर्थः ॥ ३२ ॥

यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः ।
अग्निं यश्चक्र आस्यं[1] तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३३ ॥

यस्य । सूर्यः । चक्षुः । चन्द्रमाः । च । पुनःऽनवः । अग्निम् । यः । चक्रे । आस्यम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३३ ॥

यस्य ज्येष्ठब्रह्मणः सूर्यः भास्करः च तथा पुनर्नवः शुक्ल-कृष्णपक्ष-परम्परया पुनः पुनः नवतां दधानः चन्द्रमाः उभावेतौ चक्षुः नेत्रद्वय-स्थानीयौ स्तः । यः परं ब्रह्म अग्निम् आस्यं मुखस्थानीयं चक्रे कृतवान्, तस्मै इत्यादि पूर्ववत् ॥ ३३ ॥

यस्य वातः प्राणापानौ चक्षुरङ्गिरसोऽभवन् ।
दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३४ ॥

यस्य । वातः । प्राणापानौ । चक्षुः । आङ्गिरसः । अभवन् । दिशः । यः । चक्रे । प्रऽज्ञानीः । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३४ ॥

वातः पवनः यस्य प्राणापानौ प्राणाऽपानौ, श्वासोच्छ्वासरूपौ वा, अङ्गिरसः चक्षुः चक्षुस्थानीयाः, अभवन् अग्नेः जाताः अङ्गिरसः नेत्रतुल्याः सञ्जाताः, यः परब्रह्म दिशः पूर्वादिदिशः प्रज्ञानीः प्रकृष्टज्ञानोपलब्धिसाधनभूतौ कर्णौ चक्रे कृतवान्, तस्मै इत्यादि पूर्ववत् ॥ ३४ ॥

स्कम्भो दाधार द्यावापृथिवी उभे इमे
स्कम्भो दाधारोर्व१न्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वीः स्कम्भ इदं
विश्वं भुवनमा विवेश ॥ ३५ ॥

स्कम्भः । दाधार । द्यावापृथिवी इति । उभे इति । इमे इति । स्कम्भः । दाधार । उरु । अन्तरिक्षम् । स्कम्भः । दाधार । प्रऽदिशः । षट् । उर्वीः । स्कम्भे । इदम् । विश्वम् । भुवनम् । आ । विवेश ॥३५॥

स्कम्भः सर्वाधारकं ब्रह्म द्यावापृथिवी द्युलोकं पृथिवीलोकञ्च उभे इमे एतद्द्वयं दाधार धारयामास । एवमेव सः स्कम्भः उरु विस्तृतम् अन्तरिक्षम् अपि दाधार । एवम् सः स्कम्भः ऊर्वीः विशालाः षट् प्रदिशः पूर्वादिचतस्रः, ऊर्ध्वाधस्तनाभ्यां सह षट् दिशः दाधार । इत्थं स्कम्भे इदम् दृश्यमानं विश्वम् सकलं भुवनम् चतुर्दश भुवनानि आविवेश प्रविवेश, ओत-प्रोतानि विद्यन्ते इत्यर्थः ॥ ३५ ॥

यः श्रमात् तपसो जातो लोकान्त्सर्वांन्त्समानशे ।
सोमं यश्चक्रे केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३६ ॥

यः । श्रमात् । तपसः । जातः । लोकान् । सर्वान् । सम्ऽआनशे । सोमम् । यः । चक्रे । केवलम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३६ ॥

यः सर्वाधारः परमात्मा **श्रमात्** परिश्रमात् **तपसः** तपश्चरणात् च **जातः** रूपं रूपं नवजीवनं वा सन्धार्य समुत्पन्नः, 'रूपं रूपं मघवा बोभवीति', 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतेः। **यः** च **सर्वान् लोकान् समानशे** अभिव्याप्तवान्। अपि च **यः सोमं** केवलं स्वात्मार्थम् अन्नरूपेण **चक्रे** निर्मिमे, **तस्मै** इत्यादि पूर्ववत्॥ ३६॥

कथं वातो नेलयति कथं न रमते मनः।
किमापः सत्यं प्रेप्सन्तीर्नेलयन्ति कदा चन॥ ३७॥

कथम्। वातः। न। इलयति। कथम्। न। रमते। मनः। किम्। आपः। सत्यम्। प्रऽईप्सन्तीः। न। इलयन्ति। कदा। चन॥ ३७॥

**वातः** वायुदेवः **कथं** कुतः **न इलयति** स्वपिति, न विरमतीत्यर्थः। 'इल स्वप्न-क्षेपणयोः' (१३५८ तुदा०)। **मनः कथं** कुतः **न रमते** एकस्मिन् स्थाने न स्तभ्नाति। **आपः** जलानि **किम् सत्यं प्रेप्सन्तीः** प्राप्तुमिच्छन्त्यः **कदाचन** कदापि **न इलयन्ति** एकस्मिन् स्थाने तिष्ठन्ति, सततं गतिशीला भवन्तीत्यर्थः॥ ३७॥

महद् यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे।
तस्मिन् छ्रयन्ते य उ के च देवा वृक्षस्य स्कन्धः परित इव शाखाः॥ ३८॥

महत्। यक्षम्। भुवनस्य। मध्ये। तपसि। क्रान्तम्। सलिलस्य। पृष्ठे। तस्मिन्। श्रयन्ते। ये। ऊं इति। के। च। देवाः। वृक्षस्य। स्कन्धः। परितःऽइव। शाखाः॥३८॥

**महत्** बृहत् **यक्षं** यजनीयं पूजनीयं वा ब्रह्म, 'यक्ष पूजायाम्' (१६९३ चुरा०) छञ्। **भुवनस्य** ब्रह्माण्डस्य **मध्ये** विद्यमानस्य **सलिलस्य पृष्ठे** आन्तरिक्ष्यापां पृष्ठे **तपसि क्रान्तं** प्रयतमानं, संलग्नम् अवतिष्ठते। **सलिलस्य** सागरस्य **पृष्ठे य उ के च देवाः** ये केचन इन्द्रादयो देवाः **तस्मिन्** यक्षे तथैव **श्रयन्ते** समाश्रितास्तिष्ठन्ति, **इव**

यथा वृक्षस्य महीरुहस्य स्कन्धः परितः काण्डस्य परितः शाखाः श्रयन्ते इत्यर्थः ॥ ३८ ॥

यस्मै॒ हस्ता॑भ्यां पादा॑भ्यां वा॒चा श्रोत्रे॑ण॒ चक्षु॑षा ।
यस्मै॑ दे॒वाः सदा॑ ब॒लिं प्र॒यच्छ॑न्ति॒ विमि॒तेऽमि॑तं
स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ ३९ ॥

यस्मै॑ । हस्ता॑भ्याम् । पादा॑भ्याम् । वा॒चा । श्रोत्रे॑ण । चक्षु॑षा । यस्मै॑ । दे॒वाः । सदा॑ । ब॒लिम् । प्र॒ऽयच्छ॑न्ति । विऽमि॑ते । अमि॑तम् । स्क॒म्भम् । तम् । ब्रू॒हि । क॒त॒मः । स्वि॒त् । ए॒व । सः ॥ ३९ ॥

**यस्मै** परब्रह्मणे **हस्ताभ्याम्** करद्वयेन **पादाभ्याम्** पादद्वयेन **वाचा** वाण्या **श्रोत्रेण** कर्णेन **चक्षुषा** नेत्रेण च **देवाः** इन्द्रादयो देवाः **सदा** निरन्तरं **विमिते** विशेषेण परिमितेऽस्मिन् जगति **अमितम्** अपरिमितम्, अन्यूनम् अहर्निशमित्यर्थः, **बलिं** सत्कारं पूजां वा **प्रयच्छन्ति** ददाति, राज्ञे करवत्, येन जगदिदं सदा प्रचलत् आस्ते, **तं स्कम्भं ब्रूहि** इत्यादि व्याख्यातपूर्वम् ॥ ३९ ॥

अप॒ तस्य॑ ह॒तं तमो॒ व्यावृ॑त्तः स पा॒प्मना॑ ।
सर्वा॑णि॒ तस्मि॒न् ज्योतीं॑षि॒ यानि॒ त्रीणि॑ प्र॒जाप॑तौ ॥ ४० ॥

अप॑ । तस्य॑ । ह॒तम् । तमः॑ । वि॒ऽआवृ॑त्तः । सः । पा॒प्मना॑ । सर्वा॑णि । तस्मि॑न् । ज्योतीं॑षि । यानि॑ । त्रीणि॑ । प्र॒जाऽप॑तौ ॥ ४० ॥

**तस्य** सप्तम्यर्थे षष्ठी, तस्मिन्, सर्वाधारे ब्रह्मणि **तमः** सर्वविधमन्धतमः **अपहतं** दूरीभूतम् । **सः** परमात्मा **पाप्मना** सर्वविधेन पापेन **व्यावृत्तः** दूरे वर्तते । **यानि त्रीणि** ज्योतींषि परमाणूनां संयोग-वियोग-स्थितिरूपाणि सत्त्वरजस्तमोरूपाणि वा **प्रजापतौ** वर्तन्ते, तानि **सर्वाणि ज्योतींषि तस्मिन्** स्कम्भरूपे ब्रह्मणि, वर्तन्ते इति शेषः । यद्वा–**तस्य** पुंसः **तमः** अज्ञानान्धन्तमः **अपहतं** विनष्टं भवति, **पाप्मना** पापेन च **स व्यावृत्तः** विमुक्तश्च जायते, तथैव **प्रजापतौ** प्रजापालके **तस्मिन्** परमेश्वरे

**यानि त्रीणि** इन्द्रिय-मनो-बुद्धिरूपाणि, अग्नि-विद्युत्-सूर्यरूपाणि वा **ज्योतींषि** तानि सर्वाणि **तस्मिन्** पुरुषे प्रादुर्भवन्ति ॥ ४० ॥

यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद ।
स वै गुह्यः प्रजापतिः ॥ ४१ ॥

यः । वेतसम् । हिरण्ययम् । तिष्ठन्तम् ।
सलिले । वेद । सः । वै । गुह्यः । प्रजाऽपतिः ॥ ४१ ॥

**यः** विद्वान् **सलिले** अप्स्वन्तः **तिष्ठन्तं** प्रतिष्ठितं **हिरण्ययं** हिरण्यमयं **वेतसं** 'वेञ् तन्तुसन्ताने (१००६४भ्वा०) इत्यस्मात् 'वेञस्तुट् च' (उणा० ३.११८) इत्यनेन असच् । ऊयतेऽनेन वस्त्रादिकं तम् । ऋत-तन्तुं वयनसाधनं **वेद** जानाति **वै** नूनम् **सः** पुरुषः **गुह्यः** गुहानिहितः, प्रच्छन्नः **प्रजापतिः** प्रजापतितुल्य इति ध्येयम् ॥ ४१ ॥

तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम् ।
प्रान्या तन्तूंस्तिरते धत्ते अन्या नाप वृञ्जाते न गमातो अन्तम् ॥ ४२ ॥

तन्त्रम् । एके इति । युवती इति । विरूपे इति विऽरूपे ।
अभिऽआक्रामम् । वयतः । षट्ऽमयूखम् । प्र । अन्या ।
तन्तून् । तिरते । धत्ते । अन्या । न । अप । वृञ्जाते इति ।
न । गमातः । अन्तम् ॥ ४२ ॥

अहोरात्रं युवतीद्वयरूपेण निरूप्य ऋतुभिः दिग्भिश्च सहैव ताभ्यां संवत्सरात्मकं कालरूपं वस्त्रवयनात्मिकां परमात्मनो निर्विशेषां कलामध्यवस्यति मन्त्रकृदृषिः—**एके** एका च एका च एके, द्वे इत्यर्थः, **विरूपे** शुक्ल-कृष्णरूपाभ्यां तमःप्रकाशाभ्यां वा विरुद्धे रूपे, दिन-प्रभारात्र्यात्मके **युवती** यौवनवत्यौ, नित्यं नवनवायमाने स्त्रियौ **अभ्याक्रामं** मिथः अन्याम् अन्यां प्रति आक्रम्य **षण्मयूखम्** षड्ऋतुरूपैः दिग्षट्करूपैर्वा काष्ठखण्डैः 'खूटी'ति भाषाभाषितैः युतम्, **तन्त्रम्** संवत्सरात्मक-कालरूपं जालम् 'तनु विस्तारे' (१४६४ तना०) ष्ट्रन् ।

**वयतः** विस्तारयतः। तयोर्मध्ये **अन्या** एका युवती **तन्तून्** अहः स्वरूपाणि वस्तुसूत्राणि **प्र तिरते** प्रसारयति, **अन्या** च रात्रिरूपिणी युवती तानि **धत्ते** वेष्टयति अन्धे तमसि निलीनानि कुरुते इत्यर्थः। एवं प्रत्यहं क्रीडन्त्यौ एते युवती **नापवृञ्जाते** न विरमतः, नापगच्छतः वा, **न गमातः** क्रीडायाः अन्तं समाप्तिमपि वा न प्राप्नुतः ॥ ४२ ॥

तयो॑र॒हं प॑रि॒नृत्य॑न्त्योरिव॒ न वि जा॑नामि यत॒रा प॒रस्ता॑त् ।
पुमा॑नेनद् वय॒त्युद्गृ॑णत्ति॒ पुमा॑नेन॒द् वि ज॑भा॒राधि॒ नाके॑ ॥ ४३ ॥

तयोः॑ । अ॒हम् । प॒रि॒नृत्य॑न्त्योः॑ऽइव । न । वि । जा॒ना॒मि॒ । य॒त॒रा । प॒रस्ता॑त् । पुमा॑न् । ए॒न॒त् । व॒य॒ति॒ । उत् । गृ॒ण॒त्ति॒ । पुमा॑न् । ए॒न॒त् । वि । ज॒भा॒र॒ । अधि॑ । नाके॑ ॥ ४३ ॥

**परिनृत्यन्त्योः इव** मन्ये परितो नृत्यं कुर्वत्योः तयोः दिनप्रभा-रात्रिरूपिण्योः युवत्योर्मध्ये, **न विजानामि** अहं नावबुद्ध्ये यत् अनयोः **यतरा** का एका **परस्तात्** उत्कृष्टा, वर्तते इति शेषः। **पुमान्** आदिपुरुषः **एनत्** कालरूपं तन्त्रं जालं **वयति** तन्तुवत् सन्तनोति, **उद्गृणत्ति** कालान्तरे निगरति च, 'गृ निगरणे' (१४११ तुदा०) छान्दसं रूपम्। **पुमान्** स आदिपुरुष एव **एनत्** जालम् **अधिनाके** स्वर्गे **विजभार** विविधरूपेण विस्तारितवानित्यर्थः ॥ ४३ ॥

इ॒मे म॒यूखा॒ उप॑ तस्त॒भु॒र्दिवं॒ सामा॑नि
च॒क्रुस्तस॑राणि॒ वात॑वे ॥ ४४ ॥

इ॒मे । म॒यूखाः॑ । उप॑ । त॒स्त॒भुः॒ । दिव॑म् ।
सामा॑नि । च॒क्रुः॒ । तस॑राणि । वात॑वे ॥ ४४ ॥

**इमे मयूखाः** सूर्यकिरणरूपाः काष्ठखण्डाः 'खूटी' इति प्रसिद्धाः **दिवम्** द्युलोकम् **उपतस्तभुः** सन्दधुः। **वातवे** संसारस्य वयनाय ते **सामानि** साममन्त्राणि **तसराणि** सूत्रवेष्टनानि, तसरः, 'तन्यृषिभ्यां क्सरन्' (उणा० ३.७५) 'त्रसरः (तसरः) सूत्रवेष्टनम्' इत्यमरः (३.२.२४), 'बाना' इति भाषायाम्, **चक्रुः** कृतवन्त इत्यर्थः ॥ ४४ ॥

## अष्टमं सूक्तम् : ज्येष्ठब्रह्म-वर्णनम्

(१–४४) ऋषिः—कुत्सः। देवता—स्कम्भ आत्मा। छन्दः—३,४,८,९,१३, १६–१८,२४,२८,३५,३६,४०,४४ त्रिष्टुप्; १ उपरिष्टाद्विराड् बृहती; २ बृहतीगर्भानुष्टुप्; ५ भुरिगनुष्टुप्; ६,१४,१९–२१,२३, २५, २९–३१,३४,३७,३८,४१,४३ अनुष्टुप्; ७ पराबृहती; १० अनुष्टुब्गर्भा; ११ जगती; १२ पुरोबृहती त्रिष्टुब्गर्भार्षी पङ्क्तिः; १५,२७ भुरिग् बृहती; २२ पुर उष्णिक्; २६ द्व्यनुष्टुब्गर्भा-नुष्टुप्; ३० भुरिक्; ३९ बृहतीगर्भा; ४२ विराड् गायत्री।

विनियोगः—'यो भूतम्' इति सूक्तमपि स्कम्भदेवताकम्। अत्रापि स्कम्भस्य ज्येष्ठत्वं श्रेष्ठत्वं सर्वेषामाश्रयभूतत्वं च वर्ण्यते। सप्तमसूक्त-वत् इदमपि कर्मकाण्डवर्ज्यं तत्त्वाववोधायैव विनियुज्यते।

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति।
स्व१र्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः॥ १॥

यः। भूतम्। च। भव्यम्। च। सर्वम्। यः। च। अधि-ऽतिष्ठति। स्वः। यस्य। च। केवलम्। तस्मै। ज्येष्ठाय। ब्रह्मणे। नमः॥ १॥

यः परमेश्वरः भूतं च भूतकालं भूतकालिकं जगत् भव्यं च भविष्यत्काले भावि जगत् च एवं सर्वं ब्रह्माण्डम् अधितिष्ठति अध्यास्ते अधिष्ठाता भवतीति यावत्। यस्य परमेश्वरस्य स्वः प्रकाशः आनन्दो वा केवलं स्वस्वरूपं विद्यते। यद्वा केवलं यस्य स्वः प्रकाश एव जगति व्याप्तः, तस्मै ज्येष्ठाय प्रशस्यतमाय ब्रह्मणे नमः॥ १॥

स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः।
स्कम्भ इदं सर्वमात्मन्वद् यत् प्राणन्निमिषच्च यत्॥ १॥

स्कम्भेन। इमे इति। विस्तभिते इति विऽस्तभिते। द्यौः। च। भूमिः। च। तिष्ठतः। स्कम्भे। इदम्। सर्वम्। आत्मन्ऽवत्। यत्। प्राणत्। निऽमिषत्। च। यत्॥ २॥

**इमे द्यौः च भूमिः च** द्यावाभूमी **स्कम्भेन** सर्वाधारेण ब्रह्मणा **विष्टभिते** विशिष्टरूपेण धारिते **तिष्ठतः** वर्तेते, स्वस्वकार्यं निर्वहतः । **स्कम्भे** सर्वाधारभूतेऽस्मिन् ज्येष्ठे ब्रह्मणि **इदं सर्वम्** अखिलं जगत् **आत्मन्वत्** सात्मकं सचेतनं च विद्यते, **यत्** जगत् चेतनात्मकं **प्राणत्** यत् श्वसिति **यत् च** जडरूपं **निमिषत्** न श्वसिति अर्थात् चेतनाचेतनात्मकं सर्वमपि जगत् तदन्तर्गतमेव समाविष्टमिति ॥ २ ॥

**तिस्रो ह प्रजा अत्यायमायन् न्य१न्या अर्कमभितोऽविशन्त ।**
**बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥ ३ ॥**

**तिस्रः । ह । प्रऽजाः । अतिऽआयम् । आयन् । नि । अन्याः । अर्कम् । अभितः । अविशन्त । बृहन् । ह । तस्थौ । रजसः । विऽमानः । हरितः । हरिणीः । आ । विवेश ॥ ३ ॥**

**तिस्रः प्रजाः** स्थलजाः, जलजाः, नभश्चराश्च । यद्वा–स्वेदजाः, अण्डजाः, योनिजाश्च । अथवा–देवयान-पितृयान-जायस्वम्रियस्वेति त्रिविधाः प्रजाः । **अत्यायं** विनाशं **आयन्** प्राप्नुवन् ह इत्यैतिह्ये । यद्वा–अतिश्च आयश्च अत्यायम् । 'स नपुंसकम्' (पा० २.४.१७) इति समाहारे नपुंसकम् । अति 'अत सातत्यगमने' इत्यस्मात् 'सार्वधातुभ्यां इन्' (उणा०४.११८) इत्यनेन इन् । एवम् आङ्पूर्वात् 'या गतौ' इत्यस्मात् उः । तथा च नित्यगमनागमने प्राप्नुवन्तीत्यर्थः । आसु प्रजासु **अन्याः** देवयानमार्गस्थाः **अभितः** परितः अर्कं सूर्यं **न्यविशन्त** प्रविष्टाः । एष **बृहन्** बृहता साम्ना प्राणेन वा युक्तः सूर्यः **रजसः** लोकान् 'रजांसि लोका उच्यन्ते', 'इमे वै लोकाः रजांसि' (शत० ब्रा० ६.३.१.१८) **विमानः** विविधरूपेण निर्मिमाणः **तस्थौ** । **हरितः** हरणशीलोऽसौ **हरिणीः** दिशः **आविवेश** स्वशक्तिभिः प्रविवेश ॥ ३ ॥

**द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।**
**तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ॥ ४॥**

**द्वादश । प्रऽधयः । चक्रम् । एकम् । त्रीणि । नभ्यानि । कः । ऊं इति । तत् । चिकेत । तत्र । आऽहताः । त्रीणि । शतानि । शङ्कवः । षष्टिः । च । खीलाः । अविऽचाचलाः । ये ॥ ४ ॥**

  

**एकम्** अद्वितीयं **चक्रं** क्रमणस्वभावं संवत्सराख्यं चक्रमस्ति यत्र **द्वादश** तावत्संख्याकाः द्वादशमासात्मिकाः **प्रधयः** परिधयः प्रहिता वर्तन्ते। तथा **त्रीणि** त्रिसंख्याकानि **नभ्यानि** नाभ्याश्रयाणि फलकानि ग्रीष्म-वर्षा-हेमन्तात्मिकानि तं रथं समाश्रितानि सन्ति। यथा सूर्यरथचक्रस्य द्वादश परिधयः नाभ्यर्हाणि त्रीणि फलकानि भवन्ति तथैव कालचक्रस्यापि इत्यर्थः। **क उ** कश्चिदेव विद्वान् **तत्** चक्रं **चिकेत** ज्ञातवान्। **तत्र** तस्मिन् संवत्सरचक्रे **त्रीणि शतानि** त्रिशतसंख्यकाः **शङ्कवः षष्टिः च** षष्टिसंख्यकाः **खीलाः** कीलाः अल्पशङ्कवो वा संलग्नाः **ये अविचाचलाः** अकुटिलगतयः सन्ति। तथा च ब्राह्मणम्—'षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि' (शत० ब्रा० ९. १·१·४३) इति, 'द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात्' (निरु० ४.२७) इति च निरुक्तम्॥ ४॥

इ॒दं स॑वितु॒र्वि जा॑नीहि॒ षड् य॒मा एक॑ एक॒जः।
तस्मि॑न् हापि॒त्वमि॑च्छन्ते॒ य ए॑षा॒मेक॑ एक॒जः॥ ५॥

इ॒दम्। स॒वि॒तः। वि। जा॒नी॒हि॒। षट्। य॒माः। एकः॑। ए॒क॒ऽजः। तस्मि॑न्। ह॒। अ॒पि॒ऽत्वम्। इ॒च्छ॒न्ते॒। यः। ए॒षा॒म्। एकः॑। ए॒क॒ऽजः॥ ५॥

**सवितः** हे सर्वोत्पादक, सर्वप्रेरक भगवन्! **इदम्** तत्त्वं रहस्यं वा **विजानीहि** विज्ञापय, अन्तर्भावितण्यर्थः। यत् षड् ऋतवः **यमाः** यमजाः द्वौ द्वौ मासौ मिलित्वा एकैक ऋतुर्भवतीति। **एकः** त्रयोदशतमः अधिमासः **एकजः** एकाकी एव, एकमासि जायते। **तस्मिन् ह** तस्मिन्नेव एते यमाः **अपित्वम्** बन्धुत्वम् **इच्छन्ते यः एषां** मध्ये **एकः** केवलः **एकजः** एकमासि जातोऽस्ति।

यद्वा—पञ्चज्ञानेन्द्रियाः, षष्ठं मनश्चेति **षट् यमाः** यमलस्वभावाः, प्रत्येकमिन्द्रियं मनसा संयुज्यैव विषयं प्रकाशयति। मनोऽपि कमप्येकमिन्द्रियमाश्रित्यैव पञ्चविषयात् ज्ञापयतीति। **एषाम्** एतेभ्यः **एकः** पृथक् **केवलः** अद्वितीयः आत्मा **एकजः** एकाकी आविर्बभूव। **तस्मिन् यमाः** एते षडिन्द्रियाः **अपित्वम्** बन्धुत्वम् **इच्छन्ते** कामयन्ते।

अथवा—यमपदस्य युगलार्थकत्वाभावे 'यमयती'त्यर्थे अग्निरेको यमः, वायुर्द्वितीयः, सूर्यस्तृतीयः, पितृणामधिराजा चतुर्थः, चन्द्रमाः पञ्चमः, सर्वेषां भुवनानां नियन्ता परमेश्वर षष्ठः। एषु यमेषु एकः प्रत्येकः एकजः एकस्मात् अद्वितीयात् परमेश्वरात् जातः समुत्पन्नः। एषां मध्ये य एकः, प्रत्येकः यमः स तथा चान्ये तस्मिन् सर्वनियन्तरि परब्रह्मणि ह निश्चयेन अपित्वं स्वसम्बन्धम् इच्छन्ते कामयन्ते। एतेषां यमत्वमाहुः श्रुतयः। तदेवम्—'अयं वै यमो योऽयं (वायुः) पवते' (शत० ब्रा० १४.२.२.११), 'एष वै यमो य एष (सूर्यः) तपति' (शत०ब्रा० १४.१.३.४), 'यमो दाधार पृथिवीम्' (तै० आ० ६.५.२), 'यमोऽस्याः (पृथिव्याः) अधिपतिः' (क० ३१.३), 'यमोऽभिषुतः सोमः' (चन्द्रमाः) (तै० सं० ४.४.९.१), 'वैवस्वतो यमः' (मैत्रा०सं० १.६.१२)। 'एष वा यमो य एषोऽन्तः चन्द्रमसि' (वै० १.२८)॥ ५॥

आविः सन्निहितं गुहा जरन्नाम महत् पदम्।
तत्रेदं सर्वमार्पितमेजत् प्राणत् प्रतिष्ठितम्॥ ६॥

आविः। सत्। निऽहितम्। गुहा। जरत्। नाम। महत्। पदम्। तत्र। इदम्। सर्वम्। आर्पितम्। एजत्। प्राणत्। प्रतिऽस्थितम्॥ ६॥

**आविः** आविर्भूतं व्यक्तावस्थामापन्नं यच्च **गुहा** गुहायाम् **सन्निहितम्** अव्यक्तावस्थायां स्थितम्। तस्य **जरत्** **नाम** पुराणं नाम। तस्य **पदं** स्थितिपदं **महत्** महत्तत्त्वं 'प्रकृतेर्महान्' (सांख्यका० ३) इति सांख्यमतेन सिद्धम्। एवम् **एजत्** **प्राणत्** **प्रतिष्ठितं** गति-स्थितियुक्तं सप्राणम् **इदं सर्वम्** जगत् **तत्र** तस्मिन् परब्रह्मणि एव **आर्पितं** समर्पितं तिष्ठति। अयं मन्त्रः मुण्डकोपनिषदि किञ्चित् पाठभेदेन समायाति॥ ६॥

एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं क्व१ तद् बभूव॥ ७॥

एकऽचक्रम्। वर्तते। एकऽनेमि। सहस्रऽअक्षरम्। प्र। पुरः। नि। पश्चा। अर्धेन। विश्वम्। भुवनम्। जजान। यत्। अस्य। अर्धम्। क्व। तत्। बभूव॥ ७॥

**एकचक्रम्** एकं चक्रं यस्य ब्रह्मणः तत्। **एकनेमि** एका च नेमिः प्रधिर्यस्य तत्। **सहस्राक्षरं** सहस्राणि अक्षराणि अरा इव **नाभौ** यस्य तत् ब्रह्म। अत्र रथ-रथिनोरभेदाद् एतत् ब्रह्मरथस्य वर्णनमूह्यम्। तद्धि **पुरः** अग्रे **प्र** प्रकृष्टरूपेण गच्छति, **पश्चा** पश्चाद्भागे **नि** नियमयति, संस्काररूपेण बध्नातीति वा। तत् ब्रह्म **अर्धेन** स्वकीयार्धभागेन **विश्वं** भुवनम् अखिलं जगत् **जजान** जनयामास। **अस्य** ब्रह्मणः **यत् अर्धं** संसारनिर्माणादवशिष्टम्, **तत् क्व बभूव**, कुत्र विद्यते, तस्य किं जातमिति न कोऽपि विजानाति। 'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि। त्रिपादूर्ध्वमुदैत्' इत्याद्याः पुरुषसूक्तमन्त्रा अत्रानुसन्धेयाः।

अथ पुरुषसूक्ते तु 'पादोऽस्य विश्वा भूतानि' इत्यनेन परब्रह्मणश्चतुर्थांशेन सर्वसृष्टिरुक्ता। अत्र तु 'अर्धेन विश्वं भुवनं जजान' इत्युच्यते तत्कथमुभयोः श्रुत्योः सामञ्जस्यमिति चेत्; शृणु। अत्र अर्धशब्दो न समांशवाची, किं तर्हि ? खण्डांशवाची एव। संसारादवशिष्टस्य ब्रह्मणो नियतपरिमाणकथनेन नियमनं महर्षेरथर्वणो नाभिप्रेतमिति तात्पर्यम्।

यद्वा—भगवतः सूर्यस्य रथस्य एतद् वर्णनम्। रथोऽयमेतादृशो यदस्य **एकचक्रं** वर्तते। **एकनेमि** एकप्रधिरपि। किन्तु **सहस्राक्षरम्** सहस्राणि अक्षराणि इव अरा अत्र सन्ति। **पुरः प्र** प्रोद्यन् **पश्चा** पश्चाच्च **नि** निर्गच्छन् भ्रमति। **अर्धेन** प्रकाशमयेन दिवा **विश्वं** सर्वं **भुवनं जजान** जनयामास, जीवनं दत्तवान्। **यत् अस्य अर्धं** रात्रिरूपम् **तत् क्व बभूव** इति केनापि ज्ञातुं न शक्यत इत्यपि कैश्चिद् व्याख्यायते॥ ७॥

**प॒ञ्च॒वा॒ही व॑ह॒त्यग्र॑मेषां॒ प्रष्ट॑यो यु॒क्ता अ॑नु॒संव॑हन्ति।**
**अया॑तमस्य ददृ॒शे न या॒तं पर॒ं नेदी॑योऽव॑रं॒ दवी॑यः॥ ८॥**

**प॒ञ्च॒ऽवा॒ही। व॒ह॒ति॒। अग्र॑म्। ए॒षा॒म्। प्रष्ट॑यः। यु॒क्ताः।**
**अ॒नु॒ऽसंव॑हन्ति। अया॑तम्। अ॒स्य॒। द॒दृ॒शे। न। या॒तम्।**
**पर॑म्। नेदी॑यः। अव॑रम्। दवी॑यः॥ ८॥**

**पञ्चवाही** पञ्चानां महाभूतानां प्राणानां वा वाहकः, प्राणात्मकोऽयं प्राणपुरुषः **एषां** पञ्चानां महाभूतानां प्राणानां वा **अग्रम् वहति**

गच्छति, अध्यात्मनि शरीरं **वहति**। **प्रष्टयः** एते प्राणाश्वा **युक्ताः** संसाररथे देहे वा युक्ताः **अनुसंवहन्ति** तदनुकूलतया संसारस्थं सम्यक् वहन्ति। अस्य प्राणपुरुषस्य प्रमुखप्राणस्य वा **अयातम्** अगमनम्, अत्र संसारे देहे वा स्थितिः सत्ता वा **ददृशे** सर्वैरनुभूयते। किन्तु **यातं** गमनं मृत्युकाले देहात्पार्थक्यं पृथग्भवनं वा **न ददृशे** न दृश्यते। **परम्** आत्मनः यत् दूरं भौतिकं द्रव्यादिकं तत् **नेदीयः** अस्माकं समीपस्थमिति सर्वैरभिमन्यते। किन्तु यत् आत्मनः **अवरं** समीपस्थं परं ब्रह्म तद् **दवीयः** दूरतरमेव, न कोऽपि तत् परब्रह्म सन्निकृष्टतरं, समीपस्थमिति मनुते। यद्वा–**परम्** उत्कृष्टं परं ब्रह्म तदस्माकमात्मनः **नेदीयः** समीपस्थम्, **अवरम्** अवरकोटिकं देहादिकं तत् आत्मनः **दवीयः** दूरमिति ॥ ८ ॥

**तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्।**
**तदासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥ ९ ॥**

तिर्यक्ऽबिलः। चमसः। ऊर्ध्वऽबुध्नः। तस्मिन्। यशः।
निऽहितम्। विश्वऽरूपम्। तत्। आसते। ऋषयः। सप्त।
साकम्। ये। अस्य। गोपाः। महतः। बभूवुः ॥ ९ ॥

**तिर्यग्बिलः** तिर्यग्छिद्रयुक्तः **चमसः** शिरस्पात्रं **ऊर्ध्वबुध्नः** ऊर्ध्व-मूलोऽस्ति। **तस्मिन्** चमसे शिरस्पात्रे **विश्वरूपं** विश्वरूपापन्नं **यशः** ज्ञानविज्ञानसंवलितं जलं सोमो वा 'यशो वै सोमः,' 'यश उदकनाम' (निघ० १.१२), (शत० ब्रा० ४.२.४.९) **निहितं** स्थितम्। **तत्** तस्मिन् द्रवात्मके यशसि **सप्तऋषयः** ऋषित्वमापन्नानि सप्तेन्द्रियाणि 'कर्णा-विमौ नासिके चक्षिणी मुखम्,' 'सप्त शिरसि प्राणाः' (तां० ब्रा० २.१४.२), 'सप्त वै शीर्षन् प्राणाः' (ऐ० ब्रा० १.१७) इति च। **आसते** निवसन्ति, **ये** सप्तऋषयः **अस्य महतः** देहात्मनः **गोपाः** रक्षकाः **बभूवुः** सञ्जाताः। बृहदारण्यकोपनिषदि द्वितीयाऽध्याये शिशुब्राह्मणे पाठभेदेन इदमेव वर्ण्यते। यथा—'अर्वाग् बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग् बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्। प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासतः ऋषयः सप्ततीरे। प्राणा वा ऋषय प्राणादेतदाह।' (बृ० उ० २.२.३.४) ॥ ९ ॥

या पुरस्ताद् युज्यते या च पश्चाद् या विश्वतो युज्यते या च सर्वतः ।
यया यज्ञः प्राङ् तायते तां त्वा पृच्छामि कतमा सर्चाम् ॥ १० ॥

या । पुरस्तात् । युज्यते । या । च । पश्चात् । या । विश्वतः । युज्यते । या । च । सर्वतः । यया । यज्ञः । प्राङ् । तायते । ताम् । त्वा । पृच्छामि । कतमा । सा । ऋचाम् ॥ १० ॥

**या** ऋक् ब्राह्मणयज्ञस्य देवयज्ञस्य वा **पुरस्तात्** अग्रभागे **युज्यते** संयुक्ता भवति **या च पश्चात्** पश्चाद्भागे, **या विश्वतः** चतस्रासु दिक्षु, **या च सर्वतः** समग्ररूपेण विनियुज्यते, **यया** ऋचा अयं **यज्ञः प्राङ्** पूर्वदिशि **तायते** विस्तार्यते, हे वेदज्ञ, तत्त्वज्ञ! अहं **तां** ताम् ऋचं **त्वा** त्वां **पृच्छामि** यत् **ऋचां** मध्ये **सा कतमा** इति ॥ १० ॥

यदेजति पतति यच्च तिष्ठति प्राणदप्राणन्निमिषच्च यद् भुवत् ।
तद् दाधार पृथिवीं विश्वरूपं तत् संभूय भवत्येकमेव ॥ ११ ॥

यत् । एजति । पतति । यत् । च । तिष्ठति । प्राणत् । अप्राणत् । निऽमिषत् । च । यत् । भुवत् । तत् । दाधार । पृथिवीम् । विश्वऽरूपम् । तत् । सम्ऽभूय । भवति । एकम् । एव ॥ ११ ॥

**यत्** द्रव्यादिकम् **एजति** कम्पते, चेष्टते वा **पतति** अधो याति **यत् च** पुनः **तिष्ठति** आसीदति, **प्राणत्** श्वासोच्छ्वासं करोति, **अप्राणत्** अप्रश्वसिति, **निमिषत्** चक्षुर्निमिषति **च यत् भुवत्** स्वसत्तां दधाति, एवं **विश्वरूपं** विश्वरूपाम्, लिङ्गव्यत्ययः, सकलरूपसम्पन्नां **पृथिवीं तत्** ब्रह्म **दाधार** धारयामास । किन्तु प्रलयकाले **तत्** सर्वं **विश्वरूपं सम्भूय** मिथो मिलित्वा **एकम् एव** एकरूपमेव **भवति** जायते ॥ ११ ॥

अनन्तं विततं पुरुत्राऽनन्तमन्तवच्चा समन्ते ।
ते नाकपालश्चरति विचिन्वन् विद्वान् भूतमुत भव्यमस्य ॥१२॥

अनन्तम् । विऽततम् । पुरुऽत्रा । अनन्तम् । अन्तऽवत् । च । समन्ते इति सम्ऽअन्ते । ते इति । नाकऽपालः ।

चरति । विऽचिन्वन् । विद्वान् । भूतम् । उत । भव्यम् । अस्य ॥ १२ ॥

तत् ब्रह्म अनन्तं सीमारहितम्, अथ च पुरुत्रा विततं नानारूपेषु सर्वत्र विस्तृतमास्ते । किन्तु द्यावापृथिव्यादिजगज्जातं कारण-दृष्ट्या अनन्तम् अन्तरहितम्, कार्यदृष्ट्या च अन्तवत् सान्तम् । समन्ते परस्परसीमाबद्धे, अन्ते सं संयुक्ते परस्परमिलिते वा ते अनन्तान्तवती विचिन्वन् पृथक्-पृथक् कुर्वन् नाकपालः दुःखातीत-लोकानां प्रतिपालकः मोक्ष-स्वर्गादीनां पालको वा परमात्मा अस्य जगतः भूतम् अतीतं भव्यं भविष्यत्कालं विद्वान् जानन् चरति विचरति, व्यवहरतीति ॥ १२ ॥

प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥ १३ ॥

प्रजाऽपतिः । चरति । गर्भे । अन्तः । अदृश्यमानः । बहुऽधा । वि । जायते । अर्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्धम् । कतमः । स । केतुः ॥ १३ ॥

प्रजापतिः प्रजोत्पादकः पालको वा परमेश्वरः चरति अस्मिन् जगति विचरति, गर्भे ब्रह्माण्डगर्भस्य अन्तः मध्ये अदृश्यमानः स्वात्मानमप्रकटयन् बहुधा विजायते बहुरूपं मत्स्य-कूर्मादिनैकरूपं सन्धार्य समुत्पद्यते । यथाह—'रूपं रूपं मघवा बोभवीति', 'रूपं रूपं प्रतिरूपो बभूव', इत्याद्याः श्रुतयः । सः परमेश्वरः अर्धेन अर्धांशेन विश्वं समस्तं भुवनं भुवनजातं जजान उत्पादयामास । अस्य परमेश्वरस्य यत् अर्धम् अंशरूपेण अवशिष्टम्, तत् तस्य सः कतमः केतुः प्रज्ञापको वर्तते, न कोऽपीत्यर्थः । अस्य मन्त्रस्य पूर्वार्द्धभागः यजुर्वेदे ( ३१·१९ ) तृतीयपादश्च अनुपदमेव व्याख्याने सप्तममन्त्रे समागतः ॥ १३ ॥

ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम् ।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः ॥ १४ ॥

ऊर्ध्वम् । भरन्तम् । उदकम् । कुम्भेनऽइव । उदऽहार्यम् । पश्यन्ति । सर्वे । चक्षुषा । न । सर्वे । मनसा । विदुः ॥ १४ ॥

**कुम्भेन उदहार्यम्** **इव** कूपात् कुम्भेन जलाहरणकर्तारं 'कहार'-नामकं पुरुषम् इव **ऊर्ध्वम्** अन्तरिक्षे **उदकम्**, ओषधि-वनस्पत्यादीनां रसं जलं वा **भरन्तं** हरन्तं मेघं **सर्वे** जनाः **चक्षुषा** पश्यन्ति सर्वेभ्यो दृष्टिगोचरो भवतीत्यर्थः। परं ते **सर्वे मनसा न विदुः** रसादिहरणं कथं जातमित्यादिरूपं तत्तत्वं नैव जानन्तीत्यर्थः ॥ १४ ॥

दूरे पूर्णेन वसति दूर ऊनेन हीयते ।
महद् यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति ॥ १५ ॥

दूरे । पूर्णेन । वसति । दूरे । ऊनेन । हीयते । महत् । यक्षम् ।
भुवनस्य । मध्ये । तस्मै । बलिम् । राष्ट्रऽभृतः । भरन्ति ॥ १५ ॥

स परिपूर्णः परमेश्वरः **पूर्णेन** पूर्णविद्यायुक्तेन विदुषा सह **दूरे** सूक्ष्मरूपेण **वसति** निवसति। **ऊनेन** न्यूनेन विद्यादिरहितेन सूक्ष्मत्वात् **दूरे** स **हीयते** त्यजते। अस्य **भुवनस्य** संसारस्य **मध्ये महद् यक्षं** यजनीयं पूज्यं वा तद् ब्रह्म स्थितमास्ते। **तस्मै** ब्रह्मणे यक्षाय **राष्ट्रभृतः** संसारराष्ट्रस्य रक्षकाः देवाः **बलिम्** उपहारं **भरन्ति** ददति ॥१५॥

यतः सूर्य उदेत्यस्तं यत्र च गच्छति ।
तदेव मन्येऽहं ज्येष्ठं तदु नात्येति किं चन ॥ १६ ॥

यतः । सूर्यः । उत्ऽएति । अस्तम् । यत्र । च । गच्छति ।
तत् । एव । मन्ये । अहम् । ज्येष्ठम् । तत् । ऊं इति ।
न । अति । एति । किम् । चन ॥ १६ ॥

**यतः** यस्मात्, **सूर्यः** आदित्यः **उदेति** उद्गच्छति, **यत्र च अस्तं गच्छति** अवसानं प्राप्नोति, **अहं तदेव ज्येष्ठं** महत्तमं ब्रह्म **मन्ये** जानामि। **तद्** ब्रह्म **किंचन** किमपि तत्त्वं द्रव्यं वा **न उ अत्येति** नैव अतिक्रामति ॥ १६ ॥

ये अर्वाङ् मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति ।
आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च
हंसम् ॥ १७ ॥

ये । अर्वाक् । मध्ये । उत । वा । पुराणम् । वेदम् । विद्वांसम् । अभितः । वदन्ति । आदित्यम् । एव । ते । परि । वदन्ति । सर्वे । अग्निम् । द्वितीयम् । त्रिऽवृतम् । च । हंसम् ॥ १७ ॥

**ये** जनाः **अर्वाङ्** अर्वाचीनं **मध्यं** मध्यकालिकम् **उत वा** अथवा **पुराणं** पूर्वकालिकं **वेदं विद्वांसं** वेदज्ञं विपश्चितम् **अभितः** सर्वतः **वदन्ति** कथयन्ति अर्थात् पूर्वकालिकेन वेदविदुषेत्थं वर्णितम्, अर्वाक्कालिकश्चेत्थं वदति, मध्ययुगीनेन चेत्थं निगदितमिति वदन्ति, **ते सर्वे** प्रथमम् **आदित्यम् एव परिवदन्ति** वर्णयन्ति, आदित्य एवास्य जगत उत्पत्तिस्थितिप्रलये हेतुरिति । **द्वितीयम् अग्नि** द्वितीयस्थाने अग्निं वर्णयन्ति । तदनन्तरं **च त्रिवृतं हंसम्** त्रीन् लोकान् वृणोति वारयति इति वा पादविक्षेपैस्तादृशम्, **हंसम्** महाविष्णुरूपं हंसाख्यम् आत्मानमेव वर्णयन्ति । हंसः विष्ण्वात्मा प्राणात्मा वा । यथोक्तम्—'हकारेण बहिर्याति, सकाराद् विशते पुनः । हंसेति परमं मन्त्रं जीवो जपति सर्वदा' इति ॥ १७ ॥

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥ १८ ॥

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् । सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ॥ १८ ॥

**स्वर्गं** द्युलोकं प्रति **पततः** पादविक्षेपं कुर्वतः **अस्य हंसस्य हरेः** हंसरूपिणः विष्णोः परमात्मनः **पक्षौ** द्वौ पार्श्वौ **सहस्राह्ण्यं** सहस्राण्यहानि पर्यन्तम् सहस्रदिनपर्यन्तमह्नो ज्योतिर्यवित् स्थानमाक्रमति तावत्प्रदेशपर्यन्तमित्यर्थः, **वियतौ** विस्तृतौ स्तः । **सः** हंसात्मा विष्णुः परमात्मा **सर्वान् देवान् उरसि** हृदयप्रदेशे **उपदद्य** निधाय स्थापयित्वा उपपूर्वात् 'दद दाने' इत्यस्मात् ल्यप् । **विश्वा**

भुवनानि सकलानि लोकलोकान्तराणि **संपश्यन्** निरीक्षमाणः **याति** गच्छति ॥ १८ ॥

**स॒त्येनो॒र्ध्वस्तप॑ति॒ ब्रह्म॑णा॒ऽर्वाङ् वि प॑श्यति ।**
**प्रा॒णेन॑ ति॒र्यङ् प्राण॑ति॒ यस्मि॑न् ज्ये॒ष्ठमधि॑ श्रि॒तम् ॥ १९ ॥**

**स॒त्येन॑ । ऊ॒र्ध्वः । त॒प॑ति॒ । ब्रह्म॑णा । अ॒र्वाङ् । वि । प॒श्य॒ति॒ । प्रा॒णेन॑ । ति॒र्यङ् । प्र । अ॒न॒ति॒ । यस्मि॑न् । ज्ये॒ष्ठम् । अधि॑ । श्रि॒तम् ॥ १९ ॥**

**यस्मिन्** पुरुषे **ज्येष्ठम्** महत्तमं ब्रह्म **अधिश्रितम्** संस्थितमस्ति, सः **सत्येन** यथार्थकर्मणा **ऊर्ध्वः** सर्वतः ऊर्ध्वप्रदेशे, सत्यलोके स्थितः सन् **तपति** प्रतापी भवति । **अर्वाङ्** तस्मादूर्ध्वस्थानात् अधस्तनान् लोकान् प्रति **ब्रह्मणा** ब्रह्मशक्त्या वेदमन्त्रेण वा **विपश्यति** विविधरूपेण पश्यति । **प्राणेन** प्राणवायुना अन्तरिक्षे **तिर्यङ्** तिर्यग्गत्या **प्राणति** प्राणनं करोति, प्रश्वसिति ॥ १९ ॥

**यो वै ते वि॒द्याद॒रणी॒ याभ्यां॑ निर्म॒थ्यते॒ वसु॑ ।**
**स वि॒द्वान् ज्ये॒ष्ठं म॑न्येत॒ स वि॑द्याद् ब्राह्म॑णं म॒हत् ॥ २० ॥**

**यः । वै । ते इति॑ । वि॒द्यात् । अ॒रणी॒ इति॑ । याभ्या॑म् । नि॒ःऽम॒थ्यते॑ । वसु॑ । सः । वि॒द्वान् । ज्ये॒ष्ठम् । म॒न्ये॒त॒ । सः । वि॒द्यात् । ब्राह्म॑णम् । म॒हत् ॥ २० ॥**

**यः** जनः **वै** निश्चयेन **ते अरणी** बहिर्यागे वह्नेर्मन्थनसाधनभूतं काष्ठद्वयम् अन्तर्यागे च हृदयप्रणवरूपे अरणी **विद्यात्** जानीयात् **याभ्याम्** अरणीभ्यां **वसु** बहिर्यागे अग्निनारायणः, अन्तर्यागे च श्वेताश्वतरोक्तो निगूढो देवः परमात्मा वा **निर्मथ्यते** मन्थनात् ध्याननिर्मथनाभ्यासाद्वा उत्पाद्यते । यथाह श्रुतिः–'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत्' इति (श्वेताश्व० १.१४) । **सः विद्वान्** एतादृशम् अरणिज्ञं विद्वांसं **ज्येष्ठं** श्रेष्ठं **मन्येत** जानीयात् । **सः महत् ब्राह्मणं** महद्ब्रह्मस्वरूपं **विद्यात्** जानीयादित्यर्थः ॥ २० ॥

अपादग्रे समभवत् सो अग्रे स्वराभरत् ।
चतुष्पाद् भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥ २१ ॥

अपात् । अग्रे । सम् । अभवत् । सः । अग्रे । स्वः । आ । अभरत् । चतुःऽपात् । भूत्वा । भोग्यः । सर्वम् । आ । अदत्त । भोजनम् ॥ २१ ॥

अग्रे सृष्टयादौ सः परमेश्वरः अपात् पादरहितः, विभागरहितः 'एकमेवाद्वितीयम्' इत्यवस्थायां स्वात्मानं समभवत् समुपस्थापयत् । तदनन्तरं सः अग्रे प्रारम्भे स्वः ज्योतिःप्रकाशात्मकं सुखं आभरत् आहरत्, प्रकटयत् । सृष्टयुत्पत्त्यनन्तरञ्च चतुष्पाद् भूत्वा ब्रह्मा-ऽन्तर्यामि-हिरण्यगर्भ-विराड्रूपचतुर्भागात्मको भूत्वा, यथाह श्रुतिः— 'सोऽयमात्मा ब्रह्म चतुष्पात्' (माण्डू० २), सः परमेश्वरः भोग्यः भोगयोग्यः सन् सर्वं भोजनम् अन्नम् आत्मनि आ अदत्त आसमन्तात् स्वीकृतवान् । यद्वा—भोग्यः भोगयोग्यः, भोक्ता सन् सर्वमन्नं गृहीतवान् । 'अहमन्नमहमन्नादोऽहमन्नादः' इति वचनात् स एव भोक्ता, स एव च भोग्यः, भोग्य-भोक्तृप्रपञ्चाकारमापन्न' इति यावत् ॥ २१ ॥

भोग्यो भवदथो अन्नमदद् बहु ।
यो देवमुत्तरावन्तमुपासातै सनातनम् ॥ २२ ॥

भोग्यः । भवत् । अथो इति । अन्नम् । अदत् । बहु । यः । देवम् । उत्तरऽवन्तम् । उपऽआसातै । सनातनम् ॥ २२ ॥

यः जनः उत्तरावन्तम् उत्कृष्टगुणोपेतं देवं दिव्यैश्वर्ययुक्तं सनातनम् पुराणं नित्यसत्तावन्तं परमेश्वरं उपासातै भजते, स भोग्यः सुखैरनु-भवनीयो भवत् भूयात्, लेटि रूपम् । अथो अपि च सः बहु अन्नम् जीवनसाधनजातम् अदत् अद्यात्, इदमपि लेटि रूपम् ॥ २२ ॥

सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः ।
अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥ २३ ॥

सनातनम् । एनम् । आहुः । उत । अद्य । स्यात् ।
पुनःऽनवः । अहोरात्रे इति । प्र । जायेते इति । अन्यः ।
अन्यस्य । रूपयोः ॥ २३ ॥

विद्वांसः एनं परब्रह्म सनातनं पुरातनं नित्यसत्तायुक्तम् आहुः कथयन्ति । उत अपि च अद्य पुनर्णवः स्यात् पुनर्नवताम् उपेयात्, प्रतीयते यन्नवं जन्मास्य जातमिति यावत् । हे जनाः ! यूयमित्थं जानीथ यत् यथा अहोरात्रे नक्तं दिनम्, अहश्च रात्रिश्च एते अन्यः एकः अन्यस्य अपरस्य रूपयोः प्रजायेते जनयितारो भवतः । यथा दिवा रात्रिं नवीनां करोति, रात्रिश्च दिनम्, नक्तंदिनयुगलं नान्यः कश्चन नवतां जनयति, तथैव सनातनं परब्रह्म स्वेनैव रूपेण नवतामुपैति, नान्येनेति विपश्चित आहुरित्यर्थः ॥ २३ ॥

शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन् निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद् देवो रोचत एष एतत् ॥२४॥

शतम् । सहस्रम् । अयुतम् । निऽअर्बुदम् । असम्ऽख्येयम् ।
स्वम् । अस्मिन् । निऽविष्टम् । तत् । अस्य । घ्नन्ति । अभिऽपश्यतः । एव । तस्मात् । देवः । रोचते । एषः । एतत् ॥२४॥

अस्मिन् परब्रह्मणि शतम् सहस्रम् दशशतम् अयुतम् दशसहस्रम्, न्यर्बुदम् दशकोटिसंख्याकम् एवं असंख्येयम् अपरिमेयम् स्वं धनं रूपजातं वा अस्मिन् परमात्मनि निविष्टम् प्रच्छन्नरूपेण निहितमस्ति । अस्य देवस्य अभिपश्यतः अवलोक्यमानस्य दृष्टेः समक्षमेव तत् धनं रूपं वा घ्नन्ति 'हन हिंसागत्योः' ( १०१२ भ्वा० ) गच्छन्ति प्राप्नुवन्ति भक्तजनाः साधका वा । तस्मात् एषः देवः परब्रह्म एतत् इदानीं रोचते प्रियं भवति सर्वेभ्य इति ॥ २४ ॥

बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥ २५ ॥

बालात् । एकम् । अणीयःऽकम् । उत । एकम् । नऽइव ।

दृश्यते । ततः । परिऽस्वजीयसी । देवता । सा । मम । प्रिया ॥ २५ ॥

अस्मिन् देहे एकं तत्त्वं जीवात्मरूपं **बालात्** केशादपि **अणीयस्कं** सूक्ष्मतरम् । **उत** अपि च **एकं** द्वितीयं तत्त्वं परमेश्वराभिधं **न दृश्यते, इव** अवधारणे, नैव दृष्टिगोचरं भवति, यतो हि तत् सूक्ष्मतममिति । अत एव **ततः** परमेश्वरात् **परिष्वजीयसी** परितः आलिङ्गनकर्त्री या **देवता** हृत्प्रतिष्ठिता चिद्रूपिणी **सा मम प्रिया** प्रियरूपा विद्यते, इति जीवात्मा कथयति ॥ २५ ॥

इयं कल्याण्यजरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार सः ॥ २६ ॥

इयम् । कल्याणी । अजरा । मर्त्यस्य । अमृता । गृहे ।
यस्मै । कृता । शयै । सः । यः । चकार । जजार । सः ॥२६॥

**इयं** चितिः **कल्याणी** कल्याणकारिणी **अजरा** अजीर्णा, क्षयरहिता **अमर्त्या** अमृतस्वरूपिणी **मर्त्यस्य** मनुष्यस्य **गृहे** निवासस्थाने हृदयप्रदेशे तिष्ठति **यस्मै** जीवात्मने सा चितिः **कृता** सम्पादिता, **सः** जीवात्मा अस्मिन् देहे **शये** शेते, निवसति । **यः** देहः चितिं स्वाश्रितां **चकार सः** देहस्तु **जजार** जीर्णतामुपैति ॥ २६ ॥

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥२७॥

त्वम् । स्त्री । त्वम् । पुमान् । असि । त्वम् । कुमारः । उत । वा । कुमारी । त्वम् । जीर्णः । दण्डेन । वञ्चसि । त्वम् । जातः । भवसि । विश्वतःऽमुखः ॥ २७ ॥

हे जीवात्मन् ! **त्वं** एकस्मिन् जन्मनि **स्त्री** स्त्रीरूपं धत्से । अन्यस्मिन् जन्मनि **पुमान्** पुरुषयोनिः **असि** भवसि, दधासि । कदाचित् **त्वं कुमारः उत वा** अथवा कदाचित् **कुमारी** इत्येवं विविधरूपाणि सन्धारयसि । **त्वं जीर्णः** वृद्धत्वमवाप्य **दण्डेन** हस्ते लगुडं धारयन्

**वञ्चसि** प्रचलसि, सर्वान् जनान् वञ्चसि, कपटमाचरसि वा। 'वञ्चु गतौ प्रतारणे च'(चुरादि०)। वस्तुतः त्वं न कुमारः, न कुमारी, न जीर्णः। एते तु देहस्य धर्माः त्वं च देहधर्मेभ्यः पृथक् एकरस इत्यर्थः। त्वं **जातः** जन्म प्राप्य **विश्वतोमुखः भवसि** जगति सर्व-क्षेत्रेषु दृष्टिं प्रक्षिपसि ॥ २७ ॥

उतैषां पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः॥ २८॥

उत। एषाम्। पिता। उत। वा। पुत्रः। एषाम्। उत। एषाम्। ज्येष्ठः। उत। वा। कनिष्ठः। एकः। ह। देवः। मनसि। प्रऽविष्टः। प्रथमः। जातः। सः। ऊं इति। गर्भे। अन्तः॥ २८॥

**उत** अपि च अयं जीवात्मा **एषां** प्रत्यक्षं दृश्यमानानां पुत्राणां **पिता**। **उत वा** अथवा केषाञ्चित् **पुत्रः** विद्यते। **उत एषां** केषाञ्चित् **ज्येष्ठः उत वा** केषाञ्चित् **कनिष्ठः**, ज्येष्ठ-भ्राता कनिष्ठ-भ्राता च जायते। एवमयं **एकः देवः** दिव्यरूपः जीवात्मा **मनसि प्रविष्टः** प्रज्ञानात्मा भूत्वा **प्रथमः जातः** सृष्टयादौ समुत्पन्नः। ह इति निश्चयेन। **सः उ** नूनं प्रवाहरूपेण **गर्भे अन्तः** नानाविधयोनिषु जन्म लभते ॥ २८ ॥

पूर्णात् पूर्णमुदचति पूर्णं पूर्णेन सिच्यते।
उतो तदद्य विद्याम यतस्तत् परिषिच्यते॥ २९॥

पूर्णात्। पूर्णम्। उत्। अचति। पूर्णम्। पूर्णेन। सिच्यते। उतो इति। तत्। अद्य। विद्याम। यतः। तत्। परिऽसिच्यते॥ २९॥

**पूर्णात्** ज्ञानशक्त्यादिभिः परिपूर्णात् तस्मात् परब्रह्मणः **पूर्णं** सर्वतः परिपूर्णम् इदं जगत् **उदचति** उद्गच्छति। **पूर्णम्** सर्वतः परिपूर्णम् इदं जगत् **पूर्णेन** परब्रह्मणा **सिच्यते** नानाविधरसैः शक्त्यादिभिश्च अभ्युक्ष्यते। **उतो** अथ आगच्छत, सखायः! **तत्** परं ब्रह्म **अद्य विद्याम**

जानीम, यतः यस्मात् तत् पूर्णं जगत् परिषिच्यते रसादीनां सिञ्चनेन सर्वतः प्रपूर्यते ॥ २९ ॥

एषा सनत्नी सनमेव जातैषा पुराणी परि सर्वं बभूव ।
मही देव्यु१षसो विभाती सैकेनैकेन मिषता वि चष्टे ॥ ३० ॥

एषा । सनत्नी । सनम् । एव । जाता । एषा । पुराणी । परि । सर्वम् । बभूव । मही । देवी । उषसः । विऽभाती । सा । एकेनऽएकेन । मिषता । वि । चष्टे ॥ ३० ॥

**एषा** प्रकृतिः माया वा **सनत्नी** सनातनी यद्वा, सम्भजनयोग्यानां भोगादीनां जीवेभ्यः प्रापयित्री । 'वर्तमाने पृषद् बृहन्' (उणा० २. ८४) 'षण संभक्तौ'—अति + 'णीञ् प्रापणे', ड ङीप् । **सनमेव** सर्वदैव **जाता** उत्पन्ना सती **एषा पुराणी** पुरातनी सर्वपदार्थजातं **परिबभूव** परितः व्याप्नोत् । **मही** महती **देवी** दिव्यगुणयुक्ता **उषसः** व्युष्टीः **विभाती** प्रकाशयन्ती, अन्तर्भावितण्यर्थः । **एकेन एकेन** प्रत्येकेन पदार्थस्य **मिषता** उन्मीलनेन आविर्भावेन वा । यद्वा मिषता उन्मीलनव्याजेन वा, सर्वं **विचष्टे** पश्यति । यद्वा विविधं प्रयत्नजातं विदधाति ॥ ३० ॥

अविर्वै नाम देवतर्तेनास्ते परीवृता ।
तस्या रूपेणेमे वृक्षा हरिता हरितस्रजः ॥ ३१ ॥

अविः । वै । नाम । देवता । ऋतेन । आस्ते । परिऽवृता । तस्याः । रूपेण । इमे । वृक्षाः । हरिताः । हरितऽस्रजः ॥ ३१ ॥

**वै** नूनम् **अविः नाम** पृथिवी 'इयं वा अविरियं हीमाः सर्वाः प्रजा अवति' (शत० ब्रा० ६. १. २. ३३) । **देवता** दिव्यगुणोपेता **ऋतेन** ऋततत्त्वेन **परीवृता** परिबद्धा, प्रावृता **आस्ते** विद्यते । **तस्याः** पृथिव्याः **रूपेण** तज्जनितशक्त्या **इमे वृक्षाः** वनस्पत्योषधयः **हरिताः** हरितवर्णाः **हरितस्रजः** हरिता हरितवर्णाः **स्रजः** मालाः येषां ते एतादृशाः, सर्वत्र भूम्यां प्रसृताः सन्ति ॥ ३१ ॥

अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति ।
देवस्य पश्य काव्यं न ममार न जीर्यति ॥ ३२ ॥

अन्ति । सन्तम् । न । जहाति । अन्ति । सन्तम् । न । पश्यति । देवस्य । पश्य । काव्यम् । न । ममार । न । जीर्यति ॥ ३२ ॥

**अन्ति** अन्तिके समीपे **सन्तं** विद्यमानं तं देवाधिदेवं परमात्मानं यो **न जहाति** न त्यजति, **अन्ति सन्तं न पश्यति** समीपस्थितमपि न पश्यति, न विजानाति । अस्यामवस्थायां हे सखे ! **देवस्य** दिव्यगुण-युक्तस्य परमकवेस्तत् **काव्यं** कविकर्म, ज्ञानराशिं वेदं वा, बुद्धिमत्ता-मित्यर्थः । **पश्य** विलोकय, विचारय यत् काव्यमिदं **न ममार** न मरिष्यति **न जीर्यति** न जीर्णतामुपैष्यति । सद्योऽधीतमिव सदास्मृतिं स्थास्यतीति भावः ॥ ३२ ॥

अपूर्वेणेषिता वाचस्ता वदन्ति यथायथम् ।
वदन्तीर्यत्र गच्छन्ति तदाहुर्ब्राह्मणं महत् ॥ ३३ ॥

अपूर्वेण । इषिताः । वाचः । ताः । वदन्ति । यथाऽयथम् । वदन्तीः । यत्र । गच्छन्ति । तत् । आहुः । ब्राह्मणम् । महत् ॥ ३३ ॥

**अपूर्वेण** यस्य पूर्वं न कोऽपि विद्यते, तेन, अद्वितीयेन सर्वशक्तिमता परमेश्वरेण **इषिताः** प्रेरिताः **ताः वाचः** ऋग्रूपाः **यथायथं** याथातथ्यं सत्यमेव **वदन्ति** कथयन्ति । ताः ऋचो **वदन्तीः** सर्वस्य जगतः यथार्थरूपं समुच्चारयन्तीः **यत्र** यस्मिन् लक्ष्यभूते प्रदेशे **गच्छन्ति** स्वात्मानमुप-संहरन्ति, सर्वे तत्त्वज्ञानिनः **तत् महत् ब्राह्मणम्** महत् ब्रह्म इति **आहुः** कथयन्ति ॥ ३३ ॥

यत्र देवाश्च मनुष्याश्चारा नाभाविव श्रिताः ।
अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हितम् ॥ ३४ ॥

यत्र । देवाः । च । मनुष्याः । च । अराः । नाभौऽइव । श्रिताः । अपाम् । त्वा । पुष्पम् । पृच्छामि । यत्र । तत् । मायया । हितम् ॥ ३४ ॥

**नाभौ** रथचक्रस्य नाभौ **अराः इव** यथा अराः श्रिताः संलग्नाः तिष्ठन्ति, तथैव **यत्र** यस्मिन् महद्ब्रह्मणि **देवाः च मनुष्याः च श्रिताः** संश्रितास्तिष्ठन्ति, हे तत्त्वज्ञ! अहं जिज्ञासुः **त्वा** त्वां तत् **अपां पुष्पं** जले महार्णवे जायमानं पुष्पं किमस्ति? इति ज्ञातुं **पृच्छामि यत्र** यस्मिन् पुष्पे **तत् ब्रह्म मायया** स्वकीयमायया **हितम्** निहितम्, मायायां स्वात्मानमाच्छाद्य प्रच्छन्नरूपेण संस्थितमस्तीत्यर्थः। अत्र 'अपां पुष्पमि'त्यस्य 'तदण्डमभवत् हैमम्' इत्यनेन तात्पर्यं येन 'दिवं भूमिं च निर्ममे' इत्याह मनुः (मनु० १. १२)। अपां पुष्पं वेतसमुच्यते, यदाह श्रुतिः—'अपां वा एतत् पुष्पं यद् वेतसः' (तै० सं० ५. ४. ४. २, मैत्रा० सं० ३. ६. ६)। वेतसं वयनसाधनम् ऋततन्तुमिति भावः ॥ ३४॥

**येभिर्वात॑ इषि॒तः प्र॒वाति॒ ये दद॑न्ते॒ पञ्च॒ दिशः॑ स॒ध्रीचीः॑।**
**य आहु॑तिम॒त्यम॑न्यन्त दे॒वा अ॒पां ने॒तारः॑ कत॒मे त आ॑सन्॥ ३५॥**

येभिः॑। वातः॑। इ॒षि॒तः। प्र॒ऽवाति॑। ये। दद॑न्ते। पञ्च॑। दिशः॑। स॒ध्रीचीः॑। ये। आऽहु॑तिम्। अ॒ति॒ऽअम॑न्यन्त। दे॒वाः। अ॒पाम्। ने॒तारः॑। क॒त॒मे। ते। आ॒स॒न्॥ ३५॥

**येभिः** यैः देवैः **इषितः** प्रेरितः **वातः** पवनः **प्रवाति**, प्रवहति। **ये** ऊर्ध्वदिगवस्थिताः देवाः **सध्रीचीः** सहसंयुक्ताः **पञ्च दिशः** रसादीन् **ददन्ते** 'दद दाने', प्रयच्छन्ति। ऊर्ध्वदिशि तु ते देवाः स्थिता एव, अतो रसादिदानप्रसङ्गेऽत्र सा न पृथगुपन्यस्तेति तत्त्वम्। **ये** च देवाः **आहुतिम्** इतः आहुतिप्रदानम् **अत्यमन्यन्त** स्वात्मार्थे अत्यधिकं मन्यन्ते, ते **अपां** जलादिसृष्टपदार्थानां प्रजानां वा, **नेतारः** सञ्चालकाः **कतमे आसन्** अनेकेषां मध्ये के आसन्निति वेदविद्भिः स्वयं समाधेयोऽयं प्रश्न इति॥ ३५॥

**इ॒माम॑षां पृथि॒वीं वस्त॒ एको॑ऽन्तरि॑क्षं॒ पर्येको॑ बभूव।**
**दिव॑मेषां दद॒ते॒ यो विध॒र्ता विश्वा॒ आशाः॒ प्रति॑ रक्ष॒न्त्येके॑॥ ३६॥**

इ॒माम्। ए॒षाम्। पृ॒थि॒वीम्। वस्ते॑। एकः॑। अ॒न्तरि॑क्षम्। परि॑। एकः॑। ब॒भू॒व॒। दिव॑म्। ए॒षा॒म्। द॒द॒ते॒। यः। वि॒ऽध॒र्ता। विश्वाः॑। आशाः॑। प्रति॑। र॒क्ष॒न्ति॒। एके॑॥ ३६॥

**एषां** देवानां मध्ये **एकः** अग्निः **इमां** प्रत्यक्षतो दृश्यमानां **पृथिवीं वस्ते** आच्छाद्य वसति, 'वस आच्छादने' (अदादि०)। एवम् **एकः** वायुः इन्द्रो वा **अन्तरिक्षं परिबभूव** व्याप्य प्रवहति। **एषां** देवानां मध्ये **यः विधर्ता** विशेषरूपेण सर्वेषां धारयिता विद्यते स सूर्यः **दिवं** द्युलोकं **ददते** प्रकाशम्, प्रकाशयतीत्यर्थः। **एके** अन्ये चन्द्र-नक्षत्र-वसवादयो देवाः ये **विश्वाः** सर्वाः **आशाः** दिशः **प्रतिरक्षन्ति** पालयन्ति ॥ ३६ ॥

यो विद्यात् सूत्रं वितंतं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्य यो विद्यात् स विद्यात् ब्राह्मणं महत् ॥ ३७ ॥

यः । विद्यात् । सूत्रम् । विऽततम् । यस्मिन् । आऽउताः । प्रऽजाः । इमाः । सूत्रम् । सूत्रस्य । यः । विद्यात् । सः । विद्यात् । ब्राह्मणम् । महत् ॥ ३७ ॥

**यः** विवेकी **विततं** सर्वत्र ओतप्रोतं प्रसृतं **सूत्रम्** 'सूत्र वेष्टने' (चुरादि०), अच्, सर्वं जगत् मिथः वेष्टयितारं सूत्रात्मानं हिरण्यगर्भम् **विद्यात्** जानीयात्, **यस्मिन्** सूत्रात्मनि हिरण्यगर्भे **इमाः प्रजाः ओताः** संग्रथिताः सन्ति। **यः** च **सूत्रस्य** सूत्रात्मनो हिरण्यगर्भस्यापि **सूत्रम्** ग्रथनाधारं कार्यब्रह्म **विद्याद्** जानीयात् **स महत् ब्राह्मणं** महद् ब्रह्म **विद्यात्** विजानीयादित्यर्थः ॥ ३७ ॥

वेदाहं सूत्रं वितंतं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्याहं वेदाथो यद् ब्राह्मणं महत् ॥ ३८ ॥

वेद । अहम् । सूत्रम् । विऽततम् । यस्मिन् । आऽउताः । प्रऽजाः । इमाः । सूत्रम् । सूत्रस्य । अहम् । वेद । अथो इति । यत् । ब्राह्मणम् । महत् ॥ ३८ ॥

मन्त्रद्रष्टा ऋषिः साधिकारं घोषयति—अहं मन्त्रद्रष्टा अथर्वा ऋषिः **विततं** सर्वत्र जगति प्रसृतं **सूत्रम्** तन्तुभूतं हिरण्यगर्भम् **वेद** जानामि, **यस्मिन्** सूत्रे **इमाः** दृश्यमानाः सर्वाः **प्रजाः ओताः** प्रोतास्तिष्ठन्ति। **अथो** अपि च **सूत्रस्य** अपि **सूत्रम्** सूक्ष्मतरं यत् सूत्रं तदप्यहं **वेद** जानामि **यत् महत् ब्राह्मणं** महद् ब्रह्म आस्ते, तदपि

नूनं जानामीत्यर्थः। छान्दोग्योपनिषदि रैक्वस्याप्येतादृशी अधिकृता उक्तिः श्रूयते ॥ ३८ ॥

यदन्तरा द्यावापृथिवी अग्निरैत् प्रदहन् विश्वदाव्यः।
यत्रातिष्ठन्नेकपत्नीः परस्तात् क्वेवासीन्मातरिश्वा तदानीम् ॥ ३९ ॥

यत्। अन्तरा। द्यावापृथिवी इति। अग्निः। ऐत्। प्रऽदहन्। विश्वऽदाव्यः। यत्र। अतिष्ठन्। एकऽपत्नीः। परस्तात्। क्वऽइव। आसीत्। मातरिश्वा। तदानीम् ॥ ३९ ॥

**यत्** यदा **द्यावापृथिवी अन्तरा** द्यु-भूम्योर्मध्ये **विश्वदाव्यः** विश्वस्य उपतापकः। विश्व+'टुदु उपतापे' (तुदादि०) कर्तरि ण्यत्। **प्रदहन्** भस्मसात् कुर्वन् **ऐत्** इतस्ततो विचरन्नासीत्। **यत्र** द्यावापृथिव्योर्मध्ये **एकपत्नीः** एकः सूर्यः पतिर्यासां ताः, पूर्वाद्याः दिशः। 'नित्यं सपत्न्यादिषु' (पा० ४.१.३५), एकपति+नुक्, ङीप् च। **परस्तात्** दूर एव **अतिष्ठन्** स्थिता आसन्, तदानीं प्रलयकाले **मातरिश्वा** वायुः **क्व इव** कुत्र नूनम् **आसीत्** नूनं कुत्र आसीदिति प्रश्नाशयः ॥ ३९ ॥

अप्स्वासीन्मातरिश्वा प्रविष्टः प्रविष्टा देवाः सलिलान्यासन्।
बृहन् ह तस्थौ रजसो विमानः पवमानो हरित आ विवेश ॥ ४० ॥

अप्ऽसु। आसीत्। मातरिश्वा। प्रऽविष्टः। प्रऽविष्टाः। देवाः। सलिलानि। आसन्। बृहन्। ह। तस्थौ। रजसः। विऽमानः। पवमानः। हरितः। आ। विवेश ॥ ४० ॥

पूर्वोक्ताः प्रश्नाः समाधीयन्ते—तदानीं प्रलयकाले **मातरिश्वा** वायुः **अप्सु** सलिले जलरूपतां गते सूक्ष्मतमे तत्त्वे **प्रविष्टः आसीत्**। **देवः** अग्नीन्द्रादयोऽपि देवाः **सलिलानि** सलिलेषु **प्रविष्टाः आसन्**, सलिलाभ्यन्तरे सन्निहिता आसन्नित्यर्थः। **बृहन्** स महान् आत्मा **रजसः** लोकलोकान्तराणां **विमानः** मानं कुर्वन् **ह** निश्चयेन **तस्थौ** स्थित आसीत्। **पवमानः** सर्वान् पवित्रीकुर्वन् असौ **हरितः** सर्वासु दिक्षु **आविवेश** प्रविवेशेति भावः ॥ ४० ॥

उत्त॑रेणेव गा॒य॒त्रीम॒मृते॒ऽधि॒ वि च॑क्रमे ।
साम्ना॒ ये साम॑ संवि॒दुर॒जस्तद् द॑दृशे॒ क्व॑ ॥ ४१ ॥

उत्त॑रेणऽइव । गा॒य॒त्रीम् । अ॒मृते॑ । अधि॑ । वि । च॒क्र॒मे॒ ।
साम्ना॑ । ये । साम॑ । स॒म्ऽवि॒दुः । अ॒जः । तत् । द॒दृ॒शे॒ ।
क्व॑ ॥ ४१ ॥

**गायत्रीम्** गायन्तं त्रायन्तीं वेदमातरम् अवलम्ब्य समुपास्य वा, साधकः **उत्तरेण** देवयानमार्गेण **इव** अवधारणे, **अमृते अधि** मोक्षं प्रति **विचक्रमे** पादप्रक्षेपं करोति, मोक्षपदमधिरोहतीत्यर्थः । **साम्ना** ऋगधिरूढानां गायत्र्यादिसाम्नां गानेन, तदवलम्ब्य ये **साम** सामस्वरूपं परमात्मानं **संविदुः** जानन्ति, अवगच्छन्ति, **अजः** अजन्मा स भगवान् **तत्** तदा **क्व** कुत्र **ददृशे** दृष्टिगोचरो भवति इति त एव जानन्तीत्यर्थः ॥ ४१ ॥

नि॒वेश॑नः संगम॑नो वसू॑नां दे॒व इ॑व सवि॒ता स॒त्यध॑र्मा ।
इन्द्रो॒ न त॑स्थौ सम॒रे धना॑नाम् ॥ ४२ ॥

नि॒ऽवेश॑नः । स॒म्ऽगम॑नः । वसू॑नाम् । दे॒वःऽइ॑व । स॒वि॒ता ।
स॒त्यऽध॑र्मा । इन्द्रः॑ । न । त॒स्थौ॒ । स॒म्ऽअ॒रे ।
धना॑नाम् ॥ ४२ ॥

**सविता** सर्वप्रेरकः सूर्यनारायणः **इव सत्यधर्मा** सत्यम् अवितथं धर्माणि धारणानि यस्यासौ तादृशः परमेश्वरः सत्येनैव निखिलजगतां धारकः **निवेशनः** निवेशयिता, सर्वेषामाश्रयप्रदाता **देवः** दिव्यस्वरूपः **वसूनाम्** ऐश्वर्याणां **संगमनः** सम्यक् प्रकारेण प्रापयिता भवत् **धनानां** धनानां प्राप्त्यै 'चतुर्थ्यर्थे बहुलं छन्दसि' (पा० ३.२.६२) इत्यनेन चतुर्थ्यर्थे षष्ठी । **समरे** युद्धे **इन्द्रः न** वज्रधारी इन्द्र इव **तस्थौ** स्थितो भवति । स्वोपासकेभ्यो धनं प्रापयितुं समपेक्षितेषु युद्धादि-कर्मसु वज्रिणो देवराजस्येव अविचलं स्थितः सन्नद्धोऽवतिष्ठत इति तात्पर्यम् ॥ ४२ ॥

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् ।
तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ४३ ॥

पुण्डरीकम् । नवऽद्वारम् । त्रिऽभिः । गुणेभिः ।
आऽवृतम् । तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् ।
तत् । वै । ब्रह्मऽविदः । विदुः ॥ ४३ ॥

**नवद्वारं** पायूपस्थसहितं सप्तशीर्षण्यछिद्रयुतं **त्रिभिः गुणेभिः** गुणैः सत्त्वरजस्तमोरूपैः **आवृतं** व्याप्तम् इदं **पुण्डरीकम्** कमलपुष्पसन्निभं हृत्पटलयुतं शरीरमस्ति । **तस्मिन्** शरीरे **यत् यक्षं** पूजनीयं **आत्मन्वत्** जीवात्मयुक्तं ब्रह्म विद्यते **तत्** ब्रह्म **वै** नूनं **ब्रह्मविदः** ब्रह्मवेत्तारो **विदुः** जानन्ति ॥ ४३ ॥

अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः ।
तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं
युवानम् ॥ ४४ ॥

अकामः । धीरः । अमृतः । स्वयम्ऽभूः । रसेन । तृप्तः ।
न । कुतः । चन । ऊनः । तम् । एव । विद्वान् । न ।
बिभाय । मृत्योः । आत्मानम् । धीरम् । अजरम् ।
युवानम् ॥ ४४ ॥

**अकामः** कामनारहितः **धीरः** धैर्यवान् **अमृतः** अमरणधर्मा **स्वयम्भूः** स्वयं जातः, यस्य जन्मनि कस्यापि साहाय्यं नापेक्षामपेक्षते तादृशः, **रसेन तृप्तः** सन्तुष्टः न रसादिकमभिवाञ्छतीति यावत्, **कुतश्चन** कस्मादपि स्थानात् अङ्गाद् वा किञ्चिदपि **ऊनः** न्यूनः, **न** परिपूर्ण इत्यर्थः, एतादृशः परमात्मा जीवात्मा वाऽस्ति । **तमेव धीरं** धैर्यवन्तम् **अजरं** जरारहितं **युवानं** चिरयुवानम् **आत्मानम्** आत्मतत्त्वं **विद्वान्** जानन् पुरुषः **मृत्योः न बिभाय** न बिभेति मरणादिति भावः ॥ ४४ ॥

## नवमं सूक्तम् : शतौदना गौः

(१–२७) ऋषिः—अथर्वा। देवता—शतौदना। छन्दः—२–११,१३–२४ अनुष्टुप्, १ त्रिष्टुप्। १२ पथ्यापङ्क्तिः, २५ द्व्यनुष्टुब्गर्भानुष्टुप्, २६ पञ्चपदा बृहत्यनुष्टुबुष्णिग्गर्भा जगती, २७ पञ्चपदातिजागतानुष्टुब्गर्भा शक्वरी।

साम्प्रदायिकास्तु—'अघायताम्' इत्यर्थसूक्तेन शतौदनसवे निरुप्तहविरभिमर्शनं संपातं दातृवाचनं दानं च कुर्यात्। तथा च सूत्रम्—'अघायताम्' (१) इत्यत्र मुखम् अपिनह्यमानम् अनुमन्त्रयते। 'सपत्नेषु वज्रम्' (१), 'ग्रावा त्वेषः' (२) इति निपतन्तम्। 'वेदिष्टे' (२) इति मन्त्रोक्तम् आस्तृणाति। विंशत्योदनासु श्रयणीषु शतम् अवदानानि वध्रिसंनद्धानि पृथगोदनेषु उपर्यादधाति। मध्यमायाः प्रथमे रन्ध्रिण्यामिक्षां दशमेऽभितः सप्तसप्तापूपान् परिश्रयति। पञ्चदशे पुरोडाशौ। अग्रे हिरण्यम्। 'अपो देवीः' (२७) इत्यग्रत उदकुम्भान्। 'बालास्ते' (३) इति सूक्तेन संपातवतीम्। प्रदक्षिणम् अग्निम् अनुपरिणीयोपवेशनप्रक्षालनाचमनमुक्तम्। पाणौ उदकमानीय। अथामुष्यौदनस्यावदानानां च मध्यात् पूर्वार्धाच्च द्विरवदायोपरिष्टाद् उदकेनाभिघार्य जुहोति 'सोमेन पूतो जठरे सीद ब्रह्मणाम्' 'आर्षेयेषु नि दध ओदन त्वा' इति। अथ प्राश्नाति 'अग्नेष्ट्वास्येन प्राश्नामि, बृहस्पतेर्मुखेन इन्द्रस्य त्वा जठरे सादयामि, वरुणस्योदरे तद्यथाहुतम् इष्टं प्राश्नीयाद् देवात्मा त्वा प्राश्नाम्यात्मास्यात्मन्नात्मानं मे मा हिंसीः' इति। प्राशितम् अनुमन्त्रयते 'योऽग्निर्नृमणा नाम ब्राह्मणेषु प्रविष्टः। तस्मिन् म एव सुहुतोऽस्त्वोदनः स मा मा हिंसीत् परमे व्योमन्' इति। दातारं वाचयति। वीक्षणान्तं शतौदनायाः प्रातर्जपेन व्याख्यातम्' (कौ० सू०, ६५. १–१६) इति।

**अ॒घा॒य॒ताम॑पि॒ न॑ह्या॒ मुखा॑नि स॒पत्ने॑षु॒ वज्र॒मर्प॑यै॒तम्।**
**इन्द्रे॑ण द॒त्ता प्र॑थ॒मा श॒तौद॑ना भ्रातृ॒व्य॒घ्नी यज॑मानस्य गा॒तुः ॥१॥**

अ॒घ॒ऽय॒ताम्। अपि॑। न॒ह्य॒। मुखा॑नि। स॒ऽपत्ने॑षु। वज्र॑म्। अ॒र्प॒य॒। ए॒तम्। इन्द्रे॑ण। द॒त्ता। प्र॒थ॒मा। श॒त॒ऽओ॒द॒ना। भ्रा॒तृ॒व्य॒ऽघ्नी। यज॑मानस्य। गा॒तुः ॥ १ ॥

शतस्य असङ्ख्यातस्य मानवस्य ओदना भोजनसाधनभूता गौः शतौदनेति कथ्यते। आनुपातिकरूपेण प्रत्यहं दशशेटकमितं दुग्धं प्रदात्री प्रत्यहं प्रायः पञ्च जनान् सन्तर्पयति, मासि सार्धशतजनान्, षण्मासेषु प्रायः सहस्रसंख्याकान् तर्पयति। किं बहुना, इत्थं परमायुर्यावत् सा दशसहस्रसङ्ख्याकान् मनुष्यान् तर्पयति चेत् नूनं 'शतौदने'ति व्याहारस्तस्मै सर्वथा समुपपद्यते, शतसंख्याया असङ्ख्यातार्थपरत्वात्। तामेव शतौदनां नैकैः प्रकारैः स्तुवन् ऋषिराह—

हे शतौदने! **अघायताम्** अघं पापं कामयमानानां **मुखानि** मुखोत्पन्नप्रलपितानि रुजाक्रोशादिजनितापभाषितानि **अपिनह्य** बद्धानि कुरु, रुन्धि। **एतं वज्रम्** आयुधं **सपत्नेषु** शत्रुषु **अर्पय** प्रक्षिप। **इन्द्रेण दत्ता** देवाधिपेन देवेन्द्रेण प्रदत्ता **प्रथमा शतौदना** धेनुः **भ्रातृव्यघ्नी** शत्रूणां विनाशकर्त्री **यजमानस्य गातुः** यज्ञसम्पादिका 'गातुः यज्ञम्' 'गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह (शत० ब्रा० १.९.२.२८), यज्ञ-यज्ञसाधिकयोरभेदः। 'गाङ् गतौ' (९५० भ्वा० आ०) तु-प्रत्ययः ॥ १ ॥

वेदिष्टे चर्म भवतु बर्हिर्लोमानि यानि ते।
एषा त्वा रशनाग्रभीद् ग्रावा त्वैषोऽधि नृत्यतु ॥ २ ॥

वेदिः। ते। चर्म। भवतु। बर्हिः। लोमानि। यानि।
ते। एषा। त्वा। रशना। अग्रभीत्। ग्रावा। त्वा।
एषः। अधि। नृत्यतु ॥ २ ॥

हे शतौदने! **ते** तव **चर्म** त्वक् अस्मभ्यं **वेदिः** वेदिसदृशं यज्ञभूमिरिव पवित्रं **भवतु**। **ते** तव **यानि लोमानि** रोमाणि तानि **बर्हिः** बर्हिस्थानीयानि सन्तु। **एषा** पुरोवर्तिनी **रशना** रज्जुः **त्वा** त्वाम् **अग्रभीत्** उपाददीत। हे धेनो! **एष ग्रावा** तृणसस्यादिपेषणसाधनं प्रस्तरद्वयखण्डं **त्वा** त्वदर्थं सोमादिपेषणाय **अधिनृत्यतु** पुनः पुनः पततु उत्पततु च। नर्तन इव पतनोत्पतनादिक्रियां करोत्वित्यर्थः ॥ २ ॥

वालास्ते प्रोक्षणीः सन्तु जिह्वा सं मार्ष्ट्वघ्न्ये।
शुद्धा त्वं यज्ञिया भूत्वा दिवं प्रेहि शतौदने ॥ ३ ॥

वालाः । ते । प्रऽउक्षणीः । सन्तु । जिह्वा । सम् । मार्ष्टु । अघ्न्ये । शुद्धा । त्वम् । यज्ञिया । भूत्वा । दिवम् । प्र । इहि । शतऽओदने ॥ ३ ॥

हे **शतौदने** ! **ते** तव **बालाः** रोमाणि **प्रोक्षणीः** यज्ञीयप्रोक्षणीपात्रस्थानीयाः **सन्तु** भवन्तु । **अघ्न्ये** ! हे अहिंसनीये ! **ते जिह्वा संमार्ष्टु** सम्यक्तया शुध्यतु । पौराणिकमान्यतानुसारमेकवारं पृथिवीप्रदक्षिणाकर्तुः पक्षे असत्यसाक्ष्यदानेन असत्यभाषिण्यः केवलाया जिह्वायाः अशुचये शप्तायास्ते मुखं मन्त्रेणानेन शुचिर्भूयादिति तत्त्वम् । **त्वम्** इत्थं शुद्धाः सर्वथा पूता **यज्ञिया** होमार्थं दुग्धघृतादिप्रदानद्वारा यज्ञार्हा **भूत्वा दिवं** द्युलोकं **प्रेहि** गच्छ । यद्वा–अन्तर्भावितण्यर्थः तेन पुण्येन देहावसाने यजमानवत् स्वर्गमेव प्रेहि, न पुनः पशुयोनिं प्राप्नुया इति ॥ ३ ॥

यः शतौदनां पचति कामप्रेण स कल्पते ।
प्रीता ह्यस्यर्त्विजः सर्वे यन्ति यथायथम् ॥ ४ ॥

यः । शतऽओदनाम् । पचति । कामऽप्रेण । सः । कल्पते । प्रीताः । हि । अस्य । ऋत्विजः । सर्वे । यन्ति । यथाऽयथम् ॥ ४ ॥

**यः** जनः **शतौदनां** गां समुद्दिश्य शैशवत एव गोधूमादिगुडतैलादिमिश्रितं द्रव्यं पाययित्वा **पचति** परिपक्वां प्रौढां सुपुष्टां विधाय विपुलदुग्धदाने समर्थां विदधाति । यद्वा—'पच परिपाके' इत्यर्थकस्य धातोः 'पचति' इत्यस्य त्वदुद्देश्येन वपितं तृणधान्यादिकं परिपक्वं करोतीत्यर्थः । तेन च त्वां पोषयित्वा प्रभूतदुग्धदानक्षमां विदधातीत्येतावत्पर्यन्तमस्य तात्पर्यम् । **स कामप्रेण** कामनापूतौ **कल्पते** समर्थो भवति । **अस्य** शतौदनापालकस्य पुरुषस्य **सर्वे ऋत्विजः** यागकर्तारः पुरोहिताः **हि** निश्चयेन **प्रीताः** सन्तुष्टाः सन्तः **यथायथं** यथायोग्यं स्वगृहं प्रति **यन्ति** गच्छन्ति ॥ ४ ॥

स स्वर्गमा रोहति यत्रादस्त्रिदिवं दिवः ।
अपूपनाभिं कृत्वा यो ददाति शतौदनाम् ॥ ५ ॥

सः । स्वःऽगम् । आ । रोहति । यत्र । अदः । त्रिऽदिवम् । दिवः । अपूपऽनाभिम् । कृत्वा । यः । ददाति । शत-ऽओदनाम् ॥ ५ ॥

यः शतौदनाम् गाम् अपूपनाभि कृत्वा नाभिपर्यन्तम् अपूपादिभिस्त-दुदरं पूरयित्वा ददाति ब्रह्मणे प्रयच्छति सः पुरुषः स्वर्गम् नाकलोकम् आरोहति अधितिष्ठति यत्र अदः तत् दिवः द्युलोकस्य त्रिदिवं तृतीयं द्युलोकं 'प्राप्स्यमानं 'प्रद्यौ'नामकं विद्यते ॥ ५ ॥

स तांल्लोकान्त्समाप्नोति ये दिव्या ये च पार्थिवाः ।
हिरण्यज्योतिषं कृत्वा यो ददाति शतौदनाम् ॥ ६ ॥

सः । तान् । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः । हिरण्यऽज्योतिषम् । कृत्वा । यः । ददाति । शतऽओदनाम् ॥ ६ ॥

सः पुरुषः तान् प्रसिद्धान् लोकान् समाप्नोति सम्यगधिगच्छति ये लोकाः दिव्याः दिवि भवाः च ये पार्थिवाः पृथिव्यां स्थिताः सन्ति । कीदृशः पुरुषः प्राप्नोतीति ? उच्यते—यः शतौदनां गां हिरण्यज्योतिषं कृत्वा हिरण्येन प्रोज्ज्वलितां विधाय सुवर्णाभरणादिभिरलङ्कृत्य, सुशोभनां विधायेत्यर्थः, ब्राह्मणेभ्यः ददाति प्रयच्छति ॥ ६ ॥

ये ते देवि शमितारः पक्तारो ये च ते जनाः ।
ते त्वा सर्वे गोप्स्यन्ति मैभ्यो भैषीः शतौदने ॥ ७ ॥

ये । ते । देवि । शमितारः । पक्तारः । ये । च । ते । जनाः । ते । त्वा । सर्वे । गोप्स्यन्ति । मा । एभ्यः । भैषीः । शतऽओदने ॥ ७ ॥

हे देवि ! दिव्यगुणयुक्ते देवानामाश्रयभूते वा शतौदने ! ये जनाः ते शमितारः पिपीलिकादंशमशकाद्यपवारणेन घर्षणादिद्वारा कण्डूप-नोदनेन वा त्वां शमयन्ति, शान्तां कुर्वन्ति, ये च जनाः ते तुभ्यं त्वदर्थं पक्तारः तृणादेः पाककर्तारः, कार्पासबीजगुडमिश्रितस्य खाद्यस्य वा

पाचकाः सन्ति **ते सर्वे** हे शतोदने ! **त्वा** त्वाम् **गोप्स्यन्ति** रक्षिष्यन्ति, नूनं ते तव गोप्तारः । **एभ्यः** जनेभ्यः मा **भैषीः** मा बिभेहि । नवस्थानं समागतां गामुद्दिश्य एषा उक्तिः । गोजातेरयं स्वभावो यत् पूर्वस्वामिनं त्यक्त्वा द्वितीयस्थाने गमनाय विरुणद्धि इति ।। ७ ।।

वसवस्त्वा दक्षिणत उत्तरान्मरुतस्त्वा ।
आदित्याः पश्चाद् गोप्स्यन्ति साग्निष्टोममति द्रव ।। ८ ।।

वसवः । त्वा । दक्षिणतः । उत्तरात् । मरुतः । त्वा ।
आदित्याः । पश्चात् । गोप्स्यन्ति । सा । अग्निऽस्तोमम् ।
अति । द्रव ।। ८ ।।

हे शतौदने ! **वसवः** अष्टावसुनामकाः देवाः **त्वा** त्वां **दक्षिणतः** दक्षिणदिक्तः, **मरुतः** मरुन्नामका एकोनपञ्चाशत् देवाः **उत्तरात्** उत्तरदिग्भ्यः, **आदित्याः** अदितिदेव्याः पुत्राः द्वादशादित्याः **पश्चात्** पश्चिमदिक्तश्च त्वां **गोप्स्यन्ति** रक्षिष्यन्ति । अतः **सा** त्वम् **अग्निष्टोमम् अतिद्रव** अग्निष्टोमाख्यसोमयागस्य फलम् अतिक्रम्य सेवकेभ्यः अधिकं फलं देहीत्यर्थः । अत्र 'द्रु गतौ' दानार्थे मन्तव्यः ।। ८ ।।

देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये ।
ते त्वा सर्वे गोप्स्यन्ति सातिरात्रमति द्रव ।। ९ ।।

देवाः । पितरः । मनुष्याः । गन्धर्वऽअप्सरसः । च । ये ।
ते । त्वा । सर्वे । गोप्स्यन्ति । सा । अतिऽरात्रम् ।
अति । द्रव ।। ९ ।।

**ये देवाः** इन्द्रादयः **पितरः** अग्निष्वात्तादयः **मनुष्याः** मन्वादयः **च गन्धर्वाप्सरसः** हाहाहूहूश्चैवमाद्या गन्धर्वाः, उर्वश्यादयोऽप्सरसश्च सन्ति **ते सर्वे** हे शतौदने ! **त्वा** त्वां **गोप्स्यन्ति** रक्षिष्यन्ति । **सा** त्वं **अतिरात्रम् अतिद्रव** अतिरात्राख्यक्रतुफलम् उल्लङ्घ्य, अतिरात्रेष्टिविधानेन यत् फलं लभ्यते, ततोऽप्यधिकं फलं देहीति भावः । पुनरुक्तोऽयं मन्त्रः (अथर्व० ११.७.२७) ।

अस्यैव मन्त्रस्य काण्डान्तरगतस्य उपरिष्टात् सायणभाष्यं पाठकानामुपकृतये यथावत् इहोपन्यस्यते—देवाः अष्टौ वसवः, एकादश रुद्रा इत्येवं गणशो वर्तमानाः। पितरः पितृलोकनिवासिनः पूर्वपुरुषाः। मनुष्याः मनोः सकाशाद् उत्पन्ना मनुष्यजात्याक्रान्ताः। "मनोर्जातावञ्यतौ षुक् च" (पा० ४.१.१६१) इति मनुशब्दाद् यत्-प्रत्ययः, षुगागमश्च। "तितः स्वरितः" इति स्वरितत्वम्। गन्धर्वाप्सरसः गन्धर्वाः विश्वावसुप्रभृतयः, अप्सरसः उर्वशीप्रभृतयः। ये च एते देवाद्या अनुक्रान्तास्ते सर्वे उच्छिष्टात् ब्रह्मौदनोच्छेषणाद् उच्छिष्यमाणाद् ब्रह्मणः सकाशाद् वा जज्ञिरे उत्पन्नाः। तथा दिवि द्युलोके वर्तमाना ये च अन्ये देवाः तथा दिवि श्रिताः दिवमाश्रित्य वर्तमाना देवजनाः ते सर्वे उच्छिष्टाज्जज्ञिरे इति ॥ ९ ॥

अन्तरिक्षं दिवं भूमिमादित्यान् मरुतो दिशः।
लोकान्त्स सर्वानाप्नोति यो ददाति शतौदनाम् ॥ १० ॥

अन्तरिक्षम्। दिवम्। भूमिम्। आदित्यान्। मरुतः। दिशः।
लोकान्। सः। सर्वान्। आप्नोति। यः। ददाति।
शतऽओदनाम् ॥ १० ॥

यः शतौदनां गाम् ऋत्विग्भ्यः ददाति सः अन्तरिक्षं दिवं द्युलोकं स्वर्गं वा भूमिं पृथिवीम् आदित्यान् आदित्यसम्बन्धिनश्च एवं मरुतः दिशः मरुत्सम्बद्धान् दिक्सम्बद्धांश्च सर्वान् लोकान् दिव्यलोकान् आप्नोति अधिगच्छति ॥ १० ॥

घृतं प्रोक्षन्ती सुभगा देवी देवान् गमिष्यति।
पक्तारमघ्न्ये मा हिंसीर्दिवं प्रेहि शतौदने ॥ ११ ॥

घृतम्। प्रऽउक्षन्ती। सुऽभगा। देवी। देवान्।
गमिष्यति। पक्तारम्। अघ्न्ये। मा। हिंसीः। दिवम्।
प्र। इहि। शतऽओदने ॥ ११ ॥

घृतम् आज्यादिकं प्रोक्षन्ती सिञ्चन्ती, ददतीत्यर्थः। सुभगा सौभाग्यशालिनी देवी दिव्यगुणोपेता इयं धेनुः मृत्योरनन्तरं देवान्

इन्द्रादिदेवान् तदधिष्ठितान् लोकान् वा **गमिष्यति** प्राप्स्यति । हे **शतौदने** ! **अघ्न्ये** अहिंसनीये ! त्वं **पक्तारं** त्वदर्थं कापीसबीज-गुडादिपाककर्तारं स्वसेवकं **मा हिंसीः** मा मारय । जीवन्ती त्वं स्वसेव-केभ्यः सर्वैश्वर्यं ददती अन्ते **दिवं** स्वर्गं **प्रेहि** प्रयाहि सर्वोपकारिण्यास्ते मरणोत्तरं स्वर्गमेवास्पदमित्यर्थः ॥ ११ ॥

**ये देवा दिविषदो अन्तरिक्षसदश्च ये ये चेमे भूम्यामधि ।**
**तेभ्यस्त्वं धुक्ष्व सर्वदा क्षीरं सर्पिरथो मधु ॥ १२ ॥**

**ये । देवाः । दिविऽसदः । अन्तरिक्षऽसदः । च । ये ।**
**ये । च । इमे । भूम्याम् । अधि । तेभ्यः । त्वम् । धुक्ष्व ।**
**सर्वदा । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १२ ॥**

**ये देवाः दिविषदः** द्युलोकवासिनः **च ये अन्तरिक्षसदः** अन्तरिक्ष-स्थाः **ये च इमे** अस्मत्समीपे **भूम्याम् अधि** पृथिवीमधिकृत्य संस्थिताः, हे शतौदने ! **तेभ्यः** सर्वेभ्यो देवेभ्यः **त्वं सर्वदा** नित्यमनवरतं **क्षीरम्** दुग्धम्, **सर्पिः** घृतम् **अथ** अपिच **मधु** मधुरपदार्थजातं **धुक्ष्व** दोग्धि ॥ १२ ॥

**यत् ते शिरो यत् ते मुखं यौ कर्णौ ये च ते हनू ।**
**आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥ १३ ॥**

**यत् । ते । शिरः । यत् । ते । मुखम् । यौ । कर्णौ ।**
**ये इति । च । ते । हनू इति । आमिक्षाम् । दुह्रताम् ।**
**दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १३ ॥**

हे शतौदने ! **यत् ते** तव **शिरः** उत्तमाङ्गम्, **यत् ते** तव **मुखम्** आननम्, **यौ कर्णौ** श्रवणद्वयम्, **ये च ते** तव **हनू** मुखपार्श्वौ ओष्ठमूले वा, तदेतत् सर्वं तेऽङ्गजातं **दात्रे** तुभ्यं दाशुषे **आमिक्षाम्**, पक्वोष्णपयसि दधिमिश्रणेन सम्पादितं द्रव्यम्, **क्षीरम्, सर्पिः अथ** पुनः **मधु** मधुर-पदार्थान् **दुह्रताम्** दुहताम् ॥ १३ ॥

**यौ त ओष्ठौ ये नासिके ये शृङ्गे ये च तेऽक्षिणी ।**
**आमिक्षां । ० ॥ १४ ॥**

२५

यौ । ते । ओष्ठौं । ये इति । नासिके इति । ये इति ।
शृङ्गे इति । ये इति । च । ते । अक्षिणी इति ।
आमिक्षाम् । ० ॥ १४ ॥

ते तव यौ ओष्ठौ ऊर्ध्वोष्ठाधरोष्ठौ ये नासिके ये शृङ्गे च ये ते अक्षिणी नेत्रे, तदेतत् सर्वं तेऽङ्गजातम् आमिक्षाम् इत्यादि पूर्ववत् ॥ १४ ॥

यत् ते क्लोमा यद्धृदयं पुरीतत् सहकण्ठिका ।
आमिक्षां । ० ॥ १५ ॥

यत् । ते । क्लोमा । यत् । हृदयम् । पुरिऽतत् । सहऽकण्ठिका ।
आमिक्षाम् । ० ॥ १५ ॥

शतौदने ! ते तव यत् क्लोमा: फुफ्फुसद्वयम्, यत् हृदयम् सहकण्ठिका पुरीतत् कण्ठगतनाड्या सहिता हृदयस्य नाडी, एतत्सर्वम्, शेषं पूर्ववत् ॥ १५ ॥

यत् ते यकृद् ये मतस्ने यदान्त्रं याश्च ते गुदाः ।
आमिक्षां । ० ॥ १६ ॥

यत् । ते । यकृत् । ये इति । मतस्ने इति । यत् ।
आन्त्रम् । याः । च । ते । गुदाः । आमिक्षाम् । ० ॥ १६ ॥

शतौदने ! यत् ते यकृत् हृदयाद् दक्षिणे भागे स्थितं मांसपिण्डम्, ये मतस्ने हृदयोभयपार्श्वस्थे अस्थिनी, ग्रीवोभयभागौ, वा यत् आन्त्रम् बृहदन्नपाचननलिकाः च याः ते गुदा पायू मलनिष्कासनाङ्गम्, एतत्सर्वं शेषं पूर्ववत् ॥ १६ ॥

यस्तें प्लाशिर्यो वनिष्ठुर्यौ कुक्षी यच्च चर्म ते ।
आमिक्षां । ० ॥ १७ ॥

यः । ते । प्लाशिः । यः । वनिष्ठुः । यौ । कुक्षी इति ।
यत् । च । चर्म । ते । आमिक्षाम् । ० ॥ १७ ॥

शतौदने ! **यः ते प्लाशिः** प्लीहा 'तिल्ली' इति भाषाभाषितः, **यः वनिष्ठुः** आन्त्रविशेषः, 'वन संभक्तौ' औणादिकः इष्टुप्-प्रत्ययः। रस-रक्तादीनां संभाजकः। **यौ कुक्षी** मध्यदेहस्य द्वौ पार्श्वौ **यत् च ते चर्म** त्वक्, एतत्सर्वम्, अन्यत् पूर्ववत् ॥ १७ ॥

**यत् तें मुज्जा यदस्थि यन्मांसं यच्चु लोहिंतम् ।**
**आमिक्षां । ० ॥ १८ ॥**

**यत् । ते । मुज्जा । यत् । अस्थि । यत् । मांसम् ।**
**यत् । च । लोहिंतम् । आमिक्षाम् । ० ॥ १८ ॥**

हे शतौदने ! **यत् ते** तव **मज्जा** अस्थ्यन्तर्गतो धातुविशेषः **यत् अस्थि, यत् मांसम्, यत् च लोहितं** रक्तम् एतत्सर्वं शेषं पूर्ववत् ॥ १८ ॥

**यौ तें बाहू ये दोषणी यावंसौ या चं ते कुकुत् ।**
**आमिंक्षां । ० ॥ १९ ॥**

**यौ । ते । बाहू इति । ये इति । दोषणी इति । यौ ।**
**अंसौ । या । च । ते । कुकुत् । आमिक्षाम् । ० ॥ १९ ॥**

शतौदने ! **ते यौ बाहू** भुजौ, **ये दोषणी** बाह्वोः पादयोर्वाऽग्रभागौ, **यौ अंसौ** स्कन्धौ **या च ते ककुत्** स्कन्धमूले ऊर्ध्वोत्थितः मांसपिण्डः, एतत्सर्वम्, शेषं पूर्ववत् ॥ १९ ॥

**यास्तें ग्रीवा ये स्कुन्धा याः पृष्टीर्याश्च पर्शवः ।**
**आमिक्षां । ० ॥ २० ॥**

**याः । ते । ग्रीवाः । ये । स्कुन्धाः । याः । पृष्टीः ।**
**याः । च । पर्शवः । आमिक्षाम् । ० ॥ २० ॥**

शतौदने ! **या ते ग्रीवा** ग्रीवास्था नाड्यः **ये स्कन्धाः** स्कन्धास्थीनि, **याः पृष्ठीः** पृष्ठास्थीनि, **याः च पर्शवः** उरोऽस्थीनि पार्श्वस्थीनि वा, एतत्सर्वम्, शेषं पूर्ववत् ॥ २० ॥

यौ त ऊरू अंष्ठीवन्तौ ये श्रोणी या च ते भसत् ।
आमिक्षां । ० ॥ २१ ॥

यौ । ते । ऊरू इति । अष्ठीवन्तौ । ये इति । श्रोणी इति ।
या । च । ते । भसत् । आमिक्षाम् । ० ॥ २१ ॥

शतौदने ! **यौ ते ऊरू** जानुनः ऊर्ध्वभागौ, ये **अष्ठीवन्तौ** जानुनी, **ये श्रोणी** कटिप्रदेशः **या च ते भसत्** भगेन्द्रियम्, एतत्सर्वम्, शेषं समानम् ॥ २१ ॥

यत् ते पुच्छं ये ते वाला यदूधो ये च ते स्तनाः ।
आमिक्षां । ० ॥ २२ ॥

यत् । ते । पुच्छम् । ये । ते । वालाः । यत् । ऊधः । ये ।
च । ते । स्तनाः । आमिक्षाम् । ० ॥ २२ ॥

शतौदने ! **यत् ते पुच्छं** लाङ्गूलम् **ये ते बालाः** रोमाणि **यत् ऊधः** दुग्धधाराङ्गम् आपीनमिति (अमर० २. ९. ७३), **ये च ते स्तनाः** दुग्धनिष्कासनाङ्गम्, एतत्सर्वं शेषं पूर्ववत् ॥ २२ ॥

यास्ते जङ्घाः याः कुष्ठिका ऋच्छरा ये च ते शफाः ।
आमिक्षां । ० ॥ २३ ॥

याः । ते । जङ्घाः । याः । कुष्ठिकाः । ऋच्छराः । ये । च ।
ते । शफाः । आमिक्षाम् । दुहताम् । दात्रे । क्षीरम् ।
सर्पिः । अथो इति । मधु ॥ २३ ॥

शतौदने ! **या ते जङ्घाः** गुल्फजान्वोर्मध्यभागाः, **या कुष्ठिकाः** नखाङ्गुल्यादयः, **ये ऋच्छराः** शफोपरिस्था भागाः, 'ऋच्छ गतौ' (१२९७ तुदा०) इत्यस्मात् 'ऋच्छेररः' (उणा० ३.१३१) इत्यनेन अर् । **ये च ते शफाः** खुराः, ते सर्वे, शेषं समानम् ॥ २३ ॥

यत् ते चर्म शतौदने यानि लोमान्यघ्न्ये ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥ २४ ॥

यत् । ते । चर्म । शतऽओदने । यानि । लोमानि ।
अघ्न्ये । आमिक्षाम् । दुहताम् । दात्रे । क्षीरम् । सर्पिः ।
अथो इति । मधु ॥ २४ ॥

हे शतौदने ! यत् ते तव चर्म त्वक्, हे अघ्न्ये ! अहिंसनीये यानि ते लोमानि रोमाणि एतत्सर्वम्, शेषं पूर्ववत् ॥ २४ ॥

क्रोडौ ते स्तां पुरोडाशावाज्येनाभिघारितौ ।
तौ पक्षौ देवि कृत्वा सा पक्तारं दिवं वह ॥ २५ ॥

क्रोडौ । ते । स्ताम् । पुरोडाशौ । आज्येन । अभिऽघारितौ ।
तौ । पक्षौ । देवि । कृत्वा । सा । पक्तारम् । दिवम् । वह ॥ २५ ॥

हे शतौदने ! ते क्रोडौ अङ्कौ आज्येन घृतेन अभिघारितौ सुस्निग्धौ, सुगन्ध्यादिभिर्भरितौ पुराडाशौ पुरोडाशतुल्यौ स्तां भवताम्, तौ अङ्कस्य पार्श्वभागौ पक्षौ कृत्वा पक्षिणां पतत्राविव कृत्वा हे देवि दिव्यरूपे, सा त्वं पक्तारम् स्वात्मनः पालनपोषणकर्तारं गोभक्तं दिवं वह स्वर्गं प्रापय ॥ २५ ॥

उलूखले मुसले यश्च चर्मणि यो वा शूर्पे तण्डुलः कणः ।
यं वा वातो मातरिश्वा पवमानो ममाथाग्निष्टद्धोता सुहुतं
कृणोतु ॥ २६ ॥

उलूखले । मुसले । यः । च । चर्मणि । यः । वा । शूर्पे ।
तण्डुलः । कणः । यम् । वा । वातः । मातरिश्वा । पवमानः ।
ममाथ । अग्निः । तत् । होता । सुऽहुतम् । कृणोतु ॥ २६ ॥

यः तण्डुलः कणः तण्डुलस्य त्रुटितभागः धान्यादीनां एकः कणो वा उलूखले धान्यादिकण्डनसाधने उरूकरे, 'उलूखलमुरू मे करदिति । तस्मादुरूकरमुरूकरं ह वै तदुलूखलमित्याचक्षते परोक्षम्' (शत० ब्रा० ७.५.१.२२) । मुसले धान्यादिकण्डनसाधने यः च चर्मणि मृगचर्मणि यः वा कणः शूर्पे संलग्नः अवशिष्टो वा विद्यते, वा पक्षान्तरे,

**यम्** तण्डुलकणं **मातरिश्वा** सदागतिः **पवमानः** संशोधकः **वातः** वायुः **ममाथ** मथितवान्, मथित्वा च पवित्रीकृतवान् तत् सर्वं तण्डुलकणजातं **होता** होतृस्थानीयो भूत्वा **अग्निः** जातवेदाः **सुहुतं कृणोतु** सुष्टु आहुतिरूपेण स्वीकरोतु ॥ २६ ॥

**अपो देवीर्मधुमतीर्घृतश्चुतो ब्रह्मणां हस्तेषु प्रपृथक् सादयामि । यत्काम इदमभिषिञ्चामि वोऽहं तन्मे सर्वं सं पद्यतां वयं स्याम पतयो रयीणाम् ॥ २७ ॥**

**अपः । देवीः । मधुऽमतीः । घृतऽश्चुतः । ब्रह्मणाम् । हस्तेषु । प्रऽपृथक् । सादयामि । यत्ऽकामः । इदम् । अभिऽसिञ्चामि । वः । अहम् । तत् । मे । सर्वम् । सम् । पद्यताम् । वयम् । स्याम । पतयः । रयीणाम् ॥ २७ ॥**

अधुना यजमानः ब्राह्मणानां हस्तेषु ससङ्कल्पं शतौदनां समर्पयति– **मधुमतीः** मधुररसोपेताः **घृतश्चुतः** घृतस्राविण्यः **देवीः** दिव्यगुणयुक्ताः **अपः** अपस्वतीः पयःसारसम्पन्नाः । अपः अपस्वतीश्च, तयोरभेदविवक्षयेदम् । यथा गोशब्दः पशोस्तदन्तर्गतदुग्धादिरसस्यापि वाचको भवति । एवम्भूताः शतौदनाः गाः **ब्रह्मणां** ब्राह्मणानां **हस्तेषु प्रपृथक्** सुचारुरूपेण पृथक् पृथक् **सादयामि** समर्पयामि । **यत्कामः** यत् यत् कामयमानः **इदम्** इदानीम् अहम् **अभिषिञ्चामि** ससङ्कल्पं अञ्जलिना जलं सिञ्चामि, यद्वा युष्माकमभिषेकं करोमि' **तत् मे** मह्यं **सर्वं** पूर्णतां **सम्पद्यताम्** यायात् । **वयं रयीणाम्** सकलैश्वर्याणां **पतयः** स्वामिनः **स्याम** भवेम इति ब्राह्मणाय शतौदनागोप्रदाता कामयते ॥ २७ ॥

---

## दशमं सूक्तम् : वशा गौः

(१–३४) ऋषिः—कश्यपः । देवता —वशा । छन्दः — २४, ७, ९, ११–२२, २५, २८, ३०, ३३-३४ अनुष्टुप्, १ ककुम्मती, ५ पञ्चपदा० स्कन्धोग्रीवी बृहती, ६, ८, १० विराट्; २३ बृहती; २४ उपरिष्टाद् बृहती; २६ आस्तारपङ्क्तिः, २७ शंकुमती, २९ त्रिपदा विराट् गायत्री; ३१ उष्णिग्गर्भा, ३२ विराट् पथ्या बृहती।

**विनियोगः**—साम्प्रदायिकास्तु 'नमस्ते जायमानाय' इत्यर्थसूक्तेन वशासवे निरुप्तहविरभिमर्शन-संपात-दातृवाचन-दानानि कुर्यात्। तदुक्तं कौशिकेन—"नमस्ते जायमानायै" (अथर्व० १०.१०), 'ददामि' (अथर्व० १२.४) इति वशाम् उदपात्रेण संपातवता संप्रोक्ष्याभिमन्त्र्याभिनिगद्य दद्याद् दाता वाच्यमानो 'भूमिष्ट्वा' (अथर्व० ३.२९.८) इत्येनां प्रतिगृह्णाति" (कौ० सू० ६६,२०-२१) इति।

**नमस्ते जायमानायै जाताया उत ते नमः।**
**वालेभ्यः शफेभ्यो रूपायाऽघ्न्ये ते नमः ॥ १ ॥**

**नमः। ते। जायमानायै। जातायै। उत। ते। नमः।**
**वालेभ्यः। शफेभ्यः। रूपाय। अघ्न्ये। ते। नमः ॥ १ ॥**

**अत्रायमभिसन्धिः**—नवमे सूक्ते शतौदना गौर्वर्णिता। अस्मिंश्च 'वशा' गौर्वर्ण्यते। उभे अपि एकैव, केवलं नामतो भेदः। सेयं न प्राकृता गौः। 'कामधेनुरि'ति प्रसिद्धाऽपि पुराणादिषु नैषा। सा तु ब्रह्माणं शरणं यातीति तत्र तत्र श्रूयते। इयं पुनर्ब्रह्माणं विष्ण्वादिदेवान् सर्वांश्च लोकान् सृजतीति अत्रैव सूक्ते व्याहृतम्। अत इयं विराड्रूपा परब्रह्मणः शक्तिः सृष्टि-स्थिति-संहारकारिणी, अत्रैव अस्या अमृतरूपेण, मृत्युरूपेण सर्वेषां सर्जनशक्तिरूपेण च वर्णनात्। शक्ति-शक्तिमतोश्चाभेदात् ब्रह्मरूपैवेयम्। अप्रसूता वन्ध्याऽपीयं जगद्रूपस्य दुग्धस्य दोग्ध्रीति निरतिशयचमत्कारिणी। ईदृशं माहात्म्यं भजन्त्या अस्या तादृशमाहात्म्यविदे एव दानम् अभीष्टफलप्रदमित्यपि सूक्तेऽत्र निर्दिष्टम्। वस्तुत एतादृशी गौः प्रत्यक्षं कस्मै दात्रे समुपलभ्येत ? को वा एवंवित् प्रतिग्रहीता पुनः समुपतिष्ठेत ? अन्ते वयममुमेव निष्कर्षं विद्मो यत् प्राकृतायां गवि एतादृशीं भावनां कृत्वा सा योग्याय, प्राणाधिकं तस्याः पालनकर्त्रे प्रदीयेत चेन्नूनं सा विराड्रूपा धेनुः प्रीता भूत्वा दातुरभीष्टं संसाधयेत्। एवं लोकोत्तरौ एतौ सूक्तौ गवालम्भने विनियोजयन्तो मध्यन्दिने रात्रिमाचक्षाणाः जनाः नूनं दयनीयधिषणा इति तेषां कथाऽपि पापाय भवेदित्यस्माकं निर्विचिकित्सं मतम्। अन्यच्च, सूक्ते इमे गूढतमं रहस्यमाचक्षाते। यथाबुद्ध्या अक्षराण्यादाय अर्थावबोधनाय प्रयासः कृतः। गूढार्थस्तु ऋषिरेव जानीयादिति।

हे वशे ! **जायमानायै** उत्पद्यमानायै **उत** अपि च **जातायै** उत्पन्नायै, **ते नमः** नमस्करोमि । हे **अघ्न्ये** अवध्ये ! **ते बालेभ्यः** रोमभ्यः **शफेभ्यः** खुरेभ्यः तथा **ते रूपाय नमः** मम प्रणामोऽस्तु ॥ १ ॥

या वि॒द्यात् स॒प्त प्र॒वतः॑ स॒प्त वि॒द्यात् प॑रा॒वतः॑ ।
शिरो॑ य॒ज्ञस्य॒ यो वि॒द्यात् स व॒शां प्रति॑ गृह्णीयात् ॥ २ ॥

यः । वि॒द्यात् । स॒प्त । प्र॒ऽवतः॑ । स॒प्त । वि॒द्यात् । प॒रा॒ऽवतः॑ । शिरः॑ । य॒ज्ञस्य॑ । यः । वि॒द्यात् । सः । व॒शाम् । प्रति॑ । गृ॒ह्णी॒यात् ॥ २ ॥

**यः** जनः **प्रवतः सप्त** भूरादिसप्तसङ्ख्याकान् प्रकृष्टतमान् ऊर्ध्व-लोकान् **विद्यात्** विजानाति च **सप्त परावतः** ततः पूर्वलोकेभ्यः निकृष्टान् दूरस्थितान् अतल-सुतलादिसप्ताधोलोकान् । 'परावत' इति दूर-नामसु पठितम् (निघ० ३.२६), 'अन्तो वै परावतः' (ऐ०५.२), प्र-उपसर्गात् गत्यर्थकात् अवधातोः शतृप्रत्यये धातोरकारस्य लोपः । 'अवति गतिकर्मा' (निघ० १०.२०) । **विद्यात्** विजानाति, एवं **यज्ञस्य** सृष्टियज्ञस्य देहयज्ञस्य वा **शिरः** शिरःस्थानीयं सूर्यलोकं **विद्यात्** विजानाति **सः वशां** धेनुं **प्रतिगृहणीयात्** स्वीकरोतु ॥ २ ॥

वे॒दा॒हं स॒प्त प्र॒वतः॑ स॒प्त वे॑द प॒रा॒वतः॑ ।
शिरो॑ य॒ज्ञस्या॒हं वे॑द॒ सोमं॑ चा॒स्यां विच॒क्ष॒णम् ॥ ३ ॥

वेद॑ । अ॒हम् । स॒प्त । प्र॒ऽवतः॑ । स॒प्त । वे॒द॒ । प॒रा॒ऽवतः॑ । शिरः॑ । य॒ज्ञस्य॑ । अ॒हम् । वे॒द॒ । सोम॑म् । च॒ । अ॒स्या॒म् । वि॒ऽच॒क्ष॒णम् ॥ ३ ॥

कश्यपः अथर्वा ऋषिः उच्चैः घोषयति—अहम् कश्यप ऋषिः **सप्त प्रवतः** लोकान् उत **सप्त परावतः** लोकान् **वेद** सम्यक्तया विजानामि । **यज्ञस्य** शिरः अपि अहं **वेद** वेद्मि । **च** अन्यच्च, **अस्यां** वशायां विद्यमानं **विचक्षणम्** सकलभूतजातस्य संसाररहस्यस्य प्रच्छन्नरूपस्य द्रष्टारं **सोमम्** अपि अहं वेद्मि ॥ ३ ॥

यया द्यौर्यया पृथिवी ययापो गुपिता इमाः ।
वशां सहस्रधारां ब्रह्मणाच्छावदामसि ॥ ४ ॥

यया । द्यौः । यया । पृथिवी । यया । आपः । गुपिताः । इमाः । वशाम् । सहस्रऽधाराम् । ब्रह्मणा । अच्छऽआवदामसि ॥ ४ ॥

**यया** विराट्रूपधारिण्या वशया **द्यौः** द्युलोकः **यया पृथिवी** पृथिवीलोकः तथा **यया इमाः** आन्तरिक्ष्या **आपः गुपिताः** रक्षिताः सन्ति, तां **सहस्रधारां** सहस्रधारावतीं विराड्रूपां **वशां** वयं **ब्रह्मणा** मन्त्रबलेन **अच्छावदामसि** सत्कारेण स्वाभिमुखं प्रापयामः, आह्वयामः ॥ ४ ॥

शतं कंसाः शतं दोग्धारः शतं गोप्तारो अधि पृष्ठे अस्याः ।
ये देवास्तस्यां प्राणन्ति ते वशां विदुरेकधा ॥ ५ ॥

शतम् । कंसाः । शतम् । दोग्धारः । शतम् । गोप्तारः । अधि । पृष्ठे । अस्याः । ये । देवाः । तस्याम् । प्राणन्ति । ते । वशाम् । विदुः । एकऽधा ॥ ५ ॥

**अस्याः** वशाधेनोः **पृष्ठे** पृष्ठतः **शतं कंसाः** शतसंख्याक-कांस्यनिर्मितानि दोहनपात्राणि धारयन्तः **शतं दोग्धारः** शतसंख्याकाः दोहनकर्तारः **शतं गोप्तारः** तावन्त एव रक्षकाः **अधि** अधिष्ठिताः सन्ति । **ये देवाः तस्यां** धेनोरन्तःस्थिताः सन्तः **प्राणन्ति** प्राणधारणं कुर्वन्ति, **ते वशां** धेनुम् **एकधा** एकरूपेण, यथार्थरूपेण, समग्रतया **विदुः** जानन्ति ॥ ५ ॥

यज्ञपदीराक्षीरा स्वधाप्राणा महीलुका ।
वशा पर्जन्यपत्नी देवाँ अप्येति ब्रह्मणा ॥ ६ ॥

यज्ञऽपदी । इराऽक्षीरा । स्वधाऽप्राणा । महीलुका । वशा । पर्जन्यऽपत्नी । देवान् । अपि । एति । ब्रह्मणा ॥ ६ ॥

**यज्ञपदी** यज्ञरूपपादैर्युता, अस्याः पादा यज्ञा एवेत्यर्थः । **इराक्षीरा** पृथिवीरूप-दुग्धवती, अस्या दुग्धं पृथिवीरूपमेव । **स्वधाप्राणा** अन्नान्येवास्याः प्राणास्तादृशी । **महीलुका** महीरुचा महती दीप्तिमती, रुच् दीप्तौ, क्विप्, टाप् । **पर्जन्यपत्नी** पर्जन्यः परोजनयिता वृषभस्तस्य पत्नी इयमस्ति । यद्वा—**यज्ञपत्नी**, यज्ञेन यज्ञाय वा पद्यते गम्यते, प्राप्यते सा । किं वा यज्ञा एव पादा यस्या इति व्युत्पत्त्या यज्ञाश्रिता, यज्ञं विहाय तस्याः कल्पनैव भवितुं नार्हतीति । **इराक्षीरा**, इरा पृथिवी एव क्षीरसाधनं यस्याः सा । पृथिव्यां समुत्पन्नैरेव तृणादिभिः अस्याः क्षीरं लभ्यते इति प्रसिद्धेः । **स्वधाप्राणा** स्वधाधारणशक्तिरेव अस्याः प्राणाः । महीलुकेति पूर्ववत् । **पर्जन्यपत्नी**, पर्जन्यस्य मेघस्य पत्नी उत्पादिका, पालयित्री वा, अस्या आज्येन प्रदत्तया आहुत्यैव वृष्टि-जननात् । यथोक्तम्—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदिज्जायते वृष्टिः' इति ॥ ६ ॥

**अनु त्वाग्निः प्राविशदनु सोमो वशे त्वा ।**
**ऊधस्ते भद्रे पर्जन्यो विद्युतस्ते स्तना वशे ॥ ७ ॥**

**अनु । त्वा । अग्निः । प्र । अविशत् । अनु । सोमः । वशे । त्वा । ऊधः । ते । भद्रे । पर्जन्यः । विऽद्युतः । ते । स्तनाः । वशे ॥ ७ ॥**

हे वशे ! **अग्निः** अग्निदेवः **त्वा अनु** त्वदन्तः आनुकूल्येन **प्राविशत्** प्रविष्टः । एवं **सोमः** अपि **अनु** त्वदनुकूलः सन् त्वा त्वां प्रविष्टोऽस्ति । हे **भद्रे** ! कल्याणकारिणि वशे ! ते **ऊधः** दुग्धाधाराङ्गं **पर्जन्यः** मेघः, यद्वा मेघ इवातिविशालं उरुतरं च अस्ति । **ते स्तनाः विद्युतः** विद्युद्रूपाः, यद्वा विद्युदिव दुग्धरसस्राविणः सन्ति ॥ ७ ॥

**अपस्त्वं धुक्षे प्रथमा उर्वरा अपरा वशे ।**
**तृतीयं राष्ट्रं धुक्षेऽन्नं क्षीरं वशे त्वम् ॥ ८ ॥**

**अपः । त्वम् । धुक्षे । प्रथमाः । उर्वराः । अपराः । वशे । तृतीयम् । राष्ट्रम् । धुक्षे । अन्नम् । क्षीरम् । वशे । त्वम् ॥ ८ ॥**

हे **वशे**! **प्रथमाः** आदौ त्वं घृताहुतिसाहाय्येन मेघेभ्यः **अपः** जलधाराः पयोरूपाः **धुक्षे** सिञ्चसि क्षरसि वा। **अपराः** द्वितीयं ततः परम् **उर्वराः** सस्याढ्यां भूमिं प्रपूरयसि। तदनन्तरं **तृतीयं राष्ट्रं धुक्षे** राष्ट्रं धनधान्यादिना समृद्धं करोषि। एवमेव **अन्नं क्षीरं** दुग्धादिकं त्वं प्रददासि। इत्थं प्रजापालनसाधनानां सर्वेषां त्वमाकर एवेति तत्त्वम् ॥ ८ ॥

यदादित्यैर्हूयमानोपातिष्ठ ऋतावरि।
इन्द्रः सहस्रं पात्रान्त्सोमं त्वापाययद् वशे ॥ ९ ॥

यत्। आदित्यैः। हूयमाना। उपऽअतिष्ठः। ऋतऽवरि।
इन्द्रः। सहस्रम्। पात्रान्। सोमम्। त्वा।
अपाययत्। वशे ॥ ९ ॥

**ऋतावरि** ऋतं यज्ञं विद्यते यस्यां सा तत्सम्बुद्धौ यज्ञशीले! **यत्** यदा **आदित्यैः** देवैः **हूयमाना** कृताह्वाना त्वम् **उपातिष्ठः** तेषां समीपमागत्य स्थिता, तदा हे **वशे**! **इन्द्रः** देवाधिपतिः **त्वा** त्वां **सोमं सहस्रं पात्रान्** सोमरसेन प्रपूरितान् सहस्रकुम्भान् **अपाययत्** पाययामास ॥ ९ ॥

यदनूचीन्द्रमैरात् त्वं ऋषभोऽह्वयत्।
तस्मात् ते वृत्रहा पयः क्षीरं क्रुद्धोऽहरद् वशे ॥ १० ॥

यत्। अनूची। इन्द्रम्। ऐः। आत्। त्वा। ऋषभः।
अह्वयत्। तस्मात्। ते। वृत्रऽहा। पयः। क्षीरम्।
क्रुद्धः। अहरत्। वशे ॥ १० ॥

हे वशे! त्वं **यत्** यदा **अनूची** अनु+अञ्चती, पश्चाद् गच्छन्ती, आनुकूल्येन वर्तमाना **इन्द्रम्** देवराजम् **ऐः** अगच्छ, **आत्** तदा **ऋषभः त्वा** त्वाम् **अह्वयत्** आकारयत्। **तस्मात्** ऋषभाऽऽह्वानात् **क्रुद्धः** कुपितः सन् **वृत्रहा** वृत्रासुरहन्ता इन्द्रः **ते** तव **पयः** स्वास्थ्यवृद्धिकरं, 'पयः पिबतेर्वा, प्यायतेर्वा (निरु०) **क्षीरं** दुग्धम् **अहरत्** हृतवान्। ऋषभेण सगर्भा गौः दुग्धं न्यूनमेव ददाति, प्रसवकाले समीपे सति तु

सर्वथा न ददातीति नैसर्गिको नियमः। स एवात्र इन्द्रेण क्रुद्ध्वा तस्य पयोऽपहृतमित्युत्प्रेक्ष्यते ॥ १० ॥

यत् ते क्रुद्धो धनपतिरा क्षीरमहरद् वशे।
इदं तदद्य नाकस्त्रिषु पात्रेषु रक्षति ॥ ११ ॥

यत्। ते। क्रुद्धः। धनऽपतिः। आ। क्षीरम्। अहरत्। वशे।
इदम्। तत्। अद्य। नाकः। त्रिषु। पात्रेषु। रक्षति ॥ ११ ॥

हे वशे ! **यत्** यदा **क्रुद्धः** कुपितः **धनपतिः** धनानां स्वामी इन्द्रः **ते क्षीरं** दुग्धम् **आहरत्** हृतवान्। **इदं तत्** क्षीरं **अद्य** अधुना **नाकः** स्वर्गलोकः उपचारात् स्वर्गस्था देवाः **त्रिषु पात्रेषु** पात्रायितेषु त्रिषु द्युलोकेषु सोमरूपेण परिणमय्य **रक्षति** स्थिररूपेणेति ॥ ११ ॥

त्रिषु पात्रेषु तं सोममा देव्यहरद् वशा।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥ १२ ॥

त्रिषु। पात्रेषु। तम्। सोमम्। आ। देवी। अहरत्। वशा।
अथर्वा। यत्र। दीक्षितः। बर्हिषि। आस्त। हिरण्यये ॥ १२ ॥

ततो **देवी** दिव्यरूपा सा **वशा** धेनुः **त्रिषु पात्रेषु** त्रिषु द्युलोकेषु निहितं **तं सोमं** ततः **आहरत्** गृहीतवती, गृहीत्वा च समागता **यत्र दीक्षितः** दीक्षामाधाय संस्थितः **अथर्वा** ऋषिः **हिरण्यये** हिरण्यवत् दीप्ते **बर्हिषि** आसने बद्धपद्मासनः, ध्यानमग्नः **आस्ते** तिष्ठति ॥ १२ ॥

सं हि सोमेनागत समु सर्वेण पद्वता।
वशा समुद्रमध्यष्ठाद् गन्धर्वैः कलिभिः सह ॥ १३ ॥

सम्। हि। सोमेन। अगत। सम्। ऊं इति। सर्वेण।
पत्ऽवता। वशा। समुद्रम्। अधि। अस्थात्। गन्धर्वैः।
कलिऽभिः। सह ॥ १३ ॥

ततो हि नूनं सा **वशा सोमेन सं अगत** संगता। उ अपि च **सर्वेण पद्वता** सकलेन पादयुक्तेन गतिमता पुरुषार्थिनाऽपि **सम्** संगता। ततः

**इयं कलिभिः** क्रीडारतैः **गन्धर्वैः** सोमरक्षकैः गन्धर्वैः सह **समुद्रम्** अन्तरिक्षम् **अध्यष्ठात्** अधिकृत्य अतिष्ठत् ।। १३ ।।

सं हि वातेनागत समु सर्वैः पतत्रिभिः ।
वशा समुद्रे प्रानृत्यदृचः सामानि बिभ्रती ।। १४ ।।

सम् । हि । वातेन । अगत । सम् । ऊं इति । सर्वैः । पतत्रिऽभिः । वशा । समुद्रे । प्र । अनृत्यत् । ऋचः । सामानि । बिभ्रती ।। १४ ।।

हि नूनं ततो **वशा वातेन** वायुना **सम् अगत** संगता । उ अपि च **सर्वैः पतत्रिभिः** पक्षिभिः अपि **सम्** संगता । एतादृशी सा **ऋचः सामानि** साममन्त्रैः सह ऋङ्मन्त्रान् **बिभ्रती** धारयन्ती **समुद्रे** अन्तरिक्षे **प्रानृत्यत्** नृत्यमकरोत् ।। १४ ।।

सं हि सूर्येणागत समु सर्वेण चक्षुषा ।
वशा समुद्रमत्यख्यद् भद्रा ज्योतींषि बिभ्रती ।। १५ ।।

सम् । हि । सूर्येण । अगत । सम् । ऊं इति । सर्वेण । चक्षुषा । वशा । समुद्रम् । अति । अख्यत् । भद्रा । ज्योतींषि । बिभ्रती ।। १५ ।।

हि नूनं ततः सा **वशा सूर्येण** सह **सम् अगत** संगता बभूव । उ अपि च **सर्वेण** सर्वेषां **चक्षुषा** चक्षुरूपेण चन्द्रेणापि **सम्** संगता **ज्योतींषि** नक्षत्ररूपान् दिव्यप्रकाशान् **बिभ्रती** धारयन्ती **भद्रा** कल्याणकारिणी सा **समुद्रम्** अन्तरिक्षम् **अत्यख्यत्** अत्यधिकं प्रकाशयत् ।। १५ ।।

अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।
अश्वः समुद्रो भूत्वाऽध्यस्कन्दद् वशे त्वा ।। १६ ।।

अभिऽवृता । हिरण्येन । यत् । अतिष्ठः । ऋतऽवरि । अश्वः । समुद्रः । भूत्वा । अधि । अस्कन्दत् । वशे । त्वा ।। १६ ।।

**ऋतावरि** यज्ञस्य आश्रयभूते वशे ! **यत्** यदा त्वं **हिरण्येन** सौवर्णेन ज्योतिषा **अभीवृता** प्रावृता **अतिष्ठः** स्थितवती तदा हे वशे ! **समुद्रः** अन्तरिक्षम् **अश्वः भूत्वा** वाजिरूपं धारयित्वा **त्वा अधि** त्वाम् अधिकृत्य **अस्कन्दत्** आगतवान् [समीपमागच्छत् । तदुपरि स्थित्वा त्वं प्रानृत्यदिति भावः । ततः अश्वीभूत्वा वडवा भूत्वा समुद्रं प्रविश्यानृत्यत् । सूर्योऽश्वरूपं सन्धार्य अन्तरिक्षसमुद्रम् अस्कन्दत् एवं प्रतीयते । यतः त्वं अग्नीमुखी वडवा भूत्वा मन्ये समुद्रं प्रविशसि इति तेजोऽतिरेकदृष्ट्या उत्प्रेक्ष्यते ।] ॥ १६ ॥

**तद् भद्राः सम॑गच्छन्त वशा देष्ट्र्यथो॑ स्वधा ।**
**अथ॑र्वा यत्र॑ दीक्षितो बर्हिष्यास्त॑ हिरण्यये॑ ॥ १७ ॥**

**तत् । भद्राः । सम् । अगच्छन्त । वशा । देष्ट्री॑ । अथो इति । स्वधा । अथ॑र्वा । यत्र॑ । दीक्षितः । बर्हिषि॑ । आस्त॑ । हिरण्यये॑ ॥ १७ ॥**

**यत्र दीक्षितः** दीक्षामधिगतो **अथर्वा हिरण्यये** हिरण्यवत् विद्योतमाने **बर्हिषि** आसने स्थितो भवति **तत्** तदा तत्र **भद्राः** भद्रपुरुषाः देवा वा, **देष्ट्री** आदेशं प्रदात्री **वशा अथो** अपि च **स्वधा** अन्नम् एते सर्वे **समगच्छन्त** संगता अभूवन् ॥ १७ ॥

**वशा माता रा॑जन्यस्य वशा माता स्व॑धे तव॑ ।**
**वशाया॑ यज्ञ आयु॑धं तत॑श्चित्तम॑जायत ॥ १८ ॥**

**वशा । माता । राजन्यस्य । वशा । माता । स्वधे । तव॑ । वशायाः॑ । यज्ञे । आयु॑धम् । तत॑ः । चित्तम् । अजायत ॥ १८ ॥**

**वशा** धेनुः **राजन्यस्य** क्षत्रियस्य **माता** जननी वर्तते । हे **स्वधे** ! अन्नदेवि ! इयं वशा **तव** अपि **माता** विद्यते । अस्याः वशायाः कृते यज्ञः आयुधं शस्त्रतुल्यमस्ति, शास्त्रपद्धत्या यज्ञे कृते न कोऽप्यसुरः वशां धर्षितुं शक्नोतीत्यर्थः । **वशायाः** वशातः **यज्ञः आयुधम्** यज्ञरूपमायुधम्, उदपद्यत इति शेषः । **ततः** तस्मात् **चित्तम्** चेतः **अजायत** अभवत् । वशाधेनोः बलं बुद्धिश्चेत्युभयं जायत इत्यर्थः । अत्रायमभि-

सन्धिः—पदपाठे 'यज्ञे' इति पदम्। अस्माभिः 'यज्ञ' इति पदपाठमादायात्र व्याख्यातं व्याख्यानसौकर्याय। दुग्धाज्याधीनत्वात् यज्ञस्य वशातो यज्ञसमुद्भवोऽपि सङ्गच्छत इति ॥ १८ ॥

ऊर्ध्वो बिन्दुरुदचरद् ब्रह्मणः ककुदादधि।
ततस्त्वं जज्ञिषे वशे ततो होताऽजायत ॥ १९ ॥

ऊर्ध्वः। बिन्दुः। उत्। अचरत्। ब्रह्मणः। ककुदात्। अधि।
ततः। त्वम्। जज्ञिषे। वशे। ततः। होता। अजायत ॥ १९ ॥

ब्रह्मणः परमेष्ठिनः ककुदात् अधि उन्नतप्रदेशात् बिन्दुः ऊर्ध्वम् ऊर्ध्वाभिमुखः सन् उदचरत् उदगच्छत्। हे वशे! ततः तस्मात् ऊर्ध्वस्थितात् बिन्दोः त्वं जज्ञिषे समुत्पन्ना। ततः तस्मात् होता देवनामाह्वाता, अग्निः अजायत जनिं लेभे ॥ १९ ॥

आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो बलं वशे।
पाजस्याज्जज्ञे यज्ञ स्तनेभ्यो रश्मयस्तव ॥ २० ॥

आस्नः। ते। गाथाः। अभवन्। उष्णिहाभ्यः।
बलम्। वशे। पाजस्यात्। जज्ञे। यज्ञः। स्तनेभ्यः।
रश्मयः। तव ॥ २० ॥

हे वशे! ते आस्नः तव मुखात् गाथाः गानयोग्या वेदवाचः अभवन् समुत्पन्नाः। गाथा 'गै शब्दे' (९१७ भ्वा:०) इत्यस्मात् 'उषिकुषिगार्तिभ्यः स्थन्' (उणा० २.४) इत्यनेन स्थन्। 'गाथा वाङ्नाम' (निघ० १.११)। ते उष्णिहाभ्यः ग्रीवास्थनाडीभ्यः बलं सामर्थ्यमभवत्। पाजस्यात् ते उरसः यज्ञः जज्ञे समुत्पन्नः च तव ते स्तनेभ्यः रश्मयः किरणाः प्राभवन् ॥ २० ॥

ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तव।
आन्त्रेभ्यो जज्ञिरे अत्रा उदरादधि वीरुधः ॥ २१ ॥

ईर्माभ्याम्। अयनम्। जातम्। सक्थिऽभ्याम् – च।

वशे । तव । आन्त्रेभ्यः । जज्ञिरे । अत्राः । उदरात् । अधि । वीरुधः ॥ २१ ॥

हे वशे ! तव ईर्माभ्याम् बाहुभ्यां पूर्ववर्तिपादाभ्यामित्यर्थः, च पुनः सक्थिभ्यां जङ्घाभ्याम् अयनं गतिः गमनं वा सूर्यस्य उत्तरायण-दक्षिणायणरूपं जातम् समुत्पन्नम् । तव आन्त्रेभ्यः अत्राः भोजन-पदार्थाः, अत्तारो जीवा वा । 'अद भक्षणे' क्त्रः, च तव उदरात् वीरुधः लतावानस्पत्यादयः अधिजज्ञिरे समुत्पन्नाः ॥ २१ ॥

यदुदरं वरुणस्यानुप्राविशथा वशे ।
ततस्त्वा ब्रह्मोदह्वयत् स हि नेत्रमवेत् तव ॥ २२ ॥

यत् । उदरम् । वरुणस्य । अनुऽप्राविशथाः । वशे । ततः । त्वा । ब्रह्मा । उत् । अह्वयत् । सः । हि । नेत्रम् । अवेत् । तव ॥ २२ ॥

हे वशे ! यत् यदा त्वं वरुणस्य उदरम् अन्तः अनुप्राविशथाः अनुप्रविष्टा, ततः तदा त्वा त्वाम् ब्रह्मा उद् अह्वयत उच्चैराह्वयत्, हि यतः सः ब्रह्मा तव नेत्रं त्वदीयां नेतृशक्तिम् अवेत् अजानात् ॥ २२ ॥

सर्वे गर्भादवेपन्त जायमानादसूस्वः ।
ससूव हि तामाहुर्वशेति ब्रह्मभिः क्लृप्तः स ह्यस्या बन्धुः ॥ २३ ॥

सर्वे । गर्भात् । अवेपन्त । जायमानात् । असूस्वः । ससूव । हि । ताम् । आहुः । वशा । इति । ब्रह्मऽभिः । क्लृप्तः । सः । हि । अस्याः । बन्धुः ॥ २३ ॥

असूस्वः अप्रसवस्वभावायाः वन्ध्यायाः तस्याः वशायाः जायमानात् स्वयं उत्पद्यमानात् गर्भात् सर्वे जना अवेपन्त कम्पिताः बभूवुः । यतो हि वन्ध्यायाः गर्भः किल अस्वाभाविकः । अपशकुनश्चायं यत् सा प्रसूते । हि निश्चयेन सा ससूव प्रसवमकरोत् गर्भं जनयामास, अतः सर्वे तां वशा इति यतः स्वाधीनप्रसवा, अतः वशा-नाम्ना आहुः कथयन्ति । सः अयं गर्भः ब्रह्मभिः वेदमन्त्रैः क्लृप्तः तव उदरे स्थापितः,

न वृषभेणेति । सः हि स गर्भ एव अस्याः वशायाः बन्धुः पुत्रत्वेन बन्धनहेतुः ॥ २३ ॥

युध एकः सं सृजति यो अस्या एक इद् वशी ।
तरांसि यज्ञा अभवन् तरसां चक्षुरभवद् वशा ॥ २४ ॥

युधः । एकः । सम् । सृजति । यः । अस्याः । एकः । इत् । वशी । तरांसि । यज्ञाः । अभवन् । तरसाम् । चक्षुः । अभवत् । वशा ॥ २४ ॥

एकः अद्वितीयः परमेश्वरः युधः योद्धॄन् सं सृजति समुत्पादयति, उत्पादयितुमर्हति, यः अस्याः वशाया एक इत् एक एव, केवलः वशी वशीकर्ता स्वामी भवति । तेषां योद्धॄणां तरांसि शक्तयो बलानि वा, एव यज्ञा यज्ञरूपाः अभवन् सञ्जाताः । वशा धेनुः तेषां तरसां बलानाम्, 'तरः बलनाम' ( निघ० २.९ ), शक्तीनां चक्षुः प्रज्ञापिका अभवत् जाता ॥ २४ ॥

वशा यज्ञं प्रत्यगृह्णाद् वशा सूर्यमधारयत् ।
वशायामन्तरविशदोदनो ब्रह्मणा सह ॥ २५ ॥

वशा । यज्ञम् । प्रति । अगृह्णात् । वशा । सूर्यम् । अधारयत् । वशायाम् । अन्तः । अविशत् । ओदनः । ब्रह्मणा । सह ॥ २५ ॥

वशा यज्ञं दुग्धादिप्रदानद्वारा प्रत्यगृह्णात् अधारयत् । वशा सूर्यं दिवाकरमपि अधारयत् अदधात् । ओदनः भक्तं तदुपलक्षितानि सर्वान्नानि च ब्रह्मणा वेदमन्त्रराशिना सह वशायाम् अन्तः मध्ये अविशत् प्रविष्टानि । सर्वमन्त्रादिकं वशाधीनं येन ब्राह्मण्यमुपजायते इत्यर्थः ॥ २५ ॥

वशामेवामृतमाहुर्वशां मृत्युमुपासते ।
वशेदं सर्वमभवद् देवा मनुष्या३ असुराः पितर ऋषयः ॥ २६ ॥

वशाम् । एव । अमृतम् । आहुः । वशाम् । मृत्युम् । उप । आसते । वशा । इदम् । सर्वम् । अभवत् । देवाः । मनुष्याः । असुराः । पितरः । ऋषयः ॥ २६ ॥

विद्वांसो **वशाम् एव अमृतम्** अमृतस्वरूपिणीम् **आहुः** कथयामासुः । ते **वशाम्** वशाधेनुम् **मृत्युम्** मृत्युरूपेणापि **उपासते** । **वशा** वशाधेनुरेव **इदं सर्वम् देवाः, मनुष्याः, असुराः, पितरः ऋषयः** इति **अभवत्** एतत् सर्वमभवत् । एतेषां सर्वेषां वशाधीनैव सत्ता, अतः इदं सर्वं वशा एवेति भावः ॥ २६ ॥

य एवं विद्यात् स वशां प्रति गृह्णीयात् ।
तथा हि यज्ञः सर्वपाद् दुहे दात्रेऽनपस्फुरन् ॥ २७ ॥

यः । एवम् । विद्यात् । सः । वशाम् । प्रति । गृह्णीयात् । तथा । हि । यज्ञः । सर्वऽपात् । दुहे । दात्रे । अनपऽस्फुरन् ॥ २७ ॥

**यः एवम्** इत्थं **विद्यात्** जानीयात्—अमृतमृत्युरूपे वशाया एवेति, वशैव देव-मनुष्य-पित्र्यादिरूपेषु परिणता, एवं सर्वमिदं प्राणिजगत् वशारूपमेवेति, **सः** स एव पुरुषः **वशां प्रतिगृह्णीयात्** वशाया दानं स्वीकुर्यात्, गृह्णीयात् । **हि** यतः **तथा** तथा सत्येव एवंविदे **दात्रे** दानशीलाय, दाशुषे पुरुषाय **सर्वपात् यज्ञः** पादेनैकेनाप्यन्यूनः समग्ररूपः गोदानयज्ञः **अनपस्फुरन्** स्फुरतां त्यजन् नञ्पूर्वात् 'स्फुर सञ्चलने' इत्यस्मात् शतृप्रत्ययः, निश्चलं दृढं यथा स्यात् तथा **दुहे** सर्वमिष्टं ददाति ॥ २७ ॥

तिस्रो जिह्वा वरुणस्यान्तर्दीद्यत्यासनि ।
तासां या मध्ये राजति सा वशा दुष्प्रतिग्रहा ॥ २८ ॥

तिस्रः । जिह्वाः । वरुणस्य । अन्तः । दीद्यति । आसनि । तासाम् । या । मध्ये । राजति । सा । वशा । दुःऽप्रतिग्रहा ॥ २८ ॥

विराड्रूपा वशा वरुणस्य जिह्वात्मना प्रस्तूयते—**वरुणस्य** वारयितुः, संग्रहितुर्वरुणदेवस्य **आसनि अन्तः**, मुखमध्ये **तिस्रः जिह्वा दीद्यति** दीप्यन्ते, 'दीदयतिर्ज्वलतिकर्मा' (निघ० १.१६)। दिवादित्वम् एकवचनं च छान्दसम्। **तासां** जिह्वानां **मध्ये या राजति** प्रकाशते, मध्यमा जिह्वेत्यर्थः, **सा वशा** विद्यते। सा च **दुष्प्रतिग्रहा** दुःखेन ग्रहीतुं शक्या। तिस्रो जिह्वा अत्र सत्त्वरजस्तमोरूपाणि निगीर्य अध्यवसिता अतिशयोक्तिमाख्यायन्ते। राजसी मध्या जिह्वा, सा कथं नाम वशीकर्तुं शक्येति मन्त्रस्य तात्पर्यम्। रजोगुणेनैव सर्वं जगत् परिचाल्यते, सर्वं वासनादिकमपि रजोगुणस्य सन्ततयः। सत्त्वतमसी पुनर्निष्क्रिये, रज एव सक्रियः सन् उभे सञ्चालयतीति रहस्यम् ॥ २८ ॥

**चतुर्धा रेतो अभवद् वशायाः।**
**आपस्तुरीयममृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम् ॥ २९ ॥**

**चतुःऽधा। रेतः। अभवत्। वशायाः। आपः। तुरीयम्। अमृतम्। तुरीयम्। यज्ञः। तुरीयम्। पशवः। तुरीयम् ॥ २९ ॥**

सर्वजगज्जननीरूपेण वशा प्रस्तूयते—**वशायाः** धेनोः **रेतः** वीर्यं विभज्य **चतुर्धा अभवत्** चतुर्षु विभागेषु परिणतमभवदित्यर्थः। तत्र **आपः** जलतत्त्वं **तुरीयं** चतुर्थांशः, **अमृतं तुरीयम्** चतुर्थांशः, **यज्ञः** सृष्टियज्ञो देहयज्ञो वा **तुरीयम्** तृतीयश्चतुर्थांशः, **पशवः** मनुष्यादयः प्राणिनश्च **तुरीयम्** तुरीयश्चतुर्थांशः। एवं चतुर्षु भागेषु व्यभजतो वशाया रेत एव निखिलं जगत् समभवदित्यर्थः ॥ २९ ॥

**वशा द्यौर्वशा पृथिवी वशा विष्णुः प्रजापतिः।**
**वशाया दुग्धमपिबन्त्साध्या वसवश्च ये ॥ ३० ॥**

**वशा। द्यौः। वशा। पृथिवी। वशा। विष्णुः। प्रजाऽपतिः। वशायाः। दुग्धम्। अपिबन्। साध्याः। वसवः। च। ये ॥ ३० ॥**

सर्वे लोकाः देवाश्च विराड्रूपाया वशाया एव विस्तार इत्याह— **द्यौः** द्युलोको **वशा, पृथिवी** पार्थिवो लोकोऽपि **वशा**। आद्यन्तयोर्ग्रहणेन मध्यपतितस्य ग्रहणमौत्सर्गिकमिति अनुक्तोऽपि अन्तरिक्षलोको वशा एवेति बोध्यम्। एवम् **विष्णुः प्रजापतिः** अपि वशा एव। विष्णुः सर्वा देवता, सर्वदेवमयस्य विष्णोर्नामिग्राहं कीर्तनेन शिष्टाश्च सर्वे देवा अपि वशा एव, तस्या एव सन्ततयो बोध्याः। ये **साध्याः** देवाः **च वसवः** अष्टौ वसवस्ते सर्वे **वशाया दुग्धम् अपिबन्** पीतवन्तः। इत्थम् अप्रसूता वन्ध्याऽपि वशा दुग्धं ददातीति तस्या लोकोत्तरत्वमभिव्यज्यते॥ ३०॥

**वशायां दुग्धं पीत्वा साध्या वसवश्च ये।**
**ते वै ब्रध्नस्य विष्टपि पयो अस्या उपासते॥ ३१॥**

**वशायाः। दुग्धम्। पीत्वा। साध्याः। वसवः। च। ये। ते। वै। ब्रध्नस्य। विष्टपि। पयः। अस्याः। उप। आसते॥ ३१॥**

**साध्याः च वसवः** देवाः अस्याः **वशाया दुग्धं पीत्वा ब्रध्नस्य विष्टपि** स्वर्गशिखरे आदित्यमण्डले वा गत्वा **अस्या** वशायाः **पयः** दुग्धम् **उपासते** स्मरन्ति—अहो कियत् पुष्टिकरं स्वादीयञ्चेति। यद्वा सेवन्ते, इत्येवार्थः साधुः, सोमरूपापन्नस्य तस्य तत्रापि सम्भवात्। ब्रध्नस्य 'तद्दैव्यं क्षत्रं तद्ब्रध्नस्य विष्टपम् (तै० ब्रा० ३.८.१०.३) 'असौ वा आदित्यो ब्रध्नः' (तै० ब्रा० ३.९.४.१) (शत० ब्रा० १३.२.६.१)॥ ३१॥

**सोममेनामेके दुह्रे घृतमेक उपासते।**
**य एवं विदुषे वशां ददुस्ते गतास्त्रिदिवं दिवः॥ ३२॥**

**सोमम्। एनाम्। एके। दुह्रे। घृतम्। एके। उप। आसते। ये। एवम्। विदुषे। वशाम्। ददुः। ते। गताः। त्रिऽदिवम्। दिवः॥ ३२॥**

**एके** केचन **एनाम्** वशायाः, पञ्चम्यर्थे द्वितीया **सोमं** सोमरसं **दुह्रे** गृह्णन्ति। **एके** अन्ये केचन अस्याः **घृतम्** आज्यादिकं **उपासते** सेवन्ते। **ये** जनाः **एवं विदुषे** इत्थं वशामाहात्म्यज्ञाय **वशां ददुः** वशां धेनुं ददति, वशा-गोदानं कुर्वन्ति **ते दिवः** द्युलोकस्य **त्रिदिवं** त्रिविष्टपं **गताः** संप्राप्ताः इत्येव 'मन्यताम्' इति शेषः, गमिष्यन्तीति वा ॥ ३२ ॥

**ब्राह्मणेभ्यो वशां दत्त्वा सर्वांल्लोकान्त्समश्नुते ।**
**ऋतं ह्यस्यामार्पितमपि ब्रह्माथो तपः ॥ ३३ ॥**

**ब्राह्मणेभ्यः । वशाम् । दत्त्वा । सर्वान् । लोकान् । सम् । अश्नुते । ऋतम् । हि । अस्याम् । आर्पितम् । अपि । ब्रह्म । अथो इति । तपः ॥ ३३ ॥**

**ब्राह्मणेभ्यः** ब्रह्मविद्भ्यः **वशां दत्त्वा** वशादानं कृत्वा प्रदाता एतान् आकाशे दृश्यमानान् अदृश्यान् वा **सर्वान् लोकान् समश्नुते** प्राप्नोति। **हि** यतः **अस्यां** वशायाम् **ऋतं** जगच्चालकम् ऋततत्त्वम्, **अपि** च **ब्रह्म अथो** च **तपः** एतत् सर्वम् **आर्पितम्** संस्थितं विद्यते ॥ ३३ ॥

**वशां देवा उप जीवन्ति वशां मनुष्या उत ।**
**वशेदं सर्वमभवद् यावत् सूर्यो विपश्यति ॥ ३४ ॥**

**वशाम् । देवाः । उप । जीवन्ति । वशाम् । मनुष्याः । उत । वशा । इदम् । सर्वम् । अभवत् । यावत् । सूर्यः । विऽपश्यति ॥ ३४ ॥**

## ॥ इति अथर्ववेद-संहितायां दशमं काण्डम् ॥

विराड्रूपेणैव वशामाहात्म्यमुपसंहरति—**देवाः** इन्द्रादयः **वशाम् उपजीवन्ति** वशां सम्प्राप्य जीवनं धारयन्ति। **उत** अपि च **मनुष्याः**

अपि वशामुपजीवन्ति, वशाधृतजीवना इति यावत्। **वशा** वशाधेनुरेव **इदं सर्वं जगत् अभवत्। सूर्यः विपश्यति** यावत्प्रदेशपर्यन्तं सूर्यदर्शनं जायते, सूर्यप्रकाशो दृष्टिगोचरो भवति। वशा किल सर्वसृष्टिरूपेण परिणतेति तत्त्वम् ॥ ३४ ॥

**॥ इति अभिनवसायणभाष्ये दशमं काण्डम् ॥**